## No. 1055. कुसुमाञ्जलिव्याख्या ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 27. Lines, 7—8 on a page. Extent, 1215 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Purushottama Nyáyaratna. Appearance, old. Prose. Correct. Notes on the margin.

*Kusumáñjali-káriká-vyákhyá* alias *Kusumánjali-vyákhá.* A commentary on the Kusumáñjali of Udayana A'chárya. By Haridása Nyáyálañkára Bhaṭṭáchárya. Two editions of this work have appeared in Calcutta, one bearing date 1769, and the other edited by Professor Cowell in his edition of the Kusumáñjali. Hall's Contributions, p. 83.

Beginning. ईषदीषदनधीतविद्यया तातमात्मुदमाविवर्द्धयन् ।
क्षेपणाय भवकर्मजन्मनां कोऽपि गोपतनयो नमस्यते ॥
इष्टदेवतासङ्कीर्त्तनं ब्रह्मप्रतिपादकसच्छब्दप्रयोगात्मकञ्च मङ्गलं कुर्वन् ग्रन्थनामाह । सत्पक्षप्रसरः——

End. नावासयेत्ततः किमस्माकम् ॥०॥

Colophon. इति महामहोपाध्यायश्रीहरिदासन्यायालङ्कारभट्टाचार्य्यविरचिता कुसुमाञ्जलिव्याख्या समाप्ता ॥

विषयः । कुसुमाञ्जलेर्व्याख्या ।

---

## No. 1056. व्याख्याप्रकाशः ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 9. Lines, 9 on a page. Extent, 546 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Purushottama Nyáyaratna. Appearance, fresh. Prose. Generally correct.

*Vyákhyá-prakás'a.* A gloss on the last named work. Anonymous. This is reported by the pandit who examined it to be distinct from the Kusumánjali-prakás'a of Varḍhamána Upádhyáya. Hall's Contributions, p. 83.

Beginning. प्रारम्भपत्रं नास्ति । द्वितीयपत्रारम्भे "यक विषयतायां ग्टहत्वत्त्विप्रकारतानिरूपितदेवदत्तादिविषयताकप्रमात्वविरुद्धत्वे सति——

End. यस्मादित्यस्य प्रश्नेष्वयः। शङ्का तु एष वेदप्रामाण्यसंशयोद्भेदेन कलङ्को येषां तैरपरै बौद्धादिभिः किं किमनिष्टमिति ॥

Colophon. इति चतुर्थस्तवकव्याख्याप्रकाशः ॥

विषयः। कुसुमाञ्जलेर्व्याख्यानाम्नीटीकाया व्याख्यानं।

---

## No. 1057. सिद्धान्तमुक्तावलीव्याख्या।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 50. Lines, 8 on a page. Extent, 2,700 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Purushottama Nyáyaratna. Appearance, fresh. Prose. Generally correct.

*Siddhánta-muktávalí-vyákhyá* alias *Siddhánta-muktávalí-prakás'a, Nyáya-muktavalí-prakás'a, Muktávalí-dípiká, Muktávalí-kirana.* A gloss on the Siddhánta-muktávalí, which itself is a commentary on the Bháshá-parichchheda of Haridása. By Mahádeva, son of Válakrishna. It is said that the father commenced this work under the last name, and the son completed it and gave it the 2nd name "which himself or others have expanded or exchanged as above." Hall's Contributions, p. 74. The work is common enough.

Beginning. लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवक्त्राम्बुजात्।
ज्ञात्वाशेषमतं मितेन वचसा सिद्धान्तमुक्तावलीं
गूढार्थां तनुते यथामति महादेवः परेषां कृते ॥

End. हेत्वाभासानिति।———ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादावव्याप्त्यापत्तेः। (इतोऽलिखितमित्यसम्पूर्णम्)।

विषयः। भाषापरिच्छेदस्य टीकायाः सिद्धान्तमुक्तावलीनाम्न्या व्याख्यानम्।

---

## No. 1058. कलापसङ्ग्रहः।

Substance, country-made yellow paper, 12 × 5 inches. Folia, 33. Lines, 10 on a page. Extent, 742 s'lokas. Character, Bengali. Date, Sk. 1652, Place of deposit, Navadvípa, Purushottama Nyáyaratna. Appearance, old. Prose. Correct. Notes on the margin.

*Kalipa-sangraha.* An abridgment of the Sanskrit Grammar called Kalápa. Anonymous.

Beginning. प्रणम्य परमात्मानं शब्दब्रह्मस्वरूपिणम्।
कलापसङ्ग्रहं कुर्वे बालानां हितकाम्यया ॥ आदिचान्तवर्णाः।

End. कृतसुत्कलं कृत्वैव कात्यायनेनोक्तम् "ष्टचादिवदमी रूढ़ाः कृतिनाम कृताः कृतम् ॥ इत्युत्तरः पादः ॥

Colophon. इति कलापसङ्ग्रहः समाप्तः ॥ अत्रैव च शेषपङ्क्तिचतुष्टये व्याकरणशास्त्रीयसञ्ज्ञादिपारिभाषिकशब्दानां नवानां नवलक्षणानि सन्ति। यथा——— १, सञ्ज्ञायते यया सा सञ्ज्ञा। २, सञ्ज्ञायते येन स सञ्ज्ञः। ३, पदयोः पदानां वा मेलनं सन्धिः। ४, वस्तुवाचकाः शब्दाः। ५, कर्त्रादि करोतीति कारकः। ६, समासः सन्धिवत्। ७, क्रियत्प्रत्ययान्तस्तेषु शब्देषु तेषां शब्दानां वा हितस्तद्धितः। ८, सम्यक् कथयतीत्याख्यातः। ९, धातुं शब्दं करोतीति कृत्।

विषयः। कलापव्याकरणस्य विशेषप्रयोजनीयसूत्राणि सोदाहरणानि इह सङ्गृहीतानि।

---

## No. 1059. कोमलकोषसङ्ग्रहः।

Substance, country-made yellow paper, 12 × 5 inches. Folia, 17. Lines, 10 on a page. Extent, 382 s'lokas. Character, Bengali. Date, SK. 1652. Place of deposit, Navadvípa, Purushottama Nyáyaratna. Appearance, old. Verse. Correct.

*Komala-kosha-sangraha.* A Sanskrit vocabulary compiled from the works of Vopálita, Rantideva, author of the Ratna-kosha, Bháguri, Pola, Vararuchi, Rudra, Amara Datta, author of the Dvirúpakosha, Govardhana, authors of the Ratnamálá and of the Visvakosha, Halá-yudha, authors of the S'abdárnava, S'abdamálá, Anekártha-dhvani-mañjarí. Nánártha, and S'abdakosha, Hadda-chandra, Sas'vata, Subháṅga, Rabhasa Siṅha, Gangádhara, Ajaya, Vyáḍhí, Dharaṇi, and the author of Harakávalí. By Tírtha Svámí.

Beginning. नामानुशासनं वक्ष्येत्यल्पान्मूर्खत्वशान्तये।
लिङ्गभेदः क्वचित् ख्यातः समानार्था उपेक्ष्यते ॥

पुराणागमवेदस्य योगार्थवत्मनोऽपि च ।
प्रचरद्रूपशास्त्रेषु ये शब्दा अनुदाहृताः ॥
लिङ्गभेदो न घटतेऽप्येकद्विवचनादिकम् ।
लन्नाथादि न पूर्वेण लिङ्गमिश्रे त्रिषु द्वयोः ॥
क्वचित् कारणनामानि कार्ये कार्याणि कारणे ।
क्वचिदेकार्थके भेदो भेदे चाभेद दृश्यते ॥
बह्वर्थलाभाय बहुवचनं बहुसङ्गते ।
ब्रह्मब्रह्मः स्वः पुरुष आत्मा धर्मी च पूरुषः ॥

End. अ आ इ ई उ ऊ ऋ ए ओ औ ॐ स्वराव्ययम् ।
पश्यत् कं नकि पश्चाद्धा द्धौ द्धौ द्धौ किमु किन्नु च ॥
एवमन्यत्रान्यत्राधिकवर्णाः क्वचित् क्वचित् ।
सर्वे शब्दाः सर्ववस्तुष्वन्ततो लिङ्गभेदतः ॥
पदान्यसाध्याभासानि साधुविलिङ्गकानि च ।
धृतमानान्यादितत्त्वे शब्दपारो न विद्यते ॥
समालोक्यानेककोषानिदमेव विनिश्चितम् ।
कोषा दोषाय विदुषां गुणाय गौणशालिनाम् ॥
वोपालितो रन्तिदेवो रत्नकोषस्य भागुरिः ।
पोलो वररुची रुद्रोऽमरदत्तो द्विरूपकृत् ॥
गोवर्द्धनो रत्नमाला विश्वकाशो हलायुधः ।
शब्दार्णवः शब्दमालाऽनेकार्थध्वनिमञ्जरी ॥
नानार्थशब्दकोषश्च रुद्रचन्द्रश्च शाश्वतः ।
शुभाङ्को रभसः सिंहो नानार्थध्वनिमञ्जरी ॥
गङ्गाधरोऽजयो व्याडी धरणी हारकावली
ततः कोमलकोषस्तु जातो यतिविवेचितः ॥

Colophon. इति तीर्थस्वामिकृतकोमलकोषसङ्ग्रहः समाप्तः ॥

विषयः । विविधकोषेभ्यः प्रसिद्धशब्दा इह सङ्गृहीताः । (अत्र परिच्छेदादयः प्रायोऽमर-कोषवत् ।)

---

## No. 1060. श्राद्धकल्पः ।

Substance, country-made yellow paper, 19 × 3½ inches. Folia, 27. Lines 6 on a page. Extent, 1012 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Vrajanátha Vidyáratna. Appearance, old, Prose and verse. Correct.

*S'ráddha-kalpa.* Manual for the performance of S'ráddhas, according to the rules of the Sáma Veda. By S'rídatta.

Beginning. स्मृतिग्रन्थपुराणादिभूपगोलकसम्मतम् ।
सतां वाक्यानि चालोक्य छन्दोगश्राद्धमुच्यते ॥

End. पितृमातृसपिण्डाद्यभावेऽथ पतितायास्तस्या अप्यधिकार इति सर्वं समञ्जसम् ॥

Colophon. इति महामहोपाध्यायश्रीश्रीदत्तविरचितः श्राद्धकल्पः समाप्तः ॥

विषयः । सामवेदिनां पार्वणैकोद्दिष्टादिश्राद्धकर्मणो व्यवस्था ।

---

## No. 1061. व्यवहारचिन्तामणिः ।

Substance, country-made yellow paper, 20 × 3½ inches. Folia, 54. Lines, 6 on a page. Extent, 1560 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Vrajanátha Vidyáratna. Appearance, old. Prose and verse. Correct.

*Vyavahára-chintámani.* A treatise on jurisprudence and judicature, in four chapters. By Váchaspati Mis'ra.

Beginning. आराध्य नन्दनन्दनमनुसन्धाय प्रयत्नतो ग्रन्थान् ।
श्रीवाचस्पतिविबुधो व्यवहृतिचिन्तामणिं तनुते ॥

End. पुत्रस्यानुमतौ पितुस्तदनादौ प्रभुत्वमननुमतौ त्वप्रभुत्वमिति समुदायः ॥
इति निर्णयः पादः ॥

Colophon. इति महामहोपाध्यायश्रीवाचस्पतिमिश्रविरचितो व्यवहारचिन्तामणिः समाप्तः ॥

विषयः । अर्थिप्रत्यर्थिभ्यां स्वविवादभञ्जनाय कथं यतितव्यम्, प्राड्विपाकैर्वा तत्र कथं कर्त्तव्यमित्यस्यैवात्रोपदेशः । तदत्र चत्वारः पादाः । प्रथमो भाषपादः पूर्वपक्षपादो वा, अत्रार्थिनो यत्नप्रकार आवेदनपत्रलिखनादिक्रमः; द्वितीय उत्तरपादः, अत्र प्रत्यर्थिन उत्तरदानप्रकारादिकम्; तृतीयः क्रियापादः, अत्र

प्राड्विपाकैः साक्षिग्रहणादिविचारप्रकारादिकम्; चतुर्थो निर्णयपादः, अत्र जयपराजययोरादेशविधानप्रकारादिकञ्चेति ।

---

## No. 1062. विवादचिन्तामणिः ।

Substance, country-made yellow paper, 20 × 3½ inches. Folia, 18. Lines, 6 on a page. Extent, 519 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Vrajanátha Vidyáratna. Appearance, old. Prose and verse. Correct.

*Viváda-chintámaṇi.* The code of procedure in civil cases. By Váchaspati Mis'ra. The work comprises 18 chapters as follows: 1st, Debts; 2, Trusts; 3, Sales of property by other than rightful owners; 4, Coparcenary; 5, Repudiation of gifts; 6, Wages; 7, Contracts; 8, Sales and Purchases; 9, Disputes between landlords and tenants; 10, Boundary disputes; 11, Forgery; 12, Stolen property; 13, Trespass; 14, Disputes regarding religious ceremonies; 15, Disputes regarding sons begot on one's wife by another; 16, Ditto inheritance; 17, Ditto gambling; 18, Ditto giving evidence. The work was printed in Calcutta some fifty years ago. The author was the son of Kes'ava, and lived about three hundred and fifty years ago (S'aka 1423). Unlike the generality of paṇḍits of his country he devoted his attention both to law and philosophy at the same time, and acquired great distinction in both. He wrote several commentaries on standard works on the Nyáya, the Yoga, and the S'ankhya systems of philosophy, and a whole series of manuals on law under the title of Chintámaṇi, besides several independent treatises. "All his works," says Colebrooke, "are held in high and deserved estimation." His son, Lakshmidása, was also an author of some repute.

Beginning. क्षीराब्धेरुज्जिहानां त्रिदशपरिषदि प्रोल्लसद्भ्रूविभङ्गी-
मङ्गीकुर्वन् कटाक्षैस्त्रिभुवनजननीं व्रीड़या नम्रमौलिः ।
देवः पायादपायात् कुसुमशरपरीरम्भसञ्जातभावः
सद्यः स्विद्यत्तरेण स्मितकमलमुखीमाददानः करेण ॥ १ ॥
श्रीकृत्यकल्पद्रुमपारिजातरत्नाकरादीनवलोक्य यत्नात् ।
वाचस्पतिः श्रीपतिनम्रमौलिर्विवादचिन्तामणिमातनोति ॥ २ ॥

End. अथ ऋत्विजि वृते पश्चादन्यं वृणुयात् पूर्ववृतस्यैव दक्षिणां पश्चाद्वृतः किञ्चिन्नभेत्——ऋत्विजोऽपतितस्य (इतः परं न लिखितं ततोऽसमाप्तम्)॥

विषयः। उत्तमर्णाधमर्णादीनां विवादादिनिरूपणम्। अत्राष्टादश परिच्छेदाः। तथा हि—१मे, ऋणादानम्, ऋणग्रहणविषयको वादः। २ये, निक्षेपः स्थापितधनविषयको वादः। ३ये, अस्वामिविक्रयः, अन्यस्य द्रव्यम् अन्येन विक्रीतम् तद्घटितो वादः। ४र्थे, सम्भूयसमुत्थानम्, कतिपयधनिभिर्मिलित्वारब्धे वाणिज्ये यो वादः। ५मे, दत्तस्यानपकर्म, दानं कृत्वा ततोऽनङ्गीकारः। ६ष्ठे, वेतनादानम्, भृतिं कारयित्वा तन्मूल्यादीनामप्रदाननिबन्धनो वादः। ७मे, सम्विद्व्यतिक्रमः, प्रतिज्ञाभङ्गे वादः। ८मे, क्रयविक्रयनिबन्धनो वादः। ९मे, राज्ञा भूस्वामिना वा सह प्रजानां वादः। १०मे, ग्राम-क्षेत्र-भवनादीनां सीमावादः। ११शे, पारुष्यनिमित्तको वादः। १२शे, स्तेयजातवादः। १३शे, साहसम्, बलपूर्वकं परद्रव्यहरणं तन्निमित्तो वादः १४शे, पर्वघटितो वादः। १५शे, क्षेत्रजपुत्रादिविषयको वादः। १६शे, दायानां विभागे वादः। १७शे, द्यूतक्रीड़ाजनितवादः। १८शे, आक्रयः, साक्षिदानादिकार्ये आक्रयनीयानाक्रनीयविषयको वाद इति॥

---

## No. 1033. आत्मप्रबोधोपनिषत्।

Substance, country-made yellow paper, 18½ × 3½ inches. Folium, 1. Lines, 14. Extent, 27 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Rámavilása S'armá. Appearance, old. Prose. Generally correct.

*Átmaprabodha Upanishad.* An apocryphal Upanishad on the divinity of Krishṇa, and on the best mode of worshipping him: attributed to the Atharva Veda.

Beginning. प्रत्यगानन्दं ब्रह्म पूरुषं प्रणवस्वरूपं, अकार उकार मकार इति त्र्यक्षरं प्रणवं तदेतदोमिति यमिष्ट्वा मुच्यते योगी जन्मसंसारबन्धनात्।

End. आत्मप्रबोधोपनिषदं मुहूर्त्तमुपासित्वा न स पुनरावर्त्तते न स पुनरावर्त्तते।

Colophon. आत्मप्रबोधोपनिषत् समाप्ता॥

विषयः। नारायणस्योपासना ब्रह्मधिया, अत्रोपासनायां लक्षितस्य नारायणस्य देवकीपुत्रत्वेनापि भावना वर्त्तते।

---

## No. 1064. श्राद्धविवेकविवृतिः ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 52. Lines, 7 on a page. Extent, 2070 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa Rámavilása S'armá. Appearance, old. Prose. Generally correct.

*S'ráddha-viveka-vivṛiti.* A commentary on Sullpáni's treatise on S'ráddhas, the *S'ráddha-viveka.* By S'ríkrishṇa S'armá.

Beginning. पादाम्बुजे द्वे भुवनावलम्बे प्रणम्य भूयो जगदम्बिकायाः ।
श्रीकृष्णविप्रो विवृतिं वितेने बुधादृते श्राद्धविवेकसङ्गृहे ॥
ग्रन्थारम्भे विघ्नविघाताय देवतानामकीर्त्तनरूपं मङ्गलमाचरन शिष्यप्रवृत्त्यर्थं ग्रन्थस्याभिधेयप्रयोजनसम्बन्धांश्च प्रदर्शयन् शिष्यावधानाय प्रतिजानीते विलोक्येति ॥

End. तेनेति, न च कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीमित्यादिवचनात् चतुर्द्दशीवर्ज्जनेन कथं पञ्चदशश्राद्धानामिति । सामान्यकृष्णपक्षश्राद्धाचतुर्द्दशीवर्ज्जनस्योक्तत्वात् । (इतः खण्डितम्)

विषयः । शूलपाणिकृतश्राद्धविवेकसङ्गृहस्य व्याख्यानम् ॥

---

## No. 1065. महिम्नस्तवटीका समूला ।

Substance, country-made yellow paper, 10 × 3½ inches. Folia, 21. Lines, 8—9—10 on a page. Extent, 500 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Rámavilása S'armá. Appearance, old. Prose and verse. Incorrect.

*Mahimnastava Ṭíká.* A commentary on the popular hymn to S'iva called Mahimnastava. By Bhagiratha Mitra.

Beginning. (द्वादशपत्राणि खण्डितानि ततष्टीकायाः प्रारम्भवाक्यं न लिखितं मूलस्यापि द्वादशश्लोकाः न सन्ति अतस्तस्यादिप्रारम्भवाक्योल्लेखो निष्प्रयोजनीय इति मन्तव्यम् ।)

End. विपाकः परिपूर्णता यस्याल्पबुद्धित्वात् ॥ ३१ ॥
(एकत्रिंशच्छ्लोकपर्य्यन्तस्यैव टीका दृश्यते, ततोऽन्तिमयोः परिचायकफलश्रुत्यात्मकयोर्नास्ति ।)

Colophon. इति श्रीभगीरथमिश्रविरचितमहिम्नस्तवटीका समाप्ता ॥

विषयः। पुष्पदन्तप्रणीतमहादेवस्तुतिव्याख्यानं ।

---

## No. 1066. रथपद्धतिः ।

Substance, country-made yellow paper, $13\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 3. Lines, 8 on a page. Extent, 78 s'lokas. Character, Bengali. Date ? Place of deposit, Navadvípa, Rámavilása S'armá. Appearance, new. Prose and verse. Generally correct.

*Ratha-paddhati.* Rules for the observance of the Car Festival. By Lakshmíkánta Nyáyabhushaṇa Bhaṭṭáchárya. The work was compiled about fifty years ago under the auspices of Mahárájá Girís'achandra Ráya of Krishnanagar, in Nuddea. It opens with an account of a car festival for the goddess Durgá, and then gives the usual rules for the festival in connexion with Jagannátha.

Beginning. श्रीगोपालगिरीशवन्द्यशुभदश्रीमाङ्घ्रिपङ्केरुहं,
नत्वा श्रीलगिरीशचन्द्रनृपतेः क्षौणीशचूड़ामणेः ।
आदेशाद्रथपद्धतिं बुधमनोध्वान्तान्तिकां चन्द्रिकां,
लक्ष्मीकान्तसुधीस्तनोति कलयन् स्मृत्यादिशास्त्रं मुहुः ॥

End. यात्रायाः नवदिनसाध्यत्वात् दशम्यां दक्षिणादिकं कुर्य्यात् ।

Colophon. इति श्रीमहामहोपाध्यायश्रीयुतलक्ष्मीकान्तन्यायभूषणभट्टाचार्य्यैर्विरचिता पण्डितवर्गैः परिशोधिता रथपद्धतिः समाप्ता ॥

विषयः। महादेवीमहोत्सवविधिः, ततो रथप्रतिष्ठायां विधिं दत्वा तस्या प्रयोगः। ततोऽङ्कुरार्पणे विधिः। अधिवासविधितत्प्रयोगौ। ततो द्वितीयावधिदशमीं यावत् नारायणपूजनादिकप्रयोगः।

---

## No. 1067. कामाख्यातन्त्रम् ।

Substance, country-made yellow paper, $15 \times 3$ inches. Folia, 21. Lines, 6 on a page. Extent, 401 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Rámavilása S'armá. Appearance fresh. Verse. Incorrect.

*Kámákhyá Tantra.* An original Tantra of the Kaula class, devoted to the worship of the female emblem with the usual adjuncts of wine, flesh-meat, women, &c. The work comprises nine chapters, the last of which treats of the different kinds of emancipation from the bondage of transmigration recognised by the Tantras.

Beginning. ॐ नमः परदेवतायै । श्रीदेव्युवाच ।
भगवन् सर्वधर्मज्ञ सर्वविद्याप्रियप्रभो ।
सर्वदानन्दहृदय सर्वागमप्रकाशक ॥
श्रुतानि सर्वतन्त्राणि साधनानि च भूरिशः ।
विद्यास्ताः सकला देवाः फलन्ति त्वत्प्रसादतः ॥
सारात्सारतरं तन्त्रं जानासि तद्वद प्रभो ।
अतीवेदं रहस्यानं तेनाहं श्रवणोद्यता ॥
श्रीशिव उवाच । शृणु देवि महाभद्रे मदीयप्राणवल्लभे ।
योनिरूपा महाविद्या कामाख्या वरदायिनी ॥
वरदानन्ददा नित्या महाविभववर्द्धिनी ।
सर्वेषां जननी मापि सर्वेषां तारिणी मता ॥
रमणी चैव सर्वेषां स्थूला सूक्ष्मा सदा शुभा ।
तस्यास्तन्त्रं प्रवक्ष्यामि सावधानावधारय ॥

End. एतत्ते कथितं स्नेहान्न प्रकाश्यं कदाचन ।
गोपनीयं गोपनीयं गोपनीयं सदा प्रिये ॥
पशोरग्रे विशेषेण गोपनीयं विशेषतः ।
भ्रष्टानां साधकानाञ्च सान्निध्ये न वदेदपि ॥
दाम्भिकाय न दातव्यं अभक्ताय विशेषतः ।
मूर्खाय भावहीनाय दरिद्राय ममाज्ञया ॥
दद्याच्छान्ताय शुद्धाय कौलिकाय महेश्वरि ।
कालीभक्ताय शैवाय वैष्णवाय शिवाज्ञया ॥
अद्वैतभावयुक्ताय महाकालप्रजापिने ।
सुराशोधनकायापि शिवाबलिप्रदाय च ॥

Colophon. इति कामाख्यातन्त्रे पार्वतीश्वरसंवादे नवमः पटलः ॥ (नवमपटलान्तमेवेदं)

विषयः । अस्य पटला नव सन्ति, तत्रादौ कामाख्यायाः महादेव्याः तन्मूलकस्यास्य तन्त्रस्य चोत्कृष्टताप्रकीर्त्तनम् । द्वितीये ।—कामाख्यामन्त्रोद्धारः, कामाख्या-

पूजाप्रकारः, योनिपूजा। अथ तत्र देव्या अवस्थानात् तत्पूजया विना महादेव्याः सिद्धिरसम्भव इत्युपक्रम्य तस्याः पूजावश्यकताप्रकथनं किञ्च सामान्ययोनीनां परस्त्रीयोनयः प्रशस्तास्तास्वपि वेश्यायोनेः पूजायां फलप्राशस्त्यकथनम्। तृतीये।—वरमन्त्रोद्धारः तस्य ध्यानं अष्टोत्तरशतयोनिसच्चुम्बनपूर्वकं लिङ्गसंश्लिष्टयोनौ जपप्रकारादिश्च। चतुर्थे।—सद्गुरुलक्षणम्, ज्ञानं यत्र समाभाति स एव सद्गुरुरित्युपक्रम्य ज्ञानस्य विशेषतः प्रशंसनं, पशुगुरु(अधमगुरु)लक्षणं, तस्मान्मन्त्रादिग्रहणे निन्दा, मनुष्याणां दिव्यवीरपशुभेदेन त्रैविध्यकथनं तत्तल्लक्षणञ्च कृत्वा अन्तिमस्य (पशोर्नरस्य) निन्दापुरस्सरं वीरश्रेष्ठत्वखाद्यत्वविधिः, कलियुगे सर्व एव वीरा न तु पशुसम्भावनसम्भाव्या इति निरूपणम। पञ्चमे।—मद्यमांसमत्स्यमुद्रामैथुनात्मकैः पञ्चतत्त्वैः पूजनावश्यकत्वे युक्तिकथनं, तैर्विना पूजाया असिद्धिस्तथा कलौ सर्वशास्त्राणां मध्ये विशेषतः पञ्चतत्त्वविहीनानां ब्राह्मणानां निन्दाकथनम्। षष्ठे —मारणम्, उच्चाटनं, शुक्रशोणितमूत्राणां शुद्धत्वे शिववाक्यम्, ब्रह्मज्ञानब्रह्मज्ञानिनोः प्रशंसा, सवर, सदीक्ष, शुद्ध, वेदपारगब्राह्मणप्रशंसा। सप्तमे।—पूर्णाभिषेकः, पूर्णाभिषेचनकर्म्म कारयितुं गुरुविशेषस्याधिकारितानिरूपणम्, कौलिकब्राह्मणप्रशंसा, यत्र ते निवसन्ति तद्देशोऽपि श्रेयानित्युपक्रमे वाराणसीप्रशंसा, योनिगोपनोपमयाऽभिषेचनगोपनविधिश्च। अष्टमे —मुक्तिनिरूपणप्रस्तावे—षड्दर्शनप्रतिपाद्यमुक्तिस्वरूपस्य निन्दा, ततः सालोक्यसारूप्यसायुज्यनिर्वाणात्ममुक्तिचतुष्कं प्रदर्श्य अन्तिममुक्तेः प्रश्ने, शिवस्य सालोक्यादिचतसृणामपि मुक्तीनां स्वरूपोक्तिः, निर्वाणमुक्तेर्मूर्त्तिविशेषपरिकल्पनेन देवीविशेषसंस्थापनम्, पञ्चतत्त्वैः तस्याश्च सविशेषप्रशंसादिः, कुलद्रव्येषु भक्तेर्मोक्षसाधनताकथनं, कुलज्ञानविधिः, एतन्मन्त्रलाभे प्रशंसा, सर्वशेषे आत्मयोनीन्द्रियमुपमीकृत्य गोप्तुमाज्ञा चेति। नवमे।—पार्वत्या कामाख्यामहादेव्याः स्वरूप-प्रश्ने कृते शिवेन कालीपरत्वेन ब्रह्मपरत्वेन च तदाख्यानं कृतं, ततोऽस्य तन्त्रस्य पठनपाठनश्रवणश्रावणादौ कामावाप्तिकथनं, एतदीयमन्त्रस्य सदृष्टान्तप्रशंसा, एतत्तन्त्राधिकृतदेशस्य रोगादिनाशनेन दस्युप्रभृतिबाह्यभीतिनाशनेन सप्तपुरुषं यावत्सम्पत्तिप्रभृतिप्राप्तिकीर्त्तनेन बहुतरप्रशंसा, सर्वान्ते एतद्रहस्यस्य भूरिशः गोपनविधिरधिकारिनिरूपणच्छलेन उपदेश्यानुपदेश्यविधिश्चेति ॥

---

## No. 1068. अङ्कुरार्पणविधिः ।

Substance, country-made yellow paper, 13½ × 3½ inches. Folia, 3. Lines, 8 on a page. Extent, 78 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Rímavilása S'armá. Appearance, new. Prose and verse. Incorrect.

*Añkurárpaṇa-viddhi.* Ritual for the ceremony of *Añkurárpaṇa*, or the placing of certain grains in a vessel for the purpose of germination: founded on the *S'áradátilaka.* Anonymous.

Beginning. अथाङ्कुरार्पणप्रयोगः। यत्र तत्रोत्सवमण्डपस्योत्तरे पूर्वापरायतां गूढां शालां निर्माय तन्मध्ये शुभमण्डलं कुर्य्यात्।

End. उत्सवेषु च सम्पत्तौ विदध्यादङ्कुरार्पणं।

Colophon. इति शारदातिलोकोक्ताङ्कुरार्पणविधिः समाप्तः।

विषयः। आदौ मण्डलविधिस्तत्प्रयोगस्य, ततः सूत्रेणावेष्टनपूर्वकं पालिकाचतुष्टयस्य पञ्चमुखीपात्रचतुष्टयस्य शरावचतुष्टयस्य च स्थापनम्, पालिकासु हरेः पञ्चमुखीघटिकासु ब्रह्मणः शरावेषु शिवस्य पूजनं, करीषवालुकामृत्तिकाभिर्यथाक्रमं पूरितेषु तत्त्रिविधपात्रेषु शालिश्यामाकान्नवीजानां वपनविधिः, ततोऽभ्युक्षणाच्छादनौ ततो रात्रौ लाजातिलादिबलिः, अङ्कुरार्पणे शारदातिलकोक्तप्रमाणम्।

---

## No. 1069. कामदतन्त्रम्।

Substance, country-made yellow paper, 13½ × 3½ inches. Folia, 6. Lines, 8 on a page. Extent, 216 s'lokas. Character, Bengali. Date ? Place of deposit, Navadvípa, Rámavilása S'armá. Appearance, new. Verse. Incorrect.

*Kámada Tantra.* This MS. is a mere fragment, containing only four chapters from the sixth to the ninth, and wanting the first five, and some unknown number of chapters after the ninth. The sixth treats of the mode in which Kálí should be worshipped; the seventh points out the importance of that worship for salvation in the present age; the eighth illustrates the position assumed by the work by an anecdote in which a

Bráhmaṇa of Kánchipur, Bahuloma by name, obtained salvation by hearing the name of Kálí; and the ninth establishes the necessity of worshipping Kálí on the night of the new moon in the month of Kártika.

Beginning. (प्रथमावधि पञ्च पटला न सन्ति। षष्ठस्य त्वादिवाक्यं तावदित्यम्,)
पार्वत्युवाच। इदानीं श्रोतुमिच्छामि येन काली प्रसीदति।
कलौ केनैव पुष्पेन केन वा बलिना शिव॥ श्रीशिव उवाच।

End. यो नार्चयति मोहेन रुष्टा तस्य महेश्वरी॥

Colophon. इति कामदतन्त्रे नवमः पटलः॥

विषयः। अत्र षष्ठादधिनवमपर्य्यन्ताः चत्वारः पटलाः सन्ति, तत्रादौ षष्ठे——कलौ काल्या एव सिद्धिदात्वं। तस्याः पूजार्थं शिखाहीनजवापुष्पादेर्विधानम्। ततोऽर्ध्यं-सितापराजितापुष्पादेस्तदनु कल्पद्रोणपुष्पादेश्च विधिः। तथा तस्या अर्चने पद्म-विल्वपत्रादेः प्राशस्त्यानुकीर्त्तनम्। विल्वदलं विना शिवयोरर्चनायां फलाभाव-कथनम्। एवं करवीर-धुस्तूर-कुन्द-मल्लिका-केतकी-धातकीप्रभृतीनां बहूनां पुष्पाणां पूजने प्रत्येकस्य फलोद्भावनं। सप्तमे—कलौ कार्य्यकरणाशक्तानां कलुषचेतसामलसानां जनानां तन्त्रपूजादिकं विना काऽन्या उद्धारे गतिरिति प्रश्ने कालीनाम्नः स्मृतिरेव तेषामद्वितीया गतिरिति प्रतिपादितं बाहुल्यात्। अष्टमे।—अत्यन्तपापासक्तकाञ्चीपुरनिवासिबहुलोमाख्यविप्रस्य मरणसमये केवलं कालीत्यक्षरद्वयस्य श्रवणं जातं तत्फलवर्णनम्। नवमे।—कार्त्तिके कालीपूजाया अत्यावश्यकताप्रतिपादनम्॥

---

## No. 1070. शूद्रपद्धतिः।

Substance, palm leaves, 14 × 2½ inches. Folia, 110. Lines, 6 on a page. Extent, 3093 s'lokas. Character, Bengali. Date, Sk., 1440 Place of deposit, Navadvípa, Rámavilása Bhaṭṭácharya. Appearance, decayed. Prose and verse. Generally correct.

*S'údra-paddhati.* A digest of the laws relating to the S'údras. Compiled by Api Pála. Contents, Duties of S'údras; special mantras for S'údras; duties to be attended to in the morning; ablutions; washing of the face; brushing of the teeth; early morning bath; midday bath; offering of water to the manes; worshipping of the gods;

washing of the images of the Deví; ordinary mode of worshipping the same; adoration of the sun; adoration of Vishṇu; adoration of Deví; repetition of the mystic mantra a stated number of times; adoration of the Vis'vedevás; daily s'ráddhas; characteristics of guests; rules for taking the midday meal; duties after the midday meal; articles to be selected or rejected as food; spirituous drinks defined; rules for sleeping; society of women; periodical s'ráddhas; impurity of the person caused by birth or death in one's family; satí; funerals; persons fit to offer oblations to the manes; perpetual impurity of the body. The work is founded on the plan of Kamalákara's digest of the laws relating to the S'údras, entitled the *S'údra-kamalákara*, and traverses very nearly the same ground, but it professes to have been compiled from a work on the subject by Soma Mis'ra. The MS. bears date S'áka 1440, and is 356 years old.

Beginning. ——————————बालशीतांशुधारी,
गौरीवक्त्रोजखेलन्मृगमयजनितोरस्थलीभूतवेद्यः ।
विभ्रान्त्या यस्य (विद्युद्)द्युतिकपिलजटामण्डले———
रचयत्यपिपालोऽसौ धर्मशीलो महामतिः ।
श्रीसोममिश्रमादाय प्रयत्नाच्छूद्रपद्धतिम् ॥

End. अशौचं सर्वकार्य्येषु गृहे भवति सर्वदा ।
दानं प्रतिग्रहः स्नानं सर्व्वन्तस्य वृथा भवेत् ॥

Colophon. इत्यपिपालकारिता शूद्रपद्धतिः समाप्ता ॥

विषयः। तत्रादौ शूद्रधर्म्मकथनम्, मन्त्रादिविधिनिषेधौ, ततो नित्याचारेषु शूद्राणां मूत्रपुरीषोत्सर्गविधिः, शौचविधिः, आचमनविधिः, दन्तधावनम्, प्रातःस्नानम्-स्नानविधिः, तर्पणविधिः, तर्पणोत्तरकर्म्म-सामान्यदेवतापूजा, देवीस्नानविधिः, सामान्यपूजा, सूर्य्यपूजा, विष्णुपूजा, शिवपूजा, देवीपूजा, जपविधिः, वैश्वदेव-विधिः। नित्यश्राद्धम्। अतिथिस्वरूपम्, भोजनविधिः, तदुत्तरकर्म्म, भोज्या-भोज्यनिर्णयः, मद्यस्वरूपम्, शयनविधिः, मैथुनविधिरित्येते प्रोक्ताः। ततस्तेषा-मेव कर्त्तव्यश्राद्धे तत्कालनिर्णयः, पार्वणादिविशेषश्राद्धस्य प्रयोगः। ततस्तेषामेवा-शौचनिर्णयस्तत्र च जननाशौचादिविशेषेषु व्यवस्थाविशेषः, ततो निर्हरणाद्य-नुमरणव्यवस्था, प्रवेशनादिः, प्रेतक्रियाधिकारिणः, उदकानर्हाः, यावज्जी-वाशौचिनः।

---

## No. 1071. सर्व्वोल्लासतन्त्रम् ।

Substance, country-made yellow paper, 12½ × 4½ inches. Folia, 123. Lines, 8 on a page. Extent, 2214 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridás S'armá. Appearance, old. Prose and verse. Generally correct.

*Sarvollása Tantra.* A Tantra digest of the S'ákta class; it treats of the usual S'ákta tenets and forms of worship, beginning with some definitions of S'ákta terms, and various systems of cosmogony. By Sarvánandanátha.

Beginning. नमः परदेवतायै ॥ प्रणम्य प्रकृतिं नित्यां जगदात्मस्वरूपिणीं ।
सर्वोल्लासं महोल्लासं महोल्लासे वदाम्यहम् ॥
निगमादागमाच्छास्त्राद् भावाचारं समुद्धृतं ।
श्रीसर्वानन्दनाथोक्तं श्रीदेव्याश्चरणाम्बुजे ॥

End. देहान्ते ब्रह्मभाग् भवेत् ॥

Colophon. इति श्रीसर्वानन्दनाथविरचिते सर्वोल्लासे विषष्ट्युल्लासः । समाप्तोऽयं ग्रन्थः ॥

विषयः । प्रथमोल्लासे——प्रकृतिलक्षणं । निगमलक्षणं । आगमलक्षणं । आगमनिगमयोः प्रकाशकथनम् । यामलोत्पत्तिः । शास्त्रोत्पत्तिः । युगभेदे देशाचारः । देवतामूर्त्तिनिरूपणं । वेदोत्पत्तिकथनं । द्वितीये—तन्त्राख्याकथनं । तृतीये—सृष्ट्युत्पत्तिकथनं । चतुर्थे—प्रकारान्तरेण सृष्ट्युत्पत्तिकथनं । पञ्चमे—पुनरन्यप्रकारेण तदेव । षष्ठे—कृत्यप्रकरणम् । सप्तमे—भावप्रशंसा । अष्टमे—त्रिविधभावाचारलक्षणं । नवमे—तन्त्रान्तरीयभावाचारलक्षणं । दशमे—गुरुतन्त्रीयगुरुलक्षणम् । एकादशे—सद्गुरुलक्षणम् । द्वादशे—वैष्णवाचारः । त्रयोदशे—इष्टभक्तिः । चतुर्दशे—बलिदानं । पञ्चदशे—शैवाचारः । षोड़शे—विभावपशुलक्षणं । सप्तदशे—यन्त्रप्रमाणं । अष्टादशे—शाक्ताचारः । ऊनविंशोल्लासे—साधकलक्षणम् । विंशत्युल्लासे—श्रीचक्रस्य स्थान निबोधनं एवं एकविंशत्याद्युल्लासे—श्रीचक्रजातिभेदक्रमेण निरूपणं ज्ञेयम् ।

## No. 1072. पदार्थतत्त्वविवृतिः ।

Substance, country-made yellow paper, 17 × 3½ inches. Folia, 27. Lines, 2—9 on a page. Extent, 956 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridás S'armá. Appearance, fresh. Prose and verse. Correct.

*Padártha-tattva-vivriti.* A commentary on the *Padártha-tattva*, which comprises criticisms by Raghunátha S'iromaṇi on the Vais'eshika categories. By Mádhava Tarkasiddhánta.

Beginning. यो विष्णवे त्रिजगतः प्रणिधाय भारं
स्वाभीष्टया गिरिजया कुतुकी सदैव ।
देवं तमेव प्रणिपत्य पदार्थतत्त्वे
श्रीमाधवो वितनुते विवृतिं सुबोधां ॥

End. कार्य्यत्वञ्च कारणत्वञ्च प्रतियोगित्वादितो भिन्नमित्यर्थः ॥

Colophon. इति श्रीमाधवतर्कसिद्धान्तकृतपदार्थतत्त्वटीका समाप्ता ॥

विषयः । शिरोमणिकृतपदार्थतत्त्वस्य व्याख्यानम् ।

---

## No. 1073. पदार्थतत्त्वनिरूपणम् ।

Substance, country-made yellow paper, 13 × 3½ inches. Folia, 5 Lines, 7—9 on a page. Extent, 135 s'lokas. Character, Bengali, Date, ? Place of deposit, Navadvípa, Haridás S'armá. Appearance, fresh. Prose and verse. Correct.

*Padártha-tattva*, alias *Padártha-tattva-nirúpaṇa*, or *Padártha-tattva-vivechana*, or *Padártha-khaṇḍana*. Criticisms on the Vais'eshika categories, pointing out, from a Nyáya stand-point, which of them are tenable, and which are not. By Raghunátha S'iromaṇi. Hall's Contributions p. 80.

Beginning. अथ पदार्थतत्त्वं निरूप्यते । तत्र दिक्कालौ नेश्वरादतिरिच्येते ।

End. अर्थानां युक्तिसिद्धानां मदुक्तानां विशेषतः ।
सर्वदर्शनसिद्धान्तविरोधेनैव दूषणम् ॥

Colophon. इति पदार्थतत्त्वं समाप्तम् ॥

अर्था निरुक्ताः सिद्धान्तविरोधिना विपश्चिता ।
विना विचारं न त्याज्या विचारयत सादरम् ॥
सर्वशास्त्रार्थतत्त्वज्ञान् नत्वा नत्वा भवादृशान् ।
इदं याचे मदुक्तानि विचारयत सादरम् ॥
रीतिरेषा न दोषाय सेविता पूर्वसूरिभिः ।
यन्निजोक्तिविचाराय याचन्ते विदुषोऽपरान् ॥

विषयः । आन्विक्षिकीशास्त्रमतप्रविष्टस्य कस्यचित् २ खण्डनं कस्यचित् २ मण्डनं सयुक्तिकम् ।

---

## No. 1074. गुणकिरणावलीव्याख्या ।

Substance, country-made yellow paper, 18 × 3½ inches. Folia, 30. Lines, 7—9 on a page. Extent, 1680 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridás Bhaṭṭáchárya, grandson of Mádhava Tarkasiddhánta. Appearance, new. Prose. Generally correct.

*Guṇakiraṇávalí-vyákhyá.* A paraphrase of Vallabha Nyáyáchárya's Guṇakiraṇávalí, a treatise on the leading topics of the Nyáya system. By Raghunátha S'iromaṇi.

Beginning. कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपङ्क्तिः ।
मोहयन्नखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विषदीकृत्य दर्श्यन्ते गुणग्रन्थस्य फक्किकाः ॥
आन्विक्षिकीपण्डितमण्डलीषु सत्ताण्डवैरध्ययनं विनापि ।
मदुक्तमेतत्परिचिन्त्य धीराः निःशङ्कमध्यापनमातनुध्वम् ॥

End. पूर्वसम्बन्धेति, अपेक्षाबुद्ध्युत्पादकद्रव्यचक्षुःसंयोगस्यैव द्वित्वसामान्यज्ञानानि । (इतः खण्डितं)

विषयः । गुणकिरणावल्या व्याख्यानम् ।

---

## No. 1075. न्यायलीलावती ।

Substance, country-made yellow paper, 19 × 3½ inches. Folia, 9 Lines, 6 on a page. Extent, 286 s'lokas. Character, Bengali Date, ? Place of deposit, Navadvípa, Haridása Bhaṭṭáchárya, grandson of Máḍhaba Tarkasidhánta. Appearance, old. Prose. Generally correct.

*Nyáya-lílávatí* alias *Lílávatí*. The elements of the Vais'eshíka system. By Vallabha Nyáyáchárya. The MS. is incomplete. Hall's Contributions, p. 71.

Beginning. नाथः सृजत्यवति यो जगदेकपुत्रप्रीत्या ततः परमनिर्द्दतिमादधाति ।
तस्मै नमः सहजदीर्घकृपानुबद्ध-लब्धचितत्वतनवे पुरुषोत्तमाय ॥
द्रव्यं नाकुलमुज्ज्वलो गुणगणः कर्म्माधिकं स्लाघ्यते
जातिर्विद्युतिभागता न च पुनः स्लाघ्या विशेषा स्थितिः ।
सम्बद्धः सहजो गुणादिभिरयं यत्रास्तु सतप्रीतये
सान्वीक्षालयवेश्मकर्मकुशला श्रीन्यायलीलावती ॥

End. सामर्थ्ये तु धूमस्यापि जठरसाधारणकृशानुमात्रेण व्याप्तिः स्यात् ।
(परिसमाप्तिसूचकं वाक्यं नास्ति ।)

विषयः । द्रव्यादिषट्कपदार्थानां निरूपणम्, विशेषत ईश्वरादिनिरूपणम् ।

---

## No. 1076. न्यायलीलावतीदीधितिः ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia. 6- Lines, 9 on a page. Extent, 374 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridás S'armá. Appearance, old. Prose. Generally correct.

*Nyáya-lílávatí-prakás'a* alias *Nyáya lílávatí-dídhiti*. A commentary on the last. By Vardhamána Upádhyáya. The MS. is incomplete, and contains but a fraction of the entire work which extends to over four thousand s'lokas. Hall's Contributions, p. 72.

Beginning. ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥
षड़ेव पदार्था इत्यवधारणस्य भाष्यादावभावादाक्षेपासङ्गतेराह, इहेति ।

End. अवयविमद्दत्त्वजननात् उत्कर्षो अनुविधानात्। इति० ।

विषयः। न्यायलीलावत्या व्याख्यानम्।

---

No. 1077. न्यायलीलावतीव्याख्या ।

Substance, country-made yellow paper, 19 × 3½ inches. Folia, 23. Lines, 7—9 on a page. Extent, 1288 s'lokas. Character, Bengali. Date. ? Place of deposit, Navadvípa, Haridás S'armá. Appearance, old. Prose. Generally correct.

*Nyáya-lílávati-vyákhyá* alias *Nyáya-lílávatí-prakás'a-dídhiti.* A gloss on Vardhamána's commentary (No. 1076) on the *Nyáya-lílávatí* of Vallabha. By Raghunátha S'iromaṇi.

Beginning. न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान् नत्वा ।
श्रीमता मथुरानाथतर्कवागीशधीमता ॥
विविच्यते फक्किकार्था लीलावत्या विशेषतः ।
आन्विक्षिकीपण्डितमण्डलीषु सत्ताण्डवैरध्ययनं विनापि ।
मदुक्तमेतत् परिचिन्त्य धीराः निःशङ्कमध्यापनमातनुध्वम् ॥

End. न चात्र वैजात्यभेदोऽनुभवसिद्ध इति ध्येयम्। (इतः परं नास्ति)

विषयः। न्यायलीलावत्या व्याख्यानम्।

---

No. 1078. स्मृतिसारः ।

Substance, palm leaves, 14 × 2 inches. Folia, 21. Lines, 4 on a page. Extent, 372 s'lokas. Character, Bengali. Date. ? Place of deposit, Navadvípa, Haridás S'armá. Appearance, old. Verse. Correct.

*Smṛiti-sára.* A digest of the rules regarding the impurity of the person resulting from a birth or death in one's family. By Mahes'a.

Beginning. मुकुन्दचरणं नत्वा स्मृतिसारः प्रयत्नतः ।
क्रियते श्रीमहेशेन बालकानां हितैषिणा ॥ १ ॥

विलोक्य स्मृतिशास्त्राणि व्यवहारोचितञ्च यत्।
व्यवश्यं तत् प्रकर्त्तव्यं विद्यतेऽन्यत्र विस्तरः ॥ २ ॥
तत्र शुचि तत्कालजीविना कर्म्म कर्त्तव्यमिति श्रुतेरशौचस्य यावद्वैदिककर्म्मप्रति-
बन्धकत्वात् तज्ज्ञानमेव प्रथमं कर्त्तुमिति तदेवाभिधीयते।

End. अशौचे संस्पृशेत् स्नेहात् तदाशुच्येन शुध्यति, "तदाशुच्येन" तदीयाशौचेन।
मनुः। असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥

Colophon. इति समाप्तम्॥

विषयः। ग्रन्थभूमिका,——सपिण्डाद्यशौचव्यवस्था; ततो विदेशस्थाशौचस्य, मृत्युविशे-
षाशौचस्य, सद्यः शौचस्य, गर्भस्रावाशौचस्य, बालाद्यशौचस्य, स्त्र्यशौचस्य,
सहानुमरणस्य च व्यवस्था, सर्वान्ते अशौचसङ्कर-व्यवस्था।

---

## No. 1079. आत्मतत्त्वविवेकटीका।

Substance, palm leaves, 12 × 2 inches. Folia, 53. Lines, 5 on a page. Extent, 1325 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Prasannachandra Tarkaratna. Appearance, old. Prose. Correct. Notes on the margin in some places.

*A'tmatattva-viveka-ṭíká.* A paraphrase of the A'tmatattva-viveka, a treatise on psychology. By Raghunátha S'iromaṇi, titularly called Tárkika S'iromaṇi or simply S'iromaṇi.

Beginning. ओं नमः सर्वभूतानि विष्टभ्य परितिष्ठते।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥ १ ॥
निर्णीय सारं शास्त्राणां तार्किकानां शिरोमणिः।
आत्मतत्त्वविवेकस्य भावमुद्भावयत्यमुं॥

End. तस्या निर्वाणं विनाशः स्वयं कालविशेषसहकृतात्मन एवेत्यर्थं इत्यन्ये।

Colophon. इति श्रीमन्महामहोपाध्यायश्रीतार्किकशिरोमणिभट्टाचार्य्यकृतात्मतत्त्वविवेकटीका
समाप्ता।

विषयः। आत्मतत्त्वविवेकस्य यो विषयः स एवास्या अपि, केवलं नानाश्रुतिप्रमाणोद्भावनेन
नानामतखण्डनाखण्डनादिकमेव विशेषः।

---

## No. 1080. गुणप्रकाशः ।

Substance, country-made yellow paper, 16 × 2 inches. Folia, 6. Lines, 5 on a page. Extent, 186 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridása Bhaṭṭáchárya, grandson of Mádhava Tarkasiddhánta. Appearance, new. Prose. Generally correct.

*Guṇapraká's'a* alias *Kiraṇávalí-praká's'a* or *Guṇa-kiraṇávali*. A gloss on the *Kiraṇávalí*, which is a commentary, by Udayana Áchárya, on Pras'astapáda Áchárya's commentary on the Vais'eshika aphorisms. By Vardhamána Upádhyáya. Hall's Contributions, p. 65.

Beginning. एकत्र सन्निपतितासितकण्ठबिम्बमन्यत्र चन्द्रकिरणाह्नितशुभ्रभारं ।
सन्ध्या जलाञ्जलिमनङ्गरिपोर्नमामि हस्तप्रविष्टमिव पुण्यतमं प्रयागम् ॥
नतिवक्नृतेरपि प्रारीप्सितविघ्नविघातकत्वात्तमादौ कृतां निबध्नाति तुष्टेरिति ।

End. यत्र गुणे गुणो नाङ्गीकार्यस्तत्र केवलं गुणत्वं वर्त्तते । (इतः परं नास्ति)

विषयः । गुणकिरणावलीव्याख्यानम् ।

---

## No. 1081. छन्दोगश्राद्धतत्त्वम् ।

Substance, country-made yellow paper, 15 × 2½ inches. Folia, 69. Lines, 6—5 on a page. Extent, 2044 s'lokas. Character, Bengali. Date. Sk. 1497. Place of deposit, Navadvípa, Vishṇuchandra Nyáyaratna. Appearance, decayed. Prose. Correct. Notes on the margin.

*Chhandoga-s'ráddha-tattra.* A digest of the rules regarding s'ráddhas according to the Sáma Veda. By Raghunandana. The author was born at Nadiyá early in the fifteenth century, and wrote his Jyotish Tattva some time after the Sáka year 1421, as he takes that year for a starting point for certain calculations of intercalary days; he was the son of Harihara, and a contemporary of the immediate successors of the great Vaishṇava reformer Chaitanya. In the Introduction to his Malamása Tattva he recorded his resolution to write, under the collective name of *Smriti Tattvas*, twenty-eight separate digests on different topics regarding the civil and canonical laws of the Hindus. They were to include, 1, *Malimhucha* or intercalary months, commonly called *Malamása* the month "stolen" or omitted as "dross" from calculation every 3 years to adjust the lunar with the solar calendar; 2, *Dáyabhága* or inheritance; 3, *Sañskára*,

sacramentary rights; 4, *Suddhi*, mourning; 5, *Práyas'chitta*, expiatory rites; 6, *Udváha*, marriage; 7, *Tithi*, lunar days for the observance of feasts and fasts; 8, *Janmáshṭamí*, the rites to be observed on the anniversary of the birthday of Krishṇa; 9, *Durgápujá*, the ceremony of the worship of Durgá in the month of A's'vina (September—October); 10, *Vyávahára*, judicature; 11, *Ekádasí*, the fast on the eleventh day of the moon; 12, *Jalásayotsarga*, consecration of reservoirs of water; 13, *Rigvedi-vrishotsarga*, the consecration of bulls according to the Rigveda; 14, *Yajurvedivrishotsarga*, ditto according to the Yajur Veda; 15, *Chhandoga-vrishotsarga*, ditto according to the Sáma Veda; 16, *Vrata*, fasts and penances; 17, *Devapratishṭhá*, formation and consecration of images of gods; 18, *Parikshá*, nature of things; 19, *Jyotis*, civil astronomy; 20, *Vástuyága*, rites necessary to be observed when entering a new house; 21, *Dikshá*, investiture of the Brahmanical thread; 22, *A'hnika*, daily prayers; 23, *Kritya*, periodical rites; 24, *Maṭhapratishṭhádi*, consecration of conventual establishments and temples; 25, *S'ripurushottama*, duties and rites to be observed when visiting the Temple of Jagannátha at Puri; 26, *Sáma-vedi-s'ráddha*, S'ráddha according to the Sáma Veda; 27, *Yajurvedi-s'ráddha*, ditto according to the Yajur Veda; 28, *Súdra-kritya*, duties of S'údras. The order in which the books are named was not what the author followed when he compiled the different treatises, for it appears that he died before he completed the 13th in the list, and altogether there are only twenty-seven treatises extant. MSS. of these are common enough in Bengal; there is scarcely a Smriti Paṇdit in the country who has not at least some of them in his possession. Two editions of the works have also been published, one at Serampore in two volumes 8vo. (1835), the other at Calcutta in the puthi form on yellow arsnecised paper. The MS. under notice is, however, worthy of special note, as it is the oldest that has yet come under examination, dating from the S'aka year 1497 = A. D. 1575, or nearly three hundred years ago. The works are of standard authority in Bengal, and for liturgical purposes have almost superseded all others.

Beginning. प्रारम्भे सप्तपत्राणि न सन्ति इति प्रारम्भवाक्यं नास्ति ।

End. अन्त्येष्टिप्रमाणं दानप्रमाणञ्च शुद्धितत्त्वे सम्यगभिहितमिति तत्रैवानुसन्धेयम् ॥

Colophon. वन्द्यघटीयश्रीहरिहरभट्टाचार्यात्मजश्रीरघुनन्दनभट्टाचार्यविरचितं छन्दोगश्राद्धतत्त्वं समाप्तम् ॥

विषयः । श्राद्धस्वरूपप्रयोगादिनिरूपणम् ।

## No. 1082. त्रिपुष्करशान्तितत्त्वम् ।

Substance, country-made yellow paper, 15⅓ × 2½ inches. Folia, 7. Lines, 5 on a page. Extent, 113 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Rámavilása S'armá. Appearance, fresh. Verse. Incorrect.

*Tri-pushkara-s'ánti-tattva.* Rules for the performance of certain funeral rites at a sacred pool called *Tripushkara.* By Raghunandana. This is probably not a separate treatise, but a part of the *Suddhi Tattva;* the exordium however would suggest the idea of its being a distinct work.

Beginning. नत्वा श्रीरामचरणं तापत्रयनिसूदनम् ।
त्रिपुष्करे शान्तितत्त्वं वक्ति श्रीरघुनन्दनः ॥ अथ त्रिपुष्करप्रयोगः ॥

End. कर्म्मान्ते भोजयेद् द्विजानिति चादित्यपुराणाद् ब्राह्मणभोजनमप्यावश्यकमिति ।

Colophon. इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं त्रिपुष्करशान्तौ प्रमाणतत्त्वं समाप्तम् ॥

विषयः । अत्रादौ त्रिपुष्करस्य लक्षणम् । ततस्तत्प्राप्तदृष्टस्य तत्फलत्वेन पुत्रादिमरणानुकीर्त्तनम् । रिष्टिप्रवेशकालानुकीर्त्तनम् । तच्छान्त्यर्थं मृतदिवसावधि-होमप्रतिमादानादिव्यवस्था ।

## No. 1083. मठप्रतिष्ठातत्त्वम् ।

Substance, country-made yellow paper, 15 × 3½ inches. Folia, 16. Lines, 6 on a page. Extent, 371 s'lokas. Character, Bengali. Date, Sk. 1498. Place of deposit, Navadvípa, Rámavilása Bhaṭṭáchárya. Appearance, decayed. Prose and verse. Generally correct.

*Maṭha-pratishṭhá-tattva.* Rules for the consecrations of Maṭhas and the merits of dedicating them for the use of recluses. By Raghunandana. This MS. is nearly as old as No. 1081.

Beginning. चतुर्वर्गप्रदं विष्णुं नत्वा तत्प्रीतयेऽधुना ।
तत्त्वं मठप्रतिष्ठादेर्वक्ति श्रीरघुनन्दनः ॥

End, भोजयेच्च यथाशक्ति पञ्चाशद्वाथ विंशतिम् ।

Colophon. इति श्रीहरिहरात्मजवन्द्यघटीयेत्यादिः ।

विषयः । मठप्रतिष्ठाफलं तत्प्रयोगश्च ।

---

## No. 1084. गुणप्रकाशदीधितिः ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 2. Lines, 9 on a page. Extent, 108 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridása Bhaṭṭácharya, grandson of Mádhava Tarkaratna. Appearance, fresh. Prose. Generally correct.

*Guṇaprakás'a-dídhiti.* A commentary on Vallabha's Gunaprakás'a, a treatise on the principles of the Vais'eshika doctrine. The MS. is a mere fragment. Hall's Contributions, p.

Beginning. ॐ नमः सर्वभूतानीत्यादिः ।

End. न संयोगविभागपद्योर्विशेषपरत्वं । (इतः खण्डितम् )

विषयः । गुणप्रकाशव्याख्यानम् ।

---

## No. 1085. मन्त्रकौमुदी ।

Substance, country-made yellow paper, 14½ × 4 inches. Folia, 112. Lines 7 on a page. Extent, 3479 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridása Tarkaratna. Appearance, old. Prose and verse. Generally correct.

*Mantra-kaumudí.* A manual of mantras for the performance of the different rites, sacrifices, and sacraments necessary to be observed by good Hindus. By Rámakṛishṇa. Most of the mantras are explained, and there is an introduction on the nature of the Hindu S'ástra. This is a better MS. of the work described under No. 1048.

Beginning. नमस्कृत्याखिलैर्मन्त्रैर्वाध्यं श्रीपरमेश्वरम् ।
तन्यते रामकृष्णेन रम्या श्रीमन्त्रकौमुदी ॥ १ ॥

End. सूर्य्यशब्देन सूर्य्याधिष्ठेयं नेत्रयुक्तं खर्णाकारः सूर्य्याख्यं यस्य स भवान् स्वाहा स्वकीयं न हिंसि ॥

Colophon. इति मायाभूरित्यादिस्वर्णसूर्य्यः स्वाहा इत्यन्ता मन्त्रव्याख्या समाप्ता ॥

विषयः । ग्रन्थावतरणिका, वेदस्य चातुर्विध्यम्, विधेश्च चातुर्विध्यम्, पञ्चदेवतानियमः,

आरम्भनियमः, मानसपूजानियमः, घटस्थापने द्रव्यनियमः, घटस्थापनमन्त्रव्याख्या, वेदीनियमः, पञ्चदेवतामन्त्रव्याख्या, अधिवासमन्त्रव्याख्या, तन्नियमश्च, चतुर्द्दशान्तिस्वचादौ गायत्रीमन्त्रव्याख्या, छान्दोग्यवृषोत्सर्गमन्त्रव्याख्या, यजुषां वृषोत्सर्गमन्त्रव्याख्या, तचादौ कुशण्डिका, शाट्यायनमन्त्रव्याख्या, नवग्रहहोममन्त्रव्याख्या, विवाहमन्त्रव्याख्या, चतुर्थीहोममन्त्रव्याख्या, गर्भाधानमन्त्राः, पुंसवनम्, सीमन्तोन्नयनम्, जातकर्म्म, निष्क्रामणम्, नामकरणम्, अन्नप्राशनम्, चूडाकरणम्, उपनयनम्, गायत्रीव्याख्या, समावर्त्तनम्, दन्तधावनम्, सन्ध्यामन्त्राः, पञ्चयज्ञमन्त्रजपः, पुरुषसूक्तव्याख्यानम्, श्राद्धादिमन्त्रव्याख्या, रुद्राध्यायमन्त्रव्याख्या, सहस्रशीर्षेत्यादिमन्त्रव्याख्या ।

---

## No. 1086. सात्वततन्त्रम् ।

Substance, bark, 13 × 3 inches. Folia, 50. Lines, 5 on a page. Extent, 781 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridása Tarkaratna. Appearance, old. Prose and verse. Generally correct.

*Sátvata Tantra.* A Vaishṇava Tantra on the divinity of Krishṇa.

Beginning. य एको भगवान् कृष्णः सृष्ट्यादौ बहुधेयते ।
तमहं शरणं यामि परमानन्दविग्रहम् ॥
कैलासशिखरासीनं शिवं शिवकरं परम् ।
नारदः परिपप्रच्छ सर्वभूतहिते रतः ॥
नारद उवाच । भगवन् श्रोतुमिच्छामि हरेरद्भुतकर्मणः ।
श्रीकृष्णस्याप्रमेयस्य नानालीलातनोर्विभोः ॥

End. महानुभावाय निरञ्जनाय नित्यात्मलाभाय नमो नमस्ते ॥

Colophon. इति श्रीसात्वततन्त्रे शिवनारदसंवादे शिवप्रोक्ते गणेशलिखिते सात्वतजनप्रियो नवमः पटलः समाप्तः ॥

विषयः । भगवतः श्रीकृष्णस्य विराड्रूपवर्णनम्, कोलाद्यवताराणाञ्च वर्णनम् । भक्तानां भक्तिभेदः, पृथग्विधं लक्षणञ्च, भगवतः सेवया युगानुरूपं मोक्षसाधनम्, भगवतो नाममहत्त्वं, नाममाहात्म्यवर्णनम्, भगवद्विष्णोर्नामग्रहणेन वैष्णवानां अपराधान्निष्कृतिः, तथा सर्वसाररहस्यं, तन्त्रोत्पत्तेः कारणञ्च, प्रश्नानुसारेण हिंसाविधिनिषेधस्य च निरूपणम् ।

---

## No. 1087. हत्यापल्लवदीपिका ।

Substance, country-made yellow paper, 14½ × 3¼ inches. Folia, 32. Lines, 8 on a page. Extent, 992 s'lokas. Character, Bengali. Date, ? Place of deposit, Barddhamána, Dhátrígráma, Brahmavrata Sámádhyáyí. Appearance, fresh. Prose and verse. Generally correct.

*Hatyá-pallava-dípiká.* A compendium of sorcery and witchcraft, or the rules and rites described in the Tantras for destroying, subjugating, paralysing, and deluding people and securing peace and robust health. By (?) Vídyávágís'a Bhaṭṭácharya. The works principally quoted are Unmatta-bhairaví, Phetkárí, Ḍámara, Málíní, Kálottara, Siddha-yoges-varí, and Yogíní Tantras.

Beginning. हत्यां देवीं नमस्कृत्य तथा त्रिपुरसुन्दरीम् ।
भद्रकालीञ्च देवेशीं तथा षट्कर्मदेवताम् ॥
श्रीकृष्णविद्यावागीशभट्टाचार्येण धीमता ।
क्रियते विदुषां प्रीत्यै हत्यापल्लवदीपिका ॥

End. सर्वशान्तिमवाप्नोति सर्वरक्षाकरी भवेत् ॥ ० ॥

Colophon. इति श्रीकृष्णविद्यावागीशभट्टाचार्यविरचिता हत्यापल्लवदीपिका समाप्ता ॥
(एतदनन्तरमिहैव पत्रे कामधेनुतन्त्रोद्धृतं दृष्टिकरणं विद्यते)

विषयः । उन्मत्तभैरवी—फेत्कारिणी—डामर—मालिनी—कालोत्तर—सिद्धयोगेश्वरी—योगिनीप्रभृतितन्त्रेभ्यः शान्ति-पौष्टिक-मारण-वशीकरण-स्तम्भनोच्चाटनेतिषट्-कर्मप्रकरणानि समुद्धृत्येह स्पष्टतयाभिहितानि । इहैव पुस्तकमध्ये विस्तीर्णा यन्त्रश्चैको विद्यते ।

---

## No. 1088. समयप्रदीपः ।

Substance, country-made yellow paper, 14½ × 3¼ inches. Folia, 31. Lines, 8 on a page. Extent, 961 s'lokas. Character, Bengali. Date, ? Place of deposit, Barddhamána, Dhatrígráma, Brahmavrata Sámádhyáyí. Appearance, fresh. Prose and verse. Generally correct.

*Samaya-pradípa.* Appropriate astral conjunctions and times for the performance of rites and ceremonies. By Harihara Bhaṭṭácharya. the father of Raghunandana.

Beginning. अनायासेन कर्मणां समयं यो विवित्सति ।
तदर्थं ज्योतिषः श्लोकान् सञ्चिनोमि यथामति ॥
ज्योतिर्ग्रन्थकलापानां वचनान्याहृत्य बोधाय ।
समयप्रदीपमेव कुरुते श्रीहरिहराचार्यः ॥
नाधीत्य ये ज्योतिषः पुस्तकानि, विवित्सवः कर्मकलापकानाम् ।
गृह्णन्तु ते मे समयप्रदीपं, भवेद् यतोऽज्ञानतमोनिरासः ॥
तत्रादौ चन्द्रशुद्धिः ।

End. तथाच । सङ्क्रान्त्याञ्च त्रयोदश्यां पक्षान्ते नवमीतिथौ ।
सप्तम्यां रविवारे च स्नानमामलकैस्त्यजेत् ॥
————॥ शाके महीमङ्गलवेदचन्द्रसङ्ख्यागते शिष्यगणानुरोधात् ।
प्रज्वालितो ज्योतिषपुस्तकानामाहृत्य सारं समयप्रदीपः ॥

Colophon. इति श्रीहरिहरभट्टाचार्यसङ्गृहीतः समयप्रदीपः समाप्तः ॥

विषयः । ज्योतिःशास्त्रीयसङ्ग्रहविशेषः । अत्र आर्यगणव्यवह्रियमाणानां प्रायः समस्त-कार्याणां समयासमयौ बोधितौ ।

---

## No. 1089. लीलावतीदीधितिरहस्यं ।

Substance, country-made yellow paper, $18\frac{1}{4} \times 3\frac{1}{2}$ inches. Folia, 17. Lines, 8 on a page. Extent, 782 s'lokas. Character, Bengali. Date, Sk. 1597. Place of deposit, Navadvípa, Haridása Bhattácharya, grandson of Mádhaba Tarkasidhánta: another copy at Sántipura, with Kálidása Vidyávágis'a. Appearance, new. Prose. Generally correct.

*Líláratí-dídhiti-rahasya.* A gloss on the commentary described under No. 495, Vo. I. By Mathuránátha Tarkavagís'a.

Beginning. कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपङ्क्तिः ।
मोहयन्नखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
भावः प्रकाश्यते चारु लीलावत्याः शिरोमणेः ॥

End. आदिपदान्मैत्रकर्तृकभोजनकर्मादिपरिग्रहः । (इतः परं खण्डितमिति समाप्ति-सूचकं वाक्यं नास्ति )

विषयः । शिरोमणिकृतलीलावतीव्याख्यानम् ।

## No. 1090. बौद्धाधिकारविवृतिः ।

Substance, country-made yellow paper, 19½ × 3½ inches. Folia, 5. Lines, 8 on a page. Extent, 240 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Haridása Bhaṭṭáchárya. Appearance, old. Prose. Generally correct. Notes on the margin.

*Bauddhádhikára-vivṛiti.* A commentary on the work noticed under No. 459, Vo. I. By Mathuránátha Tarkavágís'a.

Beginning. कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपङ्क्तिः ।
मोहयन्नखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥
श्रीमता मथुरानाथ-तर्कवागीशधीमता ।
बौद्धाधिकारविवृतिर्विशदीकृत्य रच्यते ॥

End. अन्वयसहचारनिश्चयाभावेन व्याप्तिनिश्चयादित्यर्थः ॥

Colophon. इति बौद्धाधिकारमूलमाथुरीटिप्पनी समाप्ता ॥

विषयः । उदयनाचार्यविरचितात्मतत्त्वविवेके यो बौद्धाधिकारस्तस्य व्याख्यानम् ।

---

## No. 1091. विवादनिर्णयः ।

Substance, country-made yellow paper, 16 × 3½ inches. Folia, 51. Lines, 9 on a page. Extent, 2295 s'lokas. Character, Bengali. Date, Sk. 1617. Place of deposit, Barddhamána, Dhátrígráma, Brahmavrata Sámádhyáyí. Appearance old. Prose. Generally correct.

*Vívàda-nirṇaya.* Procedure in civil cases regarding contracts. By Gopála Nyáyapañchánana Bhaṭṭáchárya.

Beginning. अथ विवादपदानि । तत्र मनुः—तेषामाद्यमृणादानं निःक्षेपः स्वामिविक्रयः ।

End. वाचिकी न तु सिद्ध्येत लेख्यस्योपरि या क्रिया । (इतः परं किञ्चित् खण्डितम्)

विषयः । ऋणादानादिव्यवहाराणामष्टादशानां विवादेषु प्राड्विवाकानां कर्त्तव्यनिर्णयः ।

---

## No. 1092. सङ्क्रान्तिनिर्णयः ।

Substance, country paper, 17 × 3 inches. Folia, 7. Lines, 5 on a page. Extent, 147 s'lokas. Character, old Bengali. Date, Sk. 1641. Place of deposit, Barddhamána, Dhátrígráma, Brahmavrata Sámádhyáyí. Appearance, old and decayed. Verse. Correct. Notes on the margin.

*Sañkránti-nirṇaya.* Rules for calculating conjunctions of the signs of the zodiac. By Gopála Nyáya-panchánana Bhaṭṭáchárya.

Beginning. श्रीकृष्णचरणाम्भोजमकरन्दमधुव्रतः ।

न्यायपञ्चाननो धीरः कुरुते सङ्क्रान्तिनिर्णयम् ॥

End. अन्यथा कालद्वयकल्पनापत्तिः स्यादिति ॥ ० ॥

Colophon. इति न्यायपञ्चाननभट्टाचार्यविरचितः सङ्क्रान्तिनिर्णयः सम्पूर्णः ॥

विषयः । अत्र प्रकरणत्रयम् । आद्ये, सङ्क्रान्तीनां निर्णयः । द्वितीये, राशिस्थ-निर्णयः । अन्ते, सङ्क्रान्तिकृत्यानां व्यवस्थानिर्णयश्चेति ।

---

## No. 1093. नरपतिजयचर्य्या ।

Substance, country-made yellow paper, 14 × 3 inches. Folia, 57. Lines, 8 on a page. Extent, 1995 s'lokas. Character, Bengali. Date, ? Place of deposit, Barddhamána, Dhátrígráma, Brahmavrata Sámádhyáyí. Appearance, fresh. Verse. Generally correct. Notes on the margin.

*Narapati-jaya-charyá.* Means, both supernatural and physical, for securing success in warfare. By Narapati. The MS. is incomplete.

Beginning. अव्यक्तमयं शान्तं नितान्तं योगिनां प्रियम् ।

सर्व्वानन्दस्वरूपं यत् तद्वन्दे ब्रह्म सर्व्वगम् ॥ १ ॥

मोहान्धकारमग्नानां जनानां ज्ञानरश्मिभिः ।

कृतमुद्धरणं येन तन्नौमि शिवभास्करम् ॥ २ ॥

विविधविबुधवन्द्यां भारतीं वन्द्यमानः

प्रचुरचतुरभावाद्दार्त्तिकामो जनेभ्यः ।

नरपतिरिति लोके ख्यातनामाभिधास्ये

नरपतिजयचर्य्या-नामकं शास्त्रमेतत् ॥ ३ ॥

## No. 1135. ब्रह्मविद्याभरणं ।

Substance, country-made yellow paper, 13 × 4½ inches. Folia, 260. Lines 15—21, on a page. Extent, 10,595 s'lokas. Character, Bengali. Date, ? Place of deposit, Nadiyárchhatra, Benares, S'ívakrishṇa Vedánta-sarasvatí Bhaṭṭácharya. Appearance, old. Prose. Generally correct. Notes on the margin.

*Brahmavidyábharaṇa.* A commentary on S'añkara Ácharya's exegesis of the Vedánta Aphorisms. By Advaitánanda, pupil of Bhumánanda Sarasvatí. The MS. is incomplete, wanting the fourth or last book. The extent of the three books is limited to ten thousand five hundred verses, whereas the complete copy noticed by Mr. Hall (*Contributions*, p. 89,) comprised 24,000 s'lokas. From one of the verses quoted below, it will be seen that the author admits his work to be an abridgement of a more elaborate scholium by his tutor Rámánanda Tírtha.

Beginning. ॐ शङ्कराश्लेषविलसदानन्दामृतनिर्भराम् ।
विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां विभावयेत् ॥ १ ॥
वेदान्तनिकुरम्बेन तात्पर्येण प्रकाशितः ।
स्वात्मानन्दैकरम्येन कल्याणाय शिवोऽस्तु नः ॥ २ ॥
स्वानन्दाम्बुधिमग्नचित्तमनिशन्निर्धूतमायामलं,
कारुण्यार्ज्जवशान्तिसौरभमसुं देव्या गिरा सेवितम् ।
रामानन्दमुनिं मुनीन्द्रनिकरैरासेवितं सर्वदा,
वित्तेशं कलयामि वेदशिरसस्तत्त्वावबोधाप्तये ॥ ३ ॥
मुग्धं मामनुगृह्य यः करुणया तुर्य्याङ्कितिप्रस्फुरद्
भासां वेदवतीं विकल्पगलितां विद्यां ददौ चिन्मयीम् ।
भूमानन्दपदस्थितो गुरुरसौ पूज्याधिपूज्यः सदा,
चेतो मे कुरुतादलङ्कृतमतिस्वच्छैः स्वपादाम्बुजैः ॥ ४ ॥

End. तस्मिन् पक्षे ब्रह्मणा रक्षणीयत्वे वचनमुपपद्यते इति ।

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमद्भूमानन्दसरस्वतीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासिन्यादिगुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्दनिर्गतशारीरकसूत्रार्थस्वर्धुनीप्रवाहनिमज्जनसुहितस्याद्वैतानन्दस्य कृतौ शारीरकभाष्यव्याख्यायां ब्रह्मविद्याभरणाभिधायां तृतीयस्याध्यायस्य तृतीयः पादः ॥ १ ॥ (चतुर्थाध्यायस्य व्याख्या न मिलतीत्युद्वेषः)

विषयः। शाङ्करशारीरकभाष्यस्य व्याख्यानं।

---

No. 1136. सङ्क्षेपशारीरकं। सङ्क्षेपशारीरकसारसङ्ग्रहदीपिकाभिधटीकासहितम्।

Substance, country-made yellow paper, 14 × 5 inches. Folia, 435. Lines, 11—18, on a page. Extent, 20,307 s'lokas. Character, Bengali. Date ? Place of deposit, Nadiyárchhatra, Benares, S'ívakrishṇa Vedántasarasvatí Bhaṭṭácháryа. Appearance, new. Text, in verse; Commentary in prose. Generally correct. Notes on the margin.

*Saṅkshepa-s'áríraka* with its commentary entitled *Saṅkshepa-sáríraka-saṅgraha-dípiká.* A commentary on Sarvajñátma Mahámuni's metrical abridgement of S'aṅkara's exegesis of the Vedánta Aphorisms. By Madhusúdana Sarasvatí, pupil of Vís'vés'vara Sarasvatí. The commentary was written during the reign of a prince named Manukula Áditya, in the Samvat year 1569. Besides the work of Mudhusúdana, there are five commentaries on the text respectively by Nṛisiṅha A's'rama, Rághavánanda Sarasvatí, Ráma Tírtha, and Purushottama Dikshita. Hall's *Contributions*, pp. 91-3203. Madhusúdana was a commentator and Vedántist of great repute, and several works of his are well-known, the most renowned being his commentaries on the Bhágavata and the Bhagavad Gítá.

Beginning. (मूलस्य)—अद्वतं जड़विरोधिरूपमन्तत्रयमलबन्धनदुःखितावितद्धं।
मुरारेः परमं पदं प्रणयादभिष्टवीमि ॥ १ ॥
स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावा।
स्वाभाविकस्वमहिमः स्थितिरस्तमोहा प्रत्यक्‌चितिर्विजयते भुवनैकयोनिः ॥ २ ॥
प्रत्यक्‌प्रमाणकमसत्यपराक्‌प्रभेदं प्रक्षीणकारणविकारविभागमेकम्।
चैतन्यमात्रपरमार्थनिजस्वभावं प्रत्यक्षमच्युतमहं प्रणतोस्मि नित्यम् ॥ ३ ॥
औत्पत्तिकी शक्तिरशेषवस्तुप्रकाशने कार्यवशेन यस्याः।
विज्ञायते विश्वविवर्त्तहेतोर्नमामि तां वाचमचिन्त्यशक्तिम् ॥ ४ ॥
प्रारब्धाः फलिनः प्रसन्नहृदयो यस्येत्तिरस्तामपि,
नो चेद्विश्वसृजोऽप्यलं विफलतामायान्त्युपायोद्यमाः।

विश्वैश्वर्यमतो निरङ्कुशमभूद्यस्यैव विश्वप्रभोः,
सोऽयं विश्वहिते रतो विजयते विश्वेश्वरो विश्वकृत् ॥ ५ ॥
वाग्मिश्वरा यस्य हृदन्तरङ्गा, वेलातटं वस्तुनि तत्त्वबोधः ।
रत्नानि तर्कप्रसवप्रकाराः, पुनात्वसौ व्यासपयोनिधिर्नः ॥ ६ ॥
वक्त्रारमासाद्य यमेव नित्या, सरस्वती स्वार्थसमन्विताशीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥ ७ ॥
यदीयसम्पर्कमवाप्य केवलं वयं कृतार्था निरवद्यकीर्त्तयः ।
जगत्सु ते तारितशिष्यपङ्क्तयो जयन्ति देवेश्वरपादरेणवः ॥ ८ ॥
गुरुचरणसरोजसन्निधानादपि वयमस्य गुणैकलेशभाजः ।
अपि महति जलार्णवे निमग्नाः सलिलमुपाददते मितं हि मीनाः ॥ ९ ॥
शक्तो गुरोश्चरणयोर्निकटे निवासान्नारायणस्मरणतश्च निरन्तरायः ।
शारीरकार्थविषयावगतिप्रधानं सङ्क्षेपतः प्रकरणं करवाणि हृष्यन् ॥ १० ॥

(टीकायाः)—सत्यं ज्ञानमनन्तमद्वयसुखं यद् ब्रह्म गत्वा गुरुं
मत्वा लब्धसमाधिभिर्मुनिवरैर्मोक्षाय साक्षात्कृतं ।
जातं नन्दतपोबलाददखिलानन्दाय वृन्दावने
वेणुं वादयदिन्दुसुन्दरमुखं वन्देऽरविन्देक्षणम् ॥ १ ॥
श्रीरामविश्वेश्वरमाधवानां प्रणम्य पादाम्बुजपुण्यपांसून् ।
तेषां प्रभावादहमस्मि योग्यः शिलापि चैतन्यमलब्धमेभ्यः ॥ २ ॥
पूर्वाचार्य्यवचो विचार्य्य निखिलं तत्सम्प्रदायाध्वना
हित्वोच्छृङ्खलमार्गमागमगिरां तात्पर्य्यपर्य्याप्तितः ।
विच्छिद्यार्थविभागतः प्रकरणान्युद्भिद्य तत्त्वं रहः
कुर्वे सम्प्रति सारसङ्ग्रहमिमं सङ्क्षेपशारीरके ॥ ३ ॥
हित्वा हेयमुपादेयमुपादाय विचारतः ।
प्रायेण पूर्वटीकानामिष्टार्थः प्रकटीकृतः ॥ ४ ॥
विशेषादिश्वदेवस्य प्रत्यग्विष्णोश्च हृद्धयोः ।
व्याख्यानं कृदयालेखि गुरूणां तौ हि नो गुरू ॥ ५ ॥

End. (मूलस्य)—सङ्क्षेपशारीरकमेवमेतत्, कृतं परिव्राजकमुक्तिहेतुः ।
गुरुप्रसादात्परिलभ्य तत्त्वं, त्रयीशिरस्तत्त्वनिवेदनाय ॥
अविरलपदपङ्क्तिः पद्मनाभस्य पुण्या चरणकमलधूलिग्राहिणी भारतीयम् ।
घनतरमुपयातं श्रेयसः श्रोतृसङ्गात् सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतुः ॥
श्रीदेवेश्वरपादपङ्कजरजःसम्पर्कपूताशयः,

सर्वज्ञात्मगिराङ्कितो मुनिवरः सङ्क्षेपशारीरकम् ।
चक्रे सज्जनबुद्धिवर्द्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥
भुजङ्गमाङ्गशायिने विहङ्गमाङ्गगामिने ।
तुरङ्गमाङ्गभेदिने नमो रथाङ्गधारिणे ॥

Colophon. इति श्रीसर्वज्ञात्ममहामुनिविरचिते सङ्क्षेपशारीरके फललक्षणं चतुर्थोऽध्यायः॥

(टीकायाः)—अन्तेऽपि भगवन्नमस्काररूपमङ्गमाचरति,—भुजङ्गमाङ्गेति ॥

इह योऽस्ति विमोहयन्मनः परमानन्दघनः सनातनः ।
गुणदोषदृष्टेष एव नस्तृणतुल्यो यदयं परो जनः ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यमधुसूदन-सरस्वतीकृतायां सङ्क्षेपशारीरकटीकायां चतुर्थोऽध्यायः ॥

विषयः । शाङ्करशारीरकप्रस्थानवदिदमपि अद्वैतवादात्मकं विशेषस्त्वेतावत्——न च सगुणब्रह्मनिर्गुणब्रह्मणोरुभयोर्निरूपणमत्र तु केवलं निर्गुणब्रह्मणो निरूपणम् । अत एवैतत्प्रकरणस्य सङ्क्षेपेण कथनात् सङ्क्षेपशारीरकमिति नामेत्यपि ज्ञेयम् । अध्यायाश्चत्वारः । समन्वयाविरोधसाधनफलभेदात् आदौ समन्वयात्मके सर्वासां श्रुतीनां ब्रह्मपरत्वेन व्याख्यानं ।
द्वितीये अविरोधाभिधे——वेदान्तातिरिक्तानां सकलशास्त्राणां अप्रामाण्योद्भावनेन तैरविरोधोद्भावनम् ।
तृतीये साधनाभिधे——निर्गुणब्रह्मण उपासना जीवस्य च गत्यागतीत्यादिकम् ।
तुरीये फलात्मके——यावदीयदर्शनप्रतिपाद्यानां मुक्तीनां खण्डनपुरःसरं अद्वैत-वादप्रतिपाद्यमुक्तेः संस्थापनम् ।

---

## No. 1137. वैद्यमनोत्सवः ।

Substance, country-made yellow paper, $12\frac{1}{2} \times 4$ inches. Folia, 21. Lines, 8—11, on a page. Extent, 564 s'lokas. Character, Nágara. Date, ? Place of deposit, Benares, Nadiyárchhatra, Sívakrishṇa Vedánta-sarasvatí Bhaṭṭácharya. Appearance, new. Prose. Incorrect. Notes on the margin.

*Vaidyamanotsava.* A treatise on the practice of medicine. By S'rídhara Mis'ra.

Beginning. ओं नमः शिवाय ॥

प्रणम्य नित्यं शिवस्तनुस्तद्धिदं सिद्धिं ददातीति तथा निधिं यः ।
कुबुद्धिनाशं सुमतिं करोति मुदं तथा मङ्गलमेव कुर्यात् ॥ १ ॥
न कोऽपि सज्ज्ञानमजस्य पारमलक्ष्यमूर्त्तेस्तु करोति यस्य ।
साराणि यो मे विदधाति देवो नतः पुनस्तं करसम्पुटेन ॥ २ ॥
आयुर्वेदस्य शास्त्राणि निरीक्ष्य च पुनः पुनः ।
सर्वेभ्यः सारमादाय कुर्वे वैद्यमनोत्सवम् ॥ ३ ॥
आदौ रोगपरीक्षार्थं वक्ष्ये नाड़ीपरीक्षणं ।
येन विज्ञायते सर्वरोगाणां सर्वकारणम् ॥ ४ ॥

End: कच्छूविचर्चिकादद्रूकृमिभिर्मुच्यते शिशुः ।

Colophon. इति श्रीमन्मिश्रश्रीधरविरचिते वैद्यमनोत्सवे प्रदरपुष्पोद्गमऽन्यागर्भपातनिवारणप्रसूतिका + भगसङ्कोचकुचदृढ़करणलिङ्गधातुपुष्टिकरणदुर्गन्धिनाशनबालरोगचिकित्सा नाम सप्तमः परिच्छेदः ॥ ७ ॥

विषयः । अस्य परिच्छेदाः सप्त सन्ति, ग्रन्थान्ते "सप्तमपरिच्छेदः" इति दर्शनात् परमादौ प्रथमपरिच्छेदसमाप्तिसूचकवाक्यं दृश्यते, तत एकदैव पञ्चमपरिच्छेदसमाप्तिसूचकवाक्यस्य, ततः पुनरेकदैव सप्तमपरिच्छेदसमाप्तिसूचकवाक्यस्य च दर्शनात् द्वितीयतृतीयतुरीयाणां षष्ठस्य च समाप्तिसूचकवाक्यानि लेखकप्रमादात् पतितानीति मन्यते सुतरां परिच्छेदानां सप्तत्वेऽपि विलम्बयमानेन तावद्विषयाः प्रदर्श्यन्ते ।

तथा चादौ——नाड़ीपरीक्षा । दूतलक्षणं । वैद्यदूतशकुनविचारः । वैद्यशकुनविचारः । मुखपरीक्षा । पित्तकफवायुनिदानानि । तेषां शमतोपचारः ॥

द्वितीये = अर्थाद् द्वितीयतृतीयतुरीयपञ्चमेषु——ज्वरदशायामुपद्रवकथनं । पित्तज्वरलक्षणानि । कफज्वरलक्षणानि । वायुज्वरलक्षणानि । मलज्वरलक्षणानि । अजीर्णज्वरलक्षणानि । खेदज्वरलक्षणानि । दृष्टिज्वरलक्षणानि । सन्निपातज्वरलक्षणं । ज्वरपाकमर्य्यादा । ज्वरमुक्तलक्षणम् । प्रथमज्वरचिकित्सा । महाज्वराङ्कुशः । सिद्धज्वराङ्कुशः । ज्वरघ्नी गुटिका । पित्तज्वरघ्नचूर्णं । कफज्वरघ्नचूर्णं । कफज्वरनस्यं । वातज्वरघ्नचूर्णं । वातज्वरे क्वाथः । मलज्वरे आरग्वधादिक्वाथः । अजीर्णज्वरे चूर्णं । खेदज्वरचिकित्सा । दृष्टिज्वरचिकित्सा । दोषत्रयचिकित्सा । शीतज्वरचिकित्सा । विषमज्वरचिकित्सा । सान्निपातिकचिकित्सा । अतिसारचिकित्सा । ग्रहणीचिकित्सा । मवेसीचिकित्सा । खूनीमवेसीचिकित्सा । भगन्दरचिकित्सा । गुल्मरोगचिकित्सा । प्लीहादि-

कित्सा। आमवातचिकित्सा। क्रमिरोगचिकित्सा। शूलरोगचिकित्सा। पाण्डु-कामलचिकित्सा। चयरोगचिकित्सा। हिक्कारोगचिकित्सा। छर्द्दिरोग-चिकित्सा। श्वासरोगचिकित्सा। कासचिकित्सा। मन्दाग्निचिकित्सा। अथ विसूचिकारोगचिकित्सा। अण्डवृद्धिचिकित्सा। प्रमेहचिकित्सा। मूत्र-कृच्छ्रचिकित्सा। अश्मरीचिकित्सा। मूत्ररोगचिकित्सा। मृगिरोगचिकित्सा। मृग्युन्मादचिकित्सा। कुष्ठरोगचिकित्सा। विचर्चिकादिचिकित्सा। शस्त्रघात-चिकित्सा॥

तृतीये = अर्थात् षष्ठे सप्तमे च——वातरोगचिकित्सा। पित्तकोपचिकित्सा। कफकोपचिकित्सा। गण्डमालाचिकित्सा। मुखरोगचिकित्सा। नासारोग-चिकित्सा। पीनसरोगचिकित्सा। नेत्ररोगचिकित्सा। कर्णरोगचिकित्सा। शिरोरोगचिकित्सा। स्त्रीरोगप्रकारः। गर्भोत्पत्तिप्रकारः। गर्भपातनिवारणं। गर्भसङ्कोचकरणं। योनिदुर्गन्धनाशनः क्वाथः। कुचकाठिन्यकरणं। स्त्रीरोग-चिकित्सा। लिङ्गचिकित्सा। दुर्गन्धिहरणचिकित्सा। बालकरोगचि-कित्सा॥

---

## No. 1138. भेदधिक्कृतिः।

Substance, country-made yellow paper, 12 × 5 inches. Folia, 12. Lines, 13—15, on a page. Extent, 441 s′lokas. Character, Bengali, Date ? Place of deposit, Benares, Nadiyárchhatra, Sívakṛishṇa Vedánta-sarasvatí Bhaṭṭáchárya. Appearance, new. Prose and verse. Generally correct.

*Bhedadhikkṛiti.* A refutation of the Nyáya doctrine of the essential difference between the Supreme and the human souls, and the establishment of the modern Vedánta theory of adualism. By Nṛisiñha A′s′rama, pupil of Jagannátha A′s′rama. Mr. Hall notices two commentaries, respectively by Náráyaṇa A′s′rama and Narasiñha Bhaṭṭa, on this work. The work of the latter is noted below. *Contributions*, p. 158.

Beginning. ओं—वेदान्तवनसञ्चारि लीलाचलगुहाश्रयम्।
ज्योतिर्विराजते ध्वस्तमायावरणवारणम्॥ १॥
किं न त्वं नरसिंह एव यदि वा नाहं न नो चेत्कथम्,
बन्धो मय्यखिलेश्वरे त्वयि विभो किं नास्ति मत्तः परः।

भूयाद्र्थवद्दाविवम्भवर इत्याद्यं वचोऽपौरुषम्,
न त्वं ना तदहं त्वमेव त्वहरे भूयासमात्मंस्त्वयि ॥ १ ॥
हृदयालयमालम्ब्य करुणारससुन्दरम् ।
गुरूणां चरणाम्भोजं कुर्वे भेदस्य धिक्कृतिम् ॥ २ ॥

End. गुरुचरणसकाशाद+तं निर्गतं तद्
+विगुणमगुणं वा वीचतां तत्त्वमात्मा ।
अपि+त्यजति कश्चित् काचमालावमत्या
शतमखमणिमालां शारदाकाशकल्पाम् ॥

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमज्जगन्नाथाश्रमपूज्यपादशिष्यश्रीमद्वेदान्तसिद्धान्तसाराभिज्ञश्रीनृसिंहाश्रमविरचितो भेदधिक्कारः सम्पूर्णः ॥

विषयः। अत्रादौ जीवानां परस्परमभेदसाधकमनुमानादिकम्। जीवानां जीवेश्वरयोश्च भेदे प्रमाणतया उपात्तस्य मनसोऽप्रामाण्यानुमानमनेकविधं मानसस्य भेदासङ्गित्वनिर्णयः। ईश्वरत्वपदार्थविचारः। अहम्पदार्थस्य अनात्मत्वानुमानम्। भेदज्ञानस्यानर्थहेतुत्वसाधनम्। अद्वैतश्रुतेर्बलवत्त्वसाधनम्। भेदे अर्थापत्तिप्रमाणस्याप्रामाण्यनिश्चयः जीवेश्वरयोरभेदसिद्धिः। पुनर्जीवानामपि परस्परमभेदसाधनमनुमानादिकम्। भेदपदार्थविचारः। उपसंहारे परपत्ते भेदप्रतीतेर्निर्विषयत्वसंस्थापनपूर्वकं स्वमते कथञ्चित्सविषयत्वस्योपन्यासः। चैतन्यात्मकसद्व्यतिरिक्तसत्तायाः खण्डनम्। स्वमते भेदप्रतीतिप्रकारः। तथा भेदस्य साक्षिभास्यत्वं प्रतियोगिज्ञानानपेक्षत्वनिश्चयः। सर्वोपसंहारे परमतप्रसिद्धभेदप्रमाणस्यैवाद्वैतसाधकतयोपन्यास इति ॥

---

## No. 1139. अद्वैतचन्द्रिका, भेदधिक्कृतिटीका ।

Substance, country-made yellow paper, 12 × 5 inches. Folia, 23. Lines, 25 on a page. Extent, 1795 s'lokas. Character, Bengali, Date, ? Place of deposit, Benares, Nadiyárchhatra, Sivakrishṇa Vedántasarasvatí Bhaṭṭácharya. Appearance, new. Prose and verse. Correct.

*Advaita-chandriká.* A commentary on the work noticed under the last preceding number, by Narasiñha Bhaṭṭa, son of Raghunátha and Siñgámbá, of the family of Náges'vara and the sept of Chinajharí, or Nierilla according to Mr. Hall. The work was written under the

auspices of a prince named Jagannátha of the Kimmuro family. The MS. is incomplete.

Beginning. ओं—यस्याज्ञावशवर्त्तिनोऽनुदिवसं शक्रादिदिक्पालकाः
येन व्याप्तमिदं विभाति हितसद्भातं सुखाद्यात्मना ।
उद्भूतवियदादयो विकृतयो यस्मिन् विवर्त्तात्मना
कस्मैचित् सुखसत्यबोधवपुषे तस्मै सवित्रे नमः ॥ १ ॥
श्रीविद्यानिलयं देवं दक्षिणामूर्त्तिमव्ययम् ।
नमामि वासमुख्यांश्च ज्ञानशास्त्रप्रवर्त्तकान् ॥ २ ॥
श्रीरामचन्द्रार्पितभक्तिसान्द्रम् श्रीरामभद्राश्रमदेशिकेन्द्रम् ।
वेदान्तविज्ञाननिरस्ततन्द्रम् मुदान्तरङ्गं कलये मुनीन्द्रम् ॥ ३ ॥
चिणकारिकुलोद्भूतनागेश्वरबुधोत्तमम् ।
तथा शेषा हि नामानं नमामि गुरुसत्तमौ ॥ ४ ॥
शिङ्गाम्बारघुनाथाख्यौ पितरौ शिवसन्निधौ ।
वन्देऽहं यन्नमस्कृत्य मूको वाचस्पतिर्भवेत् ॥ ५ ॥
नरेन्द्रस्य कुलोत्पन्नः नरसिंहाख्यसूरिणा ।
अद्वैतचन्द्रिका टीका क्रियते भेदधिक्कृतेः ॥ ६ ॥
कि+रिकुलसम्भूत-जगन्नाथनृपाज्ञया ।
दक्षिणामूर्त्तितोषाय कृतिरेषा प्रतन्यते ॥ ७ ॥
क्वाहं मन्दमतिः क्वेदं व्याख्यानं भेदधिक्कृतेः ।
तथापि गुरुविश्वासे किमसाध्यं भवेन्मम ॥ ८ ॥

End. वैपरीत्यं निरस्यति अनधिगतेति । भेदाभावस्य मानान्तराज्ञातत्वा
(इतः खण्डितं) ।

विषयः । श्रीनृसिंहाश्रमविरचितभेदधिक्कृतेः "नान्यतोऽस्ति द्रष्टा नान्यतोऽस्ति श्रोता" इत्यादिश्रुतिमुल्लिख्य भेदवारणनिरूपणप्रसङ्गपर्य्यन्तस्य व्याख्यानम् ।

---

## No. 1140. नरेश्वरपरीक्षा, नरेश्वरपरीक्षाप्रकाशसहिता ।

Substance, country-made yellow paper, 14 × 5 inches. Folia, 57. Lines, 12 on a page. Extent, 2650 s'lokas. Character, Bengali, Date, ? Place of deposit, Nadiyárchhatra, Benares, Sívakrishna Vedántasarasvatí Bhaṭṭácháryya. Appearance, new. Text in verse; Commentary in prose. Incorrect.







*Nares'vara-parikshá* with a commentary entitled *Nares'vara-parikshá-prakás'a.* The work comprises three books, the first of which, after pointing out the defects of the perfect man as portrayed in the Sáñkhya and other systems of philosophy, describes the particular attributes, the possession of which constitutes perfection ; the second treats of the attributes of the Divinity ; and the third criticises the opinions of the different current systems of philosophy regarding the attributes of the Deity. By Rámakaṇṭha Bhaṭṭa, son of Náráyanakaṇṭha.

Beginning. (मूलस्य)—अथ मेयाब्धिरत्नस्य शङ्करस्यामितद्युतेः ।
परीक्षां लेशतो वक्ष्मि पुम्परीक्षापुरःसरम् ॥ १ ॥
(टीकायाः) तं शक्तिं शक्तिमद्रूपं नत्वा नारीश्वरं परम् ।
नरेश्वरपरीक्षायामक्षरार्थः प्रकाश्यते ॥ १ ॥

End. (मूलस्य)—इत्थं शर्वपरीक्षान्तु पुम्परीक्षापुरःसरां ।
चकार मृदुबुद्धीनां हितायातिस्फुटामिमाम् ॥
सद्यो ज्योतिषमालेयं शिवेन गुरुसत्तमः ।
कृपयैवानुजग्राह ह्यशज्योतिर्गुणाकरः ॥
(टीकायाः) एवञ्च पूर्वनयेनेश्वरपरीक्षाक्षिप्तैव नरपरीक्षेति तत्प्रयोजनेनैव सप्रयोजनेति सिद्धम् ॥ नरेश्वरपरीक्षणेति गहनत्वतो नैव यद्गतिर्जगति गम्यते विततबुद्धिवेगेष्वपि । इदं परहितेच्छया सुतनुरामकण्ठस्ततः कुतर्कतमसां नुदं विहितवान् प्रकाशात् स्फुटम् ॥

Colophon. इति श्रीनारायणकण्ठसूनुभट्टरामकण्ठकृतौ नरेश्वरपरीक्षाप्रकाशे परदर्शनप्रसिद्धेश्वरप्रतिक्षेपाख्यं तृतीयं काण्डम् । सम्पूर्णश्चायं नरेश्वरपरीक्षाप्रकाशः । शुभाय भवतु ॥०॥

विषयः । इदञ्च दर्शनं साङ्ख्यवेदान्तादिदर्शनादिवत् पृथगेवेति प्रतीमः ; अत्र खलु त्रीणि काण्डानि सन्ति ।

आद्ये—तावत्साङ्ख्यादिदर्शनलक्षणलक्षितपुरुषस्य खण्डनपुरःसरं तत्तद्विलक्षणलक्षणेन लक्षितं पुरुषं । तच्च नरपरीक्षाभिधम् ।

द्वितीये—स्वमतेनेश्वरलक्षणं श्रुत्यादिप्रमाणतः कृतं तच्चेश्वरपरीक्षानामकं काण्डम् ।

तृतीये तु—ईश्वरवादिन्यायवैशेषिकादितत्तद्दर्शनप्रसिद्धेश्वरस्वरूपप्रतिक्षेपः तच्च परदर्शनप्रसिद्धेश्वरप्रतिक्षेपाख्यं काण्डम् ॥

---

## No. 1141. वेदान्तशिखामणिः ।

Substance, country-made yellow paper, 12¼ × 5 inches. Folia 69. Lines, 18—19, on a page. Extent, 5860 s'lokas. Character, Bengali, Date, ? Place of deposit, Benares, Nadiyárchhatra, Sívakṛishṇa Vedánta-sarasvatí Bhaṭṭácharya. Appearance new. Prose. Generally correct. Notes in some places.

*Vedánta-s'ikhámaṇi.* A commentary on the well-known epitome of the Vedánta system, the *Vedánta pari-bháshá.* By Rámakṛishṇa Adhvarindra, son of Dharmarája Adhvarindra, who is the author of the epitome in question : both the father and the son also bore the title of Dikshita.

Beginning. नैदाघभानुकिरणेष्विव वारिपूरः
सर्वो विभाति यदबोधवशात् प्रपञ्चः ।
मालाफणीव च निमीलति यत् प्रबोधात्
तद् ब्रह्म नौमि सुखमद्वयमात्मरूपम् ॥ १ ॥
आसेतोराहिमाद्रेरपि भुवि विदितान् धर्मराजाध्वरीन्द्रान्
वन्देऽहं तर्कचूडामणिभणिजननचीरधींस्तातपादान् ।
यत्कारुण्यान्मयाभूदधिगतमधिकं दुर्ग्रहं सूक्ष्मधीकै-
रप्यानं शास्त्रजातं जगति मखकृता रामकृष्णाङ्कयेन ॥ २ ॥
वेदान्तपरिभाषाख्यां सोऽहं तातविनिर्म्मिताम् ।
व्याकरोमि कृतिं सर्वश्रुत्यन्तार्थप्रकाशिकाम् ॥ ३ ॥

End. परिच्छेदप्रतिपाद्यमर्थं निगमयति तदेवमिति ॥
प्रमादलिखितं यत्तु प्रमादालस्यदोषतः ।
तत्क्षन्तव्यं बुधैः सद्भिः क्षमा हि विदुषां धनम् ॥ १ ॥
सुवर्णखचिताकारा कृतिरेषा मया कृता ।
विदुषामस्तु वेदान्तशिखामणिरलङ्कृता ॥ २ ॥
अनेन मत्प्रबन्धेन वेदान्तार्थावलम्बिना ।
गुरुकारुण्यलब्धेन तारकं ब्रह्म तुष्यतु ॥ ३ ॥
वन्देऽहं वन्दनीयानां वन्द्यां वाचमधीश्वरीम् ।
कामिताशेषकल्याणकलनाकल्पवल्लरीम् ॥ ४ ॥

Colophon. इति श्रीधर्म्मराजाध्वरीन्द्रात्मजरामकृष्णाध्वरीन्द्रविरचिते वेदान्तशिखामणौ प्रयोजनाख्योऽष्टमः परिच्छेदः समाप्तः ॥०॥ समाप्तश्चायं ग्रन्थः ॥०॥

विषयः । श्रीधर्मराजाध्वरीन्द्रविरचितवेदान्तपरिभाषायाः व्याख्यानम् ॥

---

## No. 1142. गौतमीयतन्त्रम् ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia 76. Lines, 7 on a page. Extent, 2,028 s'lokas. Character Bengali. Date Sk. 1736. Place of deposit, Benares, Nadiyárchhatra, Sivakṛishṇa Vedánta-sarasvatí Bhaṭṭáchárya. Appearance, new. Prose. Incorrect.

*Gau'tamiya Tantra.* A Vaishṇavite Tantra, comprising, in thirty-one chapters, a complete system of rituals for the guidance of Vaishṇavas, and the adoration of Kṛishṇa in a variety of forms. The work is designed with a view to apply the rituals of S'ákta worship with all its forms, mysteries and mummeries to the cult of Kṛishṇa, and is alway appealed to as a leading authority in all questions regarding rituals. It is held in high estimation by Vaishṇava householders, but ascetics and more devout and ardent followers of Chaitanya do not implicitly carry out its ordinances. *Contents ;* 1, Ten-syllable mantra of Kṛishṇa ; 2, Derivation of that mantra ; identification of the mantra with the Deity ; the mystic syllable of the mantra the source of the universe ; the application of the eighteen-syllable mantra of Kṛishṇa ; the object of the mystic particles in the mantras ; regulation of the breath ; 3, Mental assignment of the various parts of the body to different tutelary divinities ; 4, Description of Vṛindávana ; the mode of meditating on Kṛishṇa ; 5, Characteristics of spiritual guides and neophytes, time meet for initiation ; 6, Altars ; 7, Initiation ; daily prayers and adorations ; 8, Twelve forms of purifications ; 9, Purification and forms of worship, observances and rituals during worship ; 10, Adoration of Kṛishṇa through the medium of ammonite stones ; 11, Homa or worship through fire ; 12, Offerings ; 13, Imparting of mantras to disciples ; 14, Attainment of mastery over mantras ; 15, Occasional forms of worship, and rosaries ; 16, Daily threefold worship ; 17, Worship of Kṛishṇa in his infantile form ; 18, Derivation and uses of various Vaishṇava mantras ; 19, Means of causing dementation ; mantras for female divinities ; 20,

Differences in the forms of adoration, and advantages of adoring Kṛishṇa under different forms; 21, Various mantras of Kṛishṇa; 22, Attainment of superhuman powers, and various mantras; 23, Attainment of eloquence; mantra &c. of Ráma; 24—28, Various mantras &c.; 29, Characteristics of mastry over mantras; 30, Duties of persons accepting particular mantras; 31, Attainment of true knowledge; praise of the Tantra.

Beginning. ॐ बालगोपालाय नमः ।

सिद्धाश्रमे वसन् श्रीमान् कदाचिद्गौतमो मुनिः ।

तपःस्वाध्यायनिरतो भक्तिमान् पुरुषोत्तमे ॥ १ ॥

End. इत्येवं कथितं प्रश्नं मया ते मुनिसत्तम ।

अस्यालोकनतश्चित्ते कृष्णात्मा सम्प्रसीदति ॥

Colophon. इति श्रीगौतमीये महातन्त्रे सर्वतन्त्रोत्तमे एकत्रिंशोऽध्यायः ॥

समाप्तश्चायं गौतमीयतन्त्राख्यो ग्रन्थः ॥०॥

विषयः । अत्रैकत्रिंशत्पटलाः सन्ति । १—कृष्णस्य दशाक्षरमन्त्रफलं । २—दशाक्षरमन्त्रोद्धारः । वीजानामीश्वरादिभावेनोपासना । क्लींकाराज्जगदुत्पत्तिक्रमः । मन्त्रस्य विनियोगादिकथनम् । अष्टादशाक्षरमन्त्रोद्धारः । वीजतत्त्वानां विन्यासः । प्राणायामाः । ३—काम्यन्यासाः । ४—वृन्दावनवर्णनम् । कृष्णध्यानम् । ५—गुरुलक्षणम् । शिष्यलक्षणम् । दीक्षाकालनिर्णयः । भूमिपरीक्षादयः । ६—यागमण्डपरचना । गेहकुण्डादिरचनाप्रकारः । ७—दीक्षाकथनम् । सन्ध्यात्रयकथनम् । पञ्चप्रकारार्चाकथनम् । स्नानद्वैविध्यम् । गङ्गावाहनादिकम् । विप्रपादोदकपानव्यवस्था । देवादितर्पणम् । कृष्णतर्पणप्रकारः । सूर्य्यपूजाप्रकारः । द्वादशविष्णुकथनम् । ८—वैष्णवानां द्वादशशुद्धिकथनम् । वृन्दावनध्यानम् । भूतशुद्धिप्रकारः । ९—पञ्चगव्येन देहादेः शोधनप्रकारः । पञ्चगव्यस्य मात्रानिर्वचनम् । अथ भूतशुद्धिः । मातृकान्यासादेर्विधानम् । अर्घ्यस्थापनप्रकारः । पीठपूजा । मन्त्रात्मदेवताध्यानम् । त्रिविधयजनक्रमः । विष्णोर्गन्धाष्टकम् । कलापूजनम् । कलाजपः । नवरत्नस्थापनम् । १०—कृष्णस्य पञ्चमुद्राभिरावाहनम् । प्राणप्रतिष्ठा । शालग्रामादिजड़पदार्थविशेषेषु कृष्णार्चायाः नित्यकर्त्तव्यत्वम् । शालग्रामलक्षणम् । यन्त्रसामान्यलक्षणम् । यन्त्रविशेषलक्षणम् । कृष्णप्रतिमागठनप्रकारः । प्रतिमाद्वैविध्यम् । आवाहनादिमन्त्राः । आवाहनादिक्रमेण कृष्णपूजाप्रकारः । मुद्रालक्षणम् । ११—कृष्णमन्त्रानुसारेणाग्निज्वालनादिकम् । नित्यहोमः । शिष्याय चरुसमर्पणम् । कम्बलादिशुद्धासने शिष्यस्य

शयनविधिः । १२—मन्त्रसिद्धिचिह्नानि । बलिविधिः । ब्रह्मार्पणम् । १३—आत्मनि कृष्णसंस्कारः । शिष्याय मन्त्रदानम् । गुरुदक्षिणानियमः । १४—पुरश्चर्य्यासमयनियमः । भूमिपरिग्रहः । भक्ष्याभक्ष्यनियमः । पुरश्चरण-कृतः प्रात्यहिककर्त्तव्यक्रियोपदेशः । पुरश्चरणस्य स्थानविशेषे फलवैजात्यम् । चक्रविचारविधिः । नानाविधमालानिर्म्माणं तथा तत् शोधनादिकम् । जपादिनियमलक्षणम् । जपदशांशहोमस्तथा तद्दशांशतर्पणादिकम् । १५—नैमित्तिकानुष्ठानव्यवस्था । १६—कृष्णस्य त्रैकालिकार्च्चनविधिः । १७—बालकृष्णस्य मन्त्रपूजादिकम् । १८—कृष्णमन्त्रयोः प्रयोगः । कूर्च्चबीजोद्धारश्च । नृसिंहबीजोद्धारः । वशीकरणप्रकारश्चेति । १९—उच्चाटनप्रकारः । स्त्री बीजम् । मन्मथगायत्र्यादिकञ्च । २०—कृष्णस्य मासविशेषे फलविशेषाय पूजाविशेषः । २१—कृष्णस्य नानाविधमन्त्राणामुद्धारस्तथा तत्तद्बीजादयश्च । २२—गङ्गावाहनमन्त्रः । तस्य बीजादयश्च । श्रुतिधरभवनप्रकारः । वाक्-सिद्धिभवनप्रकारः । कृष्णमहामन्त्रोद्धारः । यन्त्रधारणप्रकारः । २३—वाग्मि-भवनप्रकारः । कामगायत्र्यादिकम् । २४—रुक्मिणीवल्लभमन्त्रोद्धारादिकम् । कामनाविशेषे फलदाः मन्त्राः । अष्टराज्यागममन्त्राः । तथा नानाफलदले-नाभिहिता मन्त्राः । २६—अत्रापि फलविशेषप्रापकाः मन्त्रा एव । २७—अत्रापि तथैव । २८—अत्रापि तथैव । २९—मन्त्रसिद्धेर्लक्षणानि । ३०—मन्त्राचारनिदर्शनम् । ३१—कार्य्ययोगकथनम् । मन्त्रयोगकथनम् । समा-धिकथनम् । ज्ञानमाहात्म्यम् । तन्त्रमाहात्म्यम् ।

---

## No. 1143. दायतत्त्वटिप्पनी ।

Substance, country-made yellow paper, 18 × 3 inches. Folia, 14. Lines, 7 on a page. Extent, 477 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Prasannakumára Vidyáratna. Appearance, new. Prose. Generally correct.

*Dáyatattva-ṭippaní.* Notes on the Dáyatattva of Raghunandana, a treatise on inheritance. By Kás'iráma Váchaspati.

Beginning. ओं नमो गणेशाय । तत्त्वं—स्वाश्रयप्रतिपादकत्वसम्बन्धेन तादृशस्मृतिव्याहृता-साधारणपरं दायभागत्वमिति यावत् ॥

End. तत्र पितृतो भागकल्पनेत्याह ।

Colophon. इति श्रीकाशीरामवाचस्पतिभट्टाचार्यविरचिता दायतत्त्वटिप्पनी समाप्ता ॥

विषयः । श्रीमद्रघुनन्दनभट्टाचार्यकृतदायतत्त्वस्य व्याख्यानम् ।

---

## No. 1144. उद्वाहतत्त्वटिप्पनी ।

Substance, country-made yellow paper, 18 × 3 inches. Folia, 15. Lines, 7 on a page. Extent, 518 sl'okas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Prasannakumára Vidyáratna. Appearance, new. Prose. Generally correct.

*Udváha-tattva-ṭippaní.* Notes on Raghunandana's summary of the laws regarding marriage. By Kás'iráma Váchaspati.

Beginning. ओं नमो गणेशाय । नत्वा गुरोश्चरणपद्मरजांसि मूर्द्ध्ना

श्रीकान्तकान्तचरणं प्रणिधाय चित्ते ।

श्रीकाशिरामसुकृती कृतिनां हिताय

सम्बन्धतत्त्वविवृतिं वितनोति यत्नात् ॥

स्मृतिशास्त्राम्बुधौ लीलाकृतसेतुं जगद्गुरुं ।

विदितं त्रिषु लोकेषु नमामि रघुनन्दनम् ॥

End. ननु भुवणीत्यादिवचनस्य छन्दोगपरिशिष्टोयत्वेन छन्दोगमात्रपरत्वमिति पाठः क्वाचित्कः ( इतः खण्डितम् )

विषयः । रघुनन्दनकृतोद्वाहतत्त्वव्याख्या ।

---

## No. 1145. एकादशीतत्त्वटिप्पनी ।

Substance, country-made yellow paper, 18½ × 3 inches. Folia, 47. Lines, 7—6 on a page. Extent, 1,299 s'lokas. Character, Bengali. Date ? Place of deposit, Navadvípa, Prasannakumára Vidyáratna. Appearance, fresh. Prose. Generally correct.

*Ekádasítattva-ṭippaní.* Notes on Raghunandana's summary of the laws regarding the fast on the eleventh day of the moon. By Kás'iráma Váchaspati.

Beginning. ओं नमो गणेशाय ॥ अथैकादशीतत्त्वस्य टिप्पनी लिख्यते । तत्र वक्ष्यामीति ।

End. एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवमित्यर्थः ॥ (समाप्तिवाक्यं नास्ति)

विषयः । श्रीरघुनन्दनभट्टाचार्य्यविरचितैकादशीतत्त्वस्य व्याख्यानम् ।

---

## No. 1146. मलमासतत्त्वटिप्पनी ।

Substance, country-made yellow paper, 18 × 3 inches. Folia, 249. Lines, 7—6 on a page. Extent, 249 s'lokas. Character, Bengali, Date, ? Place of deposit, Navadvípa. Prasannakumára Vidyáratna. Appearance, old. Prose. Generally correct.

*Malamásatattva-ṭippaní.* Notes on Raghunandana's summary of the laws regarding intercallary months. By Kás'iráma Váchaspati.

Beginning. नत्वा गुरोश्चरणपद्मरजांसि मूर्द्धा
श्रीकान्तकान्तचरणञ्च निधाय चित्ते ।
श्रीकाशिरामसुकृती कृतिनां हिताय
सम्यक् तनोति विवृतिं मलमासकस्य ॥
स्मृतिशास्त्राम्बुधौ लीलाकृतसेतुं जगद्गुरुम् ।
विदितं त्रिषु लोकेषु नमामि रघुनन्दनम् ॥
मीमांसादिनानाशास्त्रपारदृश्वा श्रीरघुनन्दनभट्टाचार्य्यः प्राचीनविचक्षणगण-नानाविधव्याख्याजनितसन्देहस्य स्मृतिशास्त्रस्य मुन्यन्तरवचनयुक्तिभ्यां तत्त्वं निर्णीयेदानीन्तनानां सुखबोधाय निबन्धांश्चकार । अत्र च स्मृतिशास्त्रस्य स्वभावतो दुर्गमतया कानिचित्कठिनानि सन्ति अतस्तानि मया व्याख्यायन्ते ॥

End. यद्वा सदपि नाम असदेव तत्तन्मासविहितकर्मण्यनर्हत्वादित्याहुः ।
यं प्रासूत समस्तशास्त्रनिपुणः श्रीरामकृष्णात्मजः
श्रीराधोत्तरवल्लभाख्यसुकृती सङ्गीतचूडामणिः ।
तेन श्री + + काशिरामकृतिना यत्नेन निष्पादिता
टीका नातिसुस्पष्टकृतापि कृतिभिः सानुग्रहैर्दृश्यताम् ॥

Colophon. इति श्रीकाशीरामवाचस्पतिभट्टाचार्य्यविरचिता मलमासतत्त्वटिप्पनी समाप्ता ॥

विषयः । रघुनन्दनभट्टाचार्य्यकृतमलमासतत्त्वस्य व्याख्यानम् ।

---

## No. 1147. याज्ञवल्क्यदीपकलिका ।

Substance, Europe paper, 18 × 3½ inches. Folia, 77. Lines 8 on a page. Extent, 3,071 s'lokas. Character, Bengali. Date, Sk. 1793. Place of deposit, Navadvípa, S'rínátha S'iromaṇi. Appearance, new. Prose. Incorrect.

*Yájñavalkya-dípakaliká.* A commentary on the Institutes of Yájñavalkya. By S'úlapáṇi. The author lived during the reign of Lakshmaṇa Sena of Bengal, in the beginning of the twelfth century.

Beginning. ओं नमो गणपतये ॥ अशेषकलुषध्वंसि नत्वा विष्णोः पदाम्बुजम् ।
याज्ञवल्क्यस्मृतेष्टीकां शूलपाणिः समातनोत् ॥
अज्ञानतिमिरग्रस्तशास्त्रार्थप्रतिपत्तये ।
क्रतेयं दीपकलिका कलिकालमलापहा ॥ योगीश्वरमिति ॥

End. त्रयाणां देवानां समाहारस्त्रयी तस्यावर्त्तप्रकाशकमिति ॥

Colophon. इति साहुड़ि(यानमहामहो)पाध्यायश्रीशूलपाणिभट्टाचार्य्यविरचितायां याज्ञवल्क्यटीकायां दीपकलिकायां तृतीयोऽध्यायः समाप्तः ॥

विषयः । याज्ञवल्क्यमहर्षिकृतस्मृतेर्व्याख्यानम् ।

---

## No. 1148. तीर्थचिन्तामणिः ।

Substance, palm leaf, 15 × 2 inches. Folia, 184. Lines, 5 on a page. Extent, 4,140 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Srínátha S'iromaṇi Bhaṭṭácharya. Appearance, decayed. Verse. Generally correct.

*Tírtha-chintámaṇi.* A summary of the duties to be observed at sacred places. The MS. is defective both at the beginning and at the end, and five chapters only are available. These treat successively of Prayága, Purushottama, Gaṅgá, Gayá and Báṛánasí. Owing to the absence of the end, the author's name cannot be ascertained.

Beginning. (प्रारम्भे पत्रचतुष्टयं खण्डितं) लं घृतमुख्यद्रव्यकं, गच्छन् देशान्तरं यत्तु श्राद्धं कुर्य्यात्तु सर्पिषा । यात्राद्यमिति तत्प्रोक्तं प्रवेशे च न संशय इति भविष्यपुराणवचनात् इदमाभ्युदयिकमिति तु केचित् ।

End. स्नानं कृत्वा तु गन्तव्यं गोप्रचे तु यशस्विनि ।
अह्नि होलिका देवि अर्चितव्या प्रय(त्नतः)॥ (इतः परं खण्डितम्)

विषयः । यद्यपि खण्डितत्वादत्र कति विभागाः सन्तीति निर्णेतुमशक्यन्तथापि यावन्तः समुपलभ्यन्ते तावतां खलु प्रयागप्रकाश—पुरुषोत्तमप्रकाश—गङ्गाप्रकाश—गयाप्रकाश—वाराणसीप्रकाशानामेषां यथानिर्देशं तत्तद्विषयाः प्रदर्श्यन्ते,

तत्राद्ये प्रयागप्रकाशे—सामान्यतीर्थयात्राविधिक्रमः । प्रयागतीर्थयात्राविधिः । अथ तत्प्रयोगः ।

द्वितीये पुरुषोत्तमप्रकाशे—भारतवर्षप्रशंसा तत्परिचयश्च । तथा तदन्तर्गतोत्कलप्रदेशप्रशंसा तत्परिचयश्च । सत्ययुगे प्रादुर्भूतेन्द्रद्युम्ननामधेयस्य राज्ञ इतिहासः, पुरुषोत्तमयात्राप्रवृत्तिप्ररोचकः । द्वादशाक्षरमन्त्रेण कृष्णपूजनविधिः । कृष्णदर्शनमाहात्म्यं । सुभद्रापूजाविधिः । नरसिंहपूजाविधिः । प्रसङ्गात्तन्मन्त्रोपासनफलकीर्त्तनञ्च । मत्स्यमाधवार्चनम् । पञ्चतीर्थीविधिः । पुरुषोत्तमक्षेत्रे सागरस्नानपूर्वकपुरुषोत्तमार्चनविधिः । इन्द्रद्युम्नसरःस्नानपूर्वकपुरुषोत्तमार्चनप्रकारः । महाज्यैष्ठ्यां पुरुषोत्तमयात्राविधिः । ततस्तत्प्रयोगः । सुभद्रारामसहितमञ्चस्थपुरुषोत्तमदर्शनमाहात्म्यं । कृष्णाभिषिक्तजलेनात्माभिषेकफलम् । सुभद्राबलरामसहितमञ्चस्थपुरुषोत्तमदर्शनप्रयोगः । प्रतियात्राफलम् । दक्षिणोद्देशस्थे वटराजसमीपे भगवत्कृष्णदर्शनविधिः, अथ तत्प्रयोगश्च । तत उत्कलदेशावस्थितकृत्तिवासःक्षेत्रपद्धतिः । तत्रादौ—क्षेत्रपरिचयः । कृत्तिवासोमहादेवस्य पूजनविधिः । ततस्तत्पूजनदर्शनादिमाहात्म्यम् । कृत्तिवासोर्चनप्रयोगः । अथ कोणार्कविधिरत्रैव रामेश्वरविधिरपि । ततो विरजाक्षेत्रप्रयोगः ।

अथ तृतीये गङ्गाप्रकाशरहस्ये—गङ्गामाहात्म्यम् । गङ्गाजलमाहात्म्यम् । गङ्गासेवनफलम् । गङ्गाभक्तिफलम । गङ्गातोयपानफलम् । गङ्गातोयपानप्रयोगः । गङ्गादर्शनफलम् । गङ्गादर्शनप्रयोगः । गङ्गास्मरणफलम् । गङ्गास्मरणप्रयोगः । गङ्गानामकीर्त्तनफलम् । गङ्गानामकीर्त्तनप्रयोगः । गङ्गास्पर्शनफलम् । गङ्गास्पर्शनप्रयोगः । गङ्गाभिलाषफलम् । गङ्गाभिलाषप्रयोगः । गङ्गास्नानफलम् । गङ्गास्नानप्रयोगः । कालविशेषे गङ्गास्नानफलम । अथ तत्प्रयोगः । एवं देशविशेषे गङ्गास्नानफलम् । अथ तत्प्रयोगः । गङ्गायामवगाहनफलम् । तथा तत्प्रयोगः । गङ्गाजलेन तर्पणफलम् । अथ तत्प्रयोगः । गङ्गातीरे शिवार्चनफलम् । अथ तत्प्रयोगः । गङ्गापूजाविधिः, अथ तत्प्रयोगः । गङ्गातीरे घृतधेन्वादिदानविधिः, अथ तत्तत्प्रयोगः । गङ्गायां व्रतफलमथ तत्प्रयोगः । गङ्गायां श्राद्धफलमथ तत्प्रयोगः । गङ्गान्तर्जलमरणफलम् । अथ तत्प्रयोगः । गङ्गा-

यामस्थिस्थितिफलम्। अथ गतप्रक्षेपप्रकारः। गङ्गायास्तीरक्षेत्रादिनिर्णयः। गङ्गातीरमृत्तिकाफलमिति।

अथ तुरीये गयाप्रकाशखण्डे—गयामाहात्म्यम्। ततस्तत्परिचयादिकम्। प्रेतशिलाकृत्यविधिः। अथ गयाकृत्ये फल्गुतीर्थस्नानतर्पणषोड़शीप्रभृतिकृत्यादिकं प्रथमदिवसीयम्। ततो द्वितीयदिवसीयकृत्यं प्रेतशिलायां पिण्डदानादिकम्। अथ पञ्चतीर्थीकृत्यम्। पञ्चतीर्थीकर्मापेक्षया यद् द्वितीयदिनकृत्यं तत्कृत्यम्। पञ्चतीर्थीदिनोत्तरतृतीयदिनकृत्यम्। पञ्चतीर्थीदिनोत्तरचतुर्थदिनकृत्यम्। पञ्चतीर्थीदिनोत्तरपञ्चमदिनकृत्यम्।

पञ्चमे वाराणसीप्रकाशाभिधे—वाराणसीमाहात्म्यम्। वाराणसीक्षेत्रपरिचयादिकम्। वाराणसीक्षेत्रप्रवेशफलम्। वाराणसीवासफलम्। वाराणसीमरणफलम्। तत्रत्यदशाश्वमेधादितीर्थे स्नानदानादिफलम्। तत्रैव च देशविशेषावच्छेदेन च दानादिकार्यविशेषे फलविशेषकीर्त्तनम्। ततो वाराणसीयात्राकालनिर्णयः। यात्रायां विधिविहिततत्तत्कृत्यानि च। (एतत्प्रकाशस्य खण्डितत्वादितः परं किं किमस्तिकृत्यं तन्नोपलब्धम्)।

---

## No. 1149. शुद्धितत्त्वटिप्पनी।

Substance, country-made yellow paper, $18\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 109. Lines, 7 on a page. Extent, 3,815 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Prasannakumára Vidyáratna. Appearance, fresh. Prose. Generally correct.

*S'uddhitattva-ṭippaní.* A gloss on the S'uddhitattva of Raghunandana—a treatise on purification. By Rádhámohana S'armá.

Beginning. ॐ नमो गणेशाय॥ प्रणम्य परमानन्दं गोविन्दं मोहनद्विजः।
करोति शुद्धितत्त्वार्थतात्पर्य्यस्यावधारणं॥

End. तथा शूद्रायाः स्वप्रसवाशौचं सपिण्डमरणाशौ (इतः खण्डितं)

विषयः। रघुनन्दनभट्टाचार्य्यकृतशुद्धितत्त्वस्य व्याख्यानम्।

---

## No. 1150. मलमासतत्त्वटिप्पनी ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 107. Lines, 7 on a page. Extent, 3,745 s'lokas Character, Bengali. Date, ? Place of deposit, Navadvípa. Prasannakumára Vidyáratna. Appearance, fresh. Prose. Generally correct.

*Malamása-tattva-ṭippaní.* A gloss on the Malamása-tattva of Raghunandana—a treatise on intercallary months. By Rádhámohana S'armá.

Beginning. श्रीगुरवे नमः । प्रणम्य राधानलिनीसुभृङ्गमङ्गं घनश्याममलमच्युतस्य ।
परं चिदानन्दमयं तनोति श्रीमोहनोऽर्थं मलमासतत्त्वे ॥

End. अन्यथा मलमासस्थले द्विर्वैवादिपदप्रयोगानुपपत्तेरिति ॥

Colophon. श्रीमदद्वैतवंशोद्भवश्रीराधामोहनभट्टाचार्यविरचिता मलमासतत्त्वटिप्पनी समाप्ता ।

विषयः । रघुनन्दनभट्टाचार्यकृतमलमासतत्त्वव्याख्या ।

---

## No. 1151. दायतत्त्वटिप्पनी ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 42. Lines, 7 on a page. Extent, 1,470 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Prasannakumára Vidyáratna. Appearance, fresh. Prose. Generally correct.

*Dáya-tattva-ṭippaní.* A gloss on the Dáya-tattva of Raghunandana—a treatise on the law of inheritance. By Rádhámohana S'armá.

Beginning. प्रणम्य राधिकाकान्तं कृष्णं संसारलोचनं ।
श्रीराधामोहनो दायतत्त्वव्याख्यां करोत्यसौ ॥

End. क्रमेण धनाधिकारे वानप्रस्थस्यापि सतीर्थाद्यभावे धनसम्बन्धी विवेच्य इति सङ्क्षेपः ।

Colophon. इति कलियुगपावनावतारश्रीमदद्वैतमहाप्रभुवंशसम्भवश्रीराधामोहनभट्टाचार्यविरचिता दायतत्त्वटिप्पनी समाप्ता ।

विषयः । श्रीरघुनन्दनभट्टाचार्यविरचितदायतत्त्वस्य व्याख्यानम् ।

---

## No. 1152. प्रायश्चित्ततत्त्वटिप्पनी ।

Substance, country-made yellow paper, 18½ × 3½ inches. Folia, 86. Lines, 6 on a page. Extent, 2,666 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Prasannakumára Vidyáratna. Appearance, fresh. Prose. Generally correct.

*Práyas'chitta-tattva-ṭippaní.* A gloss on the Práyas'chitta-tattva of Raghunandana—a treatise on expiations, By Rádhámohana S'armá.

Beginning. ॐ नमः परदेवतायै ।

तड़िद्वीतालीनाम्बुदरुचिररूपस्तरुतले
लसद्वंशीनादास्तनिकरवर्षी प्रियसखि ।
नवीनोऽयं किं मे रचयति हृदीनीङ्गितकथा
स्फुरन्दा राधा जयति वकमनोर्हृदि गता ॥
स्फुटं प्रायश्चित्ततत्त्वव्याख्या मोहनशर्मणा ।
क्रियतेऽद्वैतवंशेन गोविन्दरतिकाम्यया ॥

End. सुरापानस्य जातिमात्रनिषेधात्तदित (इतः खण्डितं)

विषयः । श्रीरघुनन्दनकृतप्रायश्चित्ततत्त्वस्य व्याख्यानम् ।

---

## No. 1153. अनुमानचिन्तामणिटिप्पनी ।

Substance, country-made yellow paper, 18 × 3½ inches. Folia, 230. Lines, 8 on a page. Extent, 8,510 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Haramohana Chúḍámaṇi. Appearance, fresh. Prose. Generally correct.

*Anumánachintámani-ṭippaní.* A commentary on the Anumána Khaṇḍa of Gañges'a. By Mathuránátha Tarkavágis'a. (See vol. I., p. 295.)

Beginning. ओं नमो गणेशाय ।

नवीननीरदश्याममञ्जुमञ्जुललोचनं ।
वल्लवीवल्लभं वन्दे वृन्दावनविहारिणं ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विशदीकृत्य दृश्यन्ते द्वितीयमणिफक्किका ॥

प्रत्यक्षं निरूपितमिदानीमनुमानं निरूपणीयं, अतः शिष्यावधानाय प्रतिजानीते प्रत्यक्षानन्तरमित्यादिना ।

End. तथाप्युद्भावने कथकसम्प्रदायसिद्धप्रकारभेदोऽनेन दर्शित इति न काप्यनुपपत्तिरिति सङ्क्षेपः ॥

Colophon. इति महामहोपाध्यायश्रीमथुरानाथतर्कवागीशभट्टाचार्यविरचिता अनुमानटिप्पनी समाप्ता ॥

विषयः । गङ्गेशोपाध्यायविरचितानुमानखण्डस्य बाधान्तस्य व्याख्यानं ।

---

## No. 1154. अभिधादिवादचिन्तामण्यालोकटिप्पनी ।

Substance, country-made yellow paper, 17½ × 4 inches. Folia, 6. Lines, 8 on a page. Extent, 260 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Haramohana Chúḍámaṇi. Appearance, old. Prose. Generally correct.

*Avidhádiváda Chintámanyáloka-ṭippaní.* A commentary on a portion of the S'abdakhaṇḍa of Gaṅges'a. By Mathuránátha Tarkavágis'a. See vol. I., p. 295.

Beginning. अपि च सङ्कल्पादीनां समुच्चितानां प्रवर्त्तकत्वमेकस्यैव मतमिति भ्रमनिवारणाय मतभेदं सूचयति——अभिप्रेत्यादिना ।

End. विधित्वानुपपत्त्या च नोचितमिति सर्वत्र न हेतुद्वयान्वय इति यदुक्तं तद्बीजं स्वयमेवाह हेतुद्वयमित्यादिना ।

Colophon. इत्यभिधावादादिमिश्रव्याख्या सम्पूर्णा ॥

विषयः । अभिधावादचिन्तामण्यालोकव्याख्यानं ।

---

## No. 1155. सन्निकर्षविचारः ।

Substance, country-made yellow paper, 15½ × 3½ inches. Folia, 13. Lines, 8 on a page. Extent, 565 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Bhuvanamohana Vidyáratna Bhaṭṭácharya. Appearance, decayed. Prose. Incorrect.

*Sannikarsha-vichára.* A Nyáya dissertation on perceptible evidence. By Govinda.

Beginning. ओं नमो गणेशाय । प्रत्यचानुमित्युपमितिशाब्दभेदेन प्रमा चतुर्विधा, तचे-
न्द्रियसन्निकर्षजन्यं ज्ञानं प्रत्यचं ।

End. द्रव्यविषयतायां लौकिकत्वनिवेशादिति समासः ।

Colophon. इति सन्निकर्षविचारः ॥

विषयः । षड्विधप्रत्यचाणां कारणनिर्वचनम ।

---

## No. 1156. आत्मतत्त्वविवेकटीका ।

Substance, country-made yellow paper, 16½ × 3½ inches. Folia, 18. Lines, 8 on a page. Extent, 819 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Bhuvanamohana Vidyáratna Bhaṭṭáchárya. Appearance, decayed. Prose. Incorrect.

*A'tmatattva-viveka-ṭíká.* A commentary on the A'tmatattva-viveka of S'ankara A'chárya. By Govinda.

Beginning. ओं नमः परदेवतायै ।

नत्वा कृष्णपदद्वन्द्वं श्रीगोविन्देन धीमता ।
आत्मतत्त्वं प्रवक्तव्यं केवलं मोचहेतवे ॥

End. विशिष्टत्वप्रतियोगिसमानाधिकरणसम्बन्धेन तथाविधसंयोगनाशस्य तत्र खन्त-
(इतः खण्डितं)

विषयः । आत्मतत्त्वविवेकस्य कियदंशस्य व्याख्यानं ।

---

## No. 1157. काव्यप्रकाशभावार्थः ।

Substance, country-made yellow paper, 17 × 2½ inches. Folia, 29. Lines, 7 on a page. Extent, 1,027 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa, Bhuvanamohana Vidyáratna Bhaṭṭáchárya. Appearance, decayed. Prose. Incorrect.

*Kávyaprakás'a-bhávártha.* A commentary on the Kávyaprakása of Mammaṭha Bhaṭṭa—a treatise on Rhetoric. By Rámakṛishṇa.

Beginning. ओं नमः कृष्णाय ॥

सर्व्वैः काव्यैरुच्यमानं प्रणम्य मरमेश्वरं ।
काव्यप्रकाशभावार्था रामकृष्णेन गीयते ॥

End. भावप्रत्ययरूपतद्धितार्थस्यैव विधेयतया भानेऽलक्ष्य (इतः खण्डितं)

विषयः। काव्यप्रकाशस्य व्याख्यानम्।

---

## No. 1158. क्षणभङ्गुरवाददीधितिटिप्पनी।

Substance, country-made yellow paper, $15\frac{1}{2} \times 3$ inches. Folia, 7. Lines, 8 on a page. Extent, 346 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Bhuvanamohana Vidyáratna Bhaṭṭáchárya. Appearance, decayed. Prose. Incorrect.

*Kshanabhañgura-váda-dídhiti-ṭippaní.* A gloss on the commentary of Raghunátha on the section on mutability of matter in the *Anumána-chintámaṇi* of Gañges'a.

Beginning. (प्रारम्भे चतुर्विंशत्यधिकशतपत्राणि न सन्ति) यतं, विभिन्नकालावच्छिन्नमेक-धर्म्मिणि कार्य्यकारित्वाकारित्वसत्वं।

End. सङ्ग्राह्यसङ्ग्राहकभाव इति भावं स्पष्टयति तथा चेति, ननु व्याप्य (इतः खण्डितं)

विषयः। क्षणभङ्गुरवाददीधितिव्याख्यानम।

---

## No. 1159. प्रत्यक्षालोकरहस्यं।

Substance, country-made yellow paper, $17 \times 3$ inches. Folia, 49. Lines, 7 on a page. Extent, 3,738 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Haramohana Chudámaṇi. Appearance, decayed. Prose. Incorrect.

*Pratyakshá loka-rahasya.* A gloss on Jayadeva Mis'ra's commentary on the Pratyaksha Khaṇḍa of Gañges'a's Chintámaṇi. By Mathuránátha Tarkavágís'a.

Beginning. नमो गणेशाय।

श्रीमता मथुरानाथतर्कवागीशधीमता।

विशदीक्रत्य दर्श्यन्ते प्रत्यक्षालोकफक्किकाः॥

निर्विघ्नं प्रारीप्सितग्रन्थसमाप्तिकामनया क्कतं स्तुतिपूर्वकं भगवत्प्रार्थनरूपं मङ्गल

मिथ्यशिष्याय्ये आदौ निबध्नाति—वक्त्राणीति॥

End. अप्रामाण्यग्राहकेति ॥ प्रकृतप्रामाण्याश्रये ज्ञाने प्रकृतप्रामाण्यविरोधिग्राहकेत्यर्थः
अ (इतः खण्डितं)

विषयः। प्रत्यक्षालोकव्याख्यानं।

---

## No. 1160. सामान्यलक्षणाव्याख्या ।

Substance, country-made yellow paper, 8¼ × 4½ inches. Folia, 26. Lines, 11—13 on a page. Extent, 482 s'lokas. Character, Bengali. Date, Sk. 1785. Place of deposit, Navadvípa. Haramohana Chuḍámaṇi. Appearance, new. Prose. Incorrect.

*Sámánya-lakshná-vyákhyá.* A gloss on Jagadís'a's commentary on the commentary of Raghunátha on the section on the major term in the Anumána Chintámaṇi of Gaṅges'a. By Haramohana.

Beginning. श्रीरामो जयतु ॥
श्रीराममिव मत्तातं श्रीरामं पुरुषोत्तमं ।
शिरोमणितयाख्यातं वन्देऽहमतियत्नतः ॥
सामान्यलक्षणा व्याख्या जगदीशेन या कृता ।
तां टिप्पनीं श्रिया युक्तास्तनुते हरमोहनः ॥
नानाशास्त्रविचारणारणरटच्छङ्काहिसम्मर्द्दिन-
स्तच्छ्रीरामशिरोमणेः पितुरिदं पादाम्बुजं प्रार्थये ।
टीका श्रीहरमोहनेन बहुशो यत्नात्कृता साम्प्रत-
मन्तेवासिगणस्य तोषजननी भूयाद्विपश्चिन्मुदे ॥
न्यायादिशास्त्रनिपुणानतिधीरगण्यान्
विज्ञान् प्रणम्य विततं परिवद्यामि ।
दूष्यं वचो यदि पुनः परिशोधनीयं
तस्मात्परोपकृतये च सतां हि यत्नः ॥

End. सैव प्रागभावव्यञ्जका इत्यपि वदन्ति ।
नत्वा रामपदारविन्दयुगलं प्रोत्फुल्लपङ्केरुहं,
रम्यं श्रीहरमोहनद्विज इहच्छात्रेच्छयैवेत्यहं ।
शाके बाणवसुद्धीन्दुविमितेऽब्दः पुस्तकं निर्ममे ॥

विषयः। सामान्यलक्षणाजागदीशीटिप्पनीव्याख्यानं।

---

## No. 1161. कारककौमुदी ।

Substance, country-made yellow paper, 18 × 3 inches. Folia 12 Lines, 7 on a page. Extent, 467 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Krishṇakánta S'iroratna. Appearance, old. Prose. Correct.

*Káraka-kaumudí.* A commentary on the section on cases, in the Sanskrit grammar called Kátantra.

Beginning. अथापादानम् । तत्र यतोऽपैति तदपादानमिति कातन्त्रसूत्रम्,

End. एवं देवदत्तस्य सामीत्यत्र षष्ठ्या देवदत्तसकः सामीति गम्यते ।

Colophon. इति कारककौमुदी समाप्ता ।

विषयः । कातन्त्रसूत्रमूलकः कारकार्थविचारः ।

---

## No. 1162. क्रियायोगसारः, पद्मपुराणान्तर्गतः ।

Substance, country-made yellow paper. Folia, 226. Lines, 6—7 on a page. Extent, 3,411 s'lokas. Character, Bengali. Date, ? Place of deposit, Navadvípa. Krishnaka'nta S'iroratna. Appearance, decayed. Prose. Incorrect.

*Kriyáyogasára.* A part of the Padma Purána. It is reckoned to be the most authentic portion of the Purána in question. It has been twice printed in Calcutta, and MSS. are common.

Beginning. श्रीहरये नमः ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
लक्ष्मीनाथपदारविन्दयुगलं ब्रह्मेश्वराद्यामर-
श्रेणीनम्रशिरोमणिन्नममलं वन्दामहे सन्ततम् ।
भक्त्या योगिमनस्तडागसुषमासन्दोहहृद्धुत्तमं
गङ्गाम्भोमकरन्दबिन्दुनिकरं संसारदुःखापहम् ॥

यां मूर्त्तिं बहुधा विधाय भगवान् रचत्यशेषं जगत्
यत्पादार्च्चनतत्परा न हि पुनर्मज्जन्ति विश्वार्णवे ।
सर्व्वप्राणिहृदम्बुजेषु वसतिर्यस्य प्रभोः सन्ततं
सव्यक्रोड़धृतेन्दिराय हरये देवाय तस्मै नमः ॥
वेदेभ्य उद्धृत्य समस्तधर्म्मान् योऽयं पुराणेषु जगाद देवः ।
व्यासस्वरूपेण जगद्धिताय वन्दे तमेकं कमलासमेतम् ॥

End. इदमतिशयगुह्यं निर्गतं व्यासवक्त्रात्-
सरसतरपुराणं प्रीतिदं वैष्णवानां ।
चिरममरवरौघैर्वाञ्छिताङ्घ्रेर्मुरारेः
सकलभुवनकर्त्तुश्चक्रिणः प्रीतयेऽस्तु ॥

Colophon. इति श्रीपद्मपुराणे क्रियायोगसारे व्यासजैमिनिसंवादे युगधर्म्मनिरूपणं नाम पञ्चविंशोऽध्यायः ॥ समाप्तश्चायं क्रियायोगसारः ॥

विषयः । अत्र पञ्चविंशतिः अध्यायाः सन्ति, तत्र प्रथमे—सूतशौनकसंवादः । जैमिनिवाक्यम् । व्यासवाक्यम् । भगवत्कथाश्रवणफलम् ।

२—सृष्टिप्रक्रिया । सागरनामानि । भगवद्भक्तमाहात्म्यलक्षणे । मधुकैटभप्रसङ्गः । ब्रह्मकृतस्तुतिः । वैष्णवमाहात्म्यलक्षणे ।

३—क्रियायोगतत्त्वमाहात्म्य । गङ्गाया गुणः । विष्णुपूजाफलम्, दानादीनां फलं, एकादशीभक्तिः, धात्रीभक्तिः, तुलसीभक्तिः, अतिथिपूजनम्, एतेषां गुणसंवादः फलसंवादश्च ।

४—प्रयागमाहात्म्यम् । इतिहासः । गङ्गासागरसङ्गमः ।

५—माधवचरित्रम् । चन्द्रकलाप्रसङ्गः ।

६—गन्धिनीप्रसङ्गः । सुलोचनावाक्यम् । विद्याधरप्रसङ्गः । प्रचेष्टप्रसङ्गः ।

७—सुलोचनावाक्यम् । भीमनादवाक्यम् । धर्म्मबुद्धिराजप्रसङ्गः । गण्डकनिपातनम् ।

८—वीरवरवाक्यम् । माधववाक्यम् । महाविष्णोः प्रतिमा । माधवकृतस्तवः । माधवं प्रति भगवद्वाक्यं । पुनर्गङ्गामाहात्म्यम् ।

९—विष्णुपूजाफलम् । माघे तदाधिक्यं । पुष्पफलमाहात्म्य । यमदूताः । विष्णुदूताः । नारायणनाममाहात्म्य ।

१०—प्रातःकृत्यानि । तत्र नारायणस्मरणं, निद्राभञ्जनं, विष्णुगृहमार्ज्जनं, भगवत्पूजादिकञ्चेति । विष्णुपादोदकमाहात्म्य । नैवेद्यमाहात्म्य ।

११—फाल्गुनादिमासविशेषे द्रव्यविशेषदानफलानि । अश्वत्थसेचनादि-

फलम्। ब्राह्मणकृतस्तुतिः। भगवतो ब्राह्मणस्य वरलाभः। अश्वत्थमाहात्म्यम्॥
१२—ज्यैष्ठे विष्णुपूजनं। आषाढ़े तथा। श्रावणभाद्रयोरपि। वैष्णवजनस्य रात्रिभोजननिषेधः। एकवस्त्रपरिधानेन पूजननिषेधः। सर्वकार्य्येष्वेव तिलस्यावश्यकत्वं। बाहुद्वये शङ्खचक्रादेरङ्कनप्रशंसा। आश्विने कार्त्तिके च विशेषपूजादिकं। ब्राह्मणकृतशिवस्तुतिः। शिवकर्त्तृकं ब्राह्मणाख्यानवर्णनम्।
१३—अग्रहायणपौषयोः पूजाविशेषोपाख्यानम्। पूजासमये पाषण्डजनसम्भाषणनिषेधः। वैनतेयाङ्कितघण्टाप्रशंसा। वीणादिवाद्यविशेषाणां वादनप्रशंसा। मुखवाद्यफलम्। मासे मासे हरिपूजनप्रशंसा।
१४—नारायणमाहात्म्यम्। सर्वास्वेव क्रियासु विष्णोः स्मरणं। सत्ययुगीयसत्यवसुनामकस्य वैश्यस्य आख्यानम्। रामनाममाहात्म्यम्। विष्णुदूतयमदूतयोः कलहः। ततः परस्परयुद्धे यमदूतस्य पराभवः, पराजितस्य तस्य यमनिकटे अभियोगः, यमस्य मीमांसा। षड़क्षररामनन्त्रस्य प्रशंसा।
१५—महाविष्णुमाहात्म्यम्। चक्रिकोपाख्यानम्। तत्कृतस्तोत्रम्।
१६—पुनर्विष्णुमाहात्म्यम्। भद्रतनूपाख्यानम्। सुमध्यवाक्यम्। मार्कण्डेयवाक्यं। दान्तभद्रयोः परस्परालापः। अष्टोत्तरशतं नामानि। भद्रतनुरचितजगन्नाथस्तोत्रम्।
१७—पुरुषोत्तमतीर्थमाहात्म्यम्। अन्नसमुद्रयोर्माहात्म्यम्। बलभद्रसुभद्राश्रीकृष्णदर्शनं। फाल्गुनमासे गोविन्ददर्शनं। एवं चैत्रादिमासे जगन्नाथदर्शनफलम्। गुण्डिचामण्डपे श्रीकृष्णदर्शनफलम्। शयने उत्थाने च श्रीजगन्नाथदर्शनफलम्॥
१८—पुनः श्रीकृष्णमाहात्म्यम्। उर्व्वीशोपाख्यानम्। विष्णुनैवेद्यमाहात्म्यम्। खञ्जनोपाख्यानम्। स्वप्ने केशवदर्शनं। खञ्जनिकृतस्तवः। ब्राह्मणवाक्यम्। भगवद्वाक्यम्।
१९—दानतपोमाहात्म्यम्। हरिशर्म्मोपाख्यानम्।
२०—पात्रार्हणाविवेचनम्। ब्राह्मणप्रशंसा। विष्णुबुद्ध्या ब्राह्मणे नमस्कारविधिरवस्थाविशेषे च निषेधव्यवस्था। विप्रपादसेचनमाहात्म्यप्रस्तावे हरिशर्म्मणः पूर्वजन्मवृत्तान्ताद्युपन्यासः।
२१—एकादशीमाहात्म्यं। दशमीकृत्यम्। विष्णुमन्दिरे शङ्खादिचित्रलेखनप्रशंसा। विष्णुपूजा।
२२—कोटिरथाख्यराजोपाख्यानम्। पुण्यात्मनां पापिनाञ्च पथिनिर्द्देशः। नरकवर्णना।

२३—तुलसीमाहात्म्यन्तथा धात्रीमाहात्म्यम्।

२४—अतिथिसत्कारमाहात्म्यम्।

२५—सत्यत्रेतादियुगानां माहात्म्यम्, पाठफलं श्रवणफलञ्चेति ॥

---

No. 1163. सत्काव्यकल्पद्रुमस्य प्रथमखण्डः।

Substance, country paper, 13½ × 5½ inches. Folia, 20. Lines, 9—10—11 on a page Extent, 725 s'lokas. Character, Bengali. Date, Sk. 1795. Place of deposit, Navadvípa. Kṛishṇakánta S'iroratna. Appearaance, new. Verse. Incorrect.

*Satkárya-kalpadruma.* Volume first of a collection of miscellaneous verses from standard authors interspersed with verses composed by the compiler. By Kṛishnakánta Kavi.

Beginning. ध्यात्वा शङ्करपादपद्मयुगलं प्राचीनपद्यावलीं
सङ्गृह्य स्वकृतं तथा सुकविताहन्दं सदानन्ददम्॥
साहित्यार्णवरत्नराजिसदृशं श्रीकृष्णकान्तः कवि-
र्धीराभीष्टफलप्रदस्प्रतनुते सत्काव्यकल्पद्रुमम्॥

End. संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे।
काव्यामृतरसास्वादः सङ्गमः सुजनैः सह॥

विषयः। अत्र महाकविरचितानामुद्भटप्रायाणामपि प्रसिद्धमहाकविप्रणीतग्रन्थेभ्यः सङ्गृहीतश्लोकानां स्वकृतानाञ्च सङ्ग्रहस्तत्र यत् स्वविरचितं पद्यं तत् स्वस्तीदृश (*) चिह्नाङ्कितमिति। तत्रादौ आशीर्वादश्लोकाः। ततः शक्तिविषयकश्लोकाः। रामविषयकश्लोकाः। कृष्णविषयकश्लोकाः। काशीविषयकश्लोकाः। चैतन्यदेवविषयकश्लोकाः। ग्रीष्मकालवर्णना। वर्षाकालवर्णना। शीतकालवर्णना। वसन्तवर्णना। अशैत्यसौगन्ध्यमान्द्यत्रिविधगुणयुक्तवायुवर्णना। प्रभातकालवर्णना। अथ व्यवहारोपयिकनानातात्पर्य्यप्रकाशकनानाविधश्लोकास्तत्र सहायप्रशंसा। नारिकेलतरुविषयकश्लोकाः। दशैा वर्णना। गुणप्रशंसा। कूटकविताः। संस्कृतवङ्गहिन्दिपारस्यभाषासङ्कलितश्लोकस्तथा संस्कृतवङ्गहिन्दीखण्डभाषामिश्रितश्लोकः। समस्यापूरणम्। ततः कतिचित्साधारणश्लोकाः।

---

## No. 1164. सत्काव्यकल्पद्रुमस्य द्वितीयखण्डः ।

Substance, S'rírámapura paper, 12½ × 4 inches. Folia, 9. Lines 9. on a page. Extent, 303 s'lokas. Character, Bengali. Date, Sk. 1795. Place of deposit, Navadvípa. Krishṇakánta S'iroratna. Appearance, new. Verse. Generally correct.

*Satkávya-kalpadruma.* Volume second of the collection described in the last preceding Number.

Beginning. अथादिरसश्लोकाः ।

स्निग्धमालपसि रुक्षमेव वा त्वत्कथैव सखि मे रसायनम् ।
शीतलं सलिलमुष्णमेव वा पावकं हि शमयेन्न संशयः ॥

End. इयं सुरतरङ्गिणी न पुनरत्र नौ सङ्गमोऽ-
भवत्तरणिमज्जनं पथिक नैव भीतिं भज ।
कुरुष्व गुरुसाहसं विपुलचारुकुम्भद्वयम्
इयद्दुनघनागमे घनरसस्य पारं व्रज ॥

समाप्तोऽयं सत्काव्यकल्पद्रुमः ॥

सत्काव्यकल्पद्रुम एष धीराः सम्पन्न आसीत् भवतां सुहृत्तैः ।
सर्वं गृहीत्वा फलमेतदीयं कुर्वन्तु दीनग्रहसार्थकत्वम् ॥

Colophon. श्रीकृष्णकान्तशर्म्मणा स्वसङ्गृहीतैः स्वकृतैश्च श्लोकैः सङ्कलितमिदं पुस्तकम् ॥

विषयः । प्रसिद्धकविविरचितग्रन्थेभ्यः सङ्गृहीतानां उद्भटानां श्लोकानां स्वरचितानां पद्यरत्नराजानामादिरसप्रोद्दीपकानां नानाविधानां समुच्चयः ।

---

## No. 1165. मानवधर्म्मशास्त्रं ।

Subtance, Palm leaf. 13½ × 2 inches. Folia, 174. Lines, 4 on a page. Extent, 2,684 s'lokas. Character, Bengali. Date, Sk. 1453. lace of deposit, Government of India. Appearance, very old and decayed. Verse. Scrupulously correct.

*Mánava-dharma-s'ástra.* This codex of the Institutes of Manu bears date S'aka 1453, and is 343 years old. It is written in a clear,

firm, practised hand, and is throughout most scrupulously correct ; but the letters are cramped, and most of them have an antique look (vide plate III). It differs in several places from the published texts, using in some places synonymous words, but in others new words which alter the sense of the passages in which they occur. The following is a list of the variations from the text of the Calcutta editions of 1832, and 1865, and of Sir Graves Chamney Haughton's London edition of 1825.

श्रीभवानीचरणवन्द्योपाध्यायकर्तृकमुद्रितमानवधर्म्मशास्त्रपाठात् प्राचीनमानवधर्म्मशास्त्रस्य पाठान्तरं ।

१—अ ४२—श्लोके मनुष्याश्च स्थाने मानुषाश्च ।

१—अ ४६—श्लोके स्थावराः स्थाने तरवः ।

२—अ ११—श्लोके ते मूले स्थाने ते तूभे ।

२—अ ७९—श्लोके त्वचेवाहिः स्थाने त्वचो वाऽहिः (१) ।

२—अ ९१—श्लोके पञ्चैषां स्थाने पञ्चैव ।

२—अ ९७—श्लोके त्यागश्च स्थाने त्यागाश्च ।

२—अ ९९—श्लोके पात्रादिवोदकं स्थाने पादादिवोदकं । *

२—अ १२१—श्लोके आयुर्विद्या स्थाने आयुः प्रज्ञा ।

२—अ १५६—श्लोके वृद्धः स्थाने स्थविरः ।

२—अ १६०—श्लोके वेदान्तोपगतं स्थाने वेदान्ताधिगतं ।

२—अ १९०—श्लोके विधीयते स्थाने प्रचक्ष्यते ।

२—अ २४५—श्लोके गुर्व्वर्थमाहरेत् स्थाने गुर्व्वर्थमाचरेत् ।

२—अ २४६—श्लोके छत्रोपानहमासनं स्थाने छत्रोपानहमन्ततः ।

३—अ १२—श्लोके क्रमशो वराः स्थाने क्रमशोऽवराः । †

३—अ २०—श्लोके प्रेत्यचेह स्थाने प्रेत्येह च ।

३—अ २२—श्लोके विद्याद्धर्म्मान्नराक्षसान् स्थाने विद्याद्धर्म्म्यानराक्षसान् ।

३—अ २४—श्लोके पैशाचश्चाष्टमोधमः स्थाने पैशाचः प्रथितोष्टमः ।

३—अ ४७—श्लोके शेषास्तु स्थाने शेषाः स्युः ।

---

(१) इवार्थे वाशब्दः ।

* Haughton gives the old reading.

† Haughton gives the mark of the elided a.

requires twelve instants in the first foot, eighteen in the second, twelve in the third, and fifteen in the fourth; but as the verse stands in the MS. and also in another codex belonging to the Serampore College, the second foot is short by one instant, and the last by two instants. The words which give the date are *rasa* = 6, *eka* = 1, and *vins'a* = 20; if we add these figures they would give 27 years; if we read them from the right we get 0216, which is intolerable in Sanskrit; transferring the figures intellectually the product is 2016, or reading *eka* and *vinsa* together for twenty-one, and intellectually reading from the right, the result is 216, or reading them after writing them down we have 126. None of these figures correspond with history. Leaving out of consideration the two larger figures which are obviously inadmissible, if we accept 216, Lakshmaṇa Sena would be too far removed from 1205, the year in which the work was written, to admit of the author's father serving in the army of that king. Even 126 is too long a period, and can be tolerated only by the supposition that the father of the author came to the command at a very early period of life at about the end of Lakshmaṇa's reign, that he got his son late in life, and that the son wrote the work at a very advanced age. If we accept the lowest figure (27) and believe the Lakshmaṇa of the author to be the last king of the Sena dynasty, the same whom Muhammadan writers call Lákhmaniya, the period of the reign would be too short, for the author of the *Tabkát i Náçiri* assigns him a reign of eighty years. It is useless, however to argue on the subject until the right reading of the verse is obtained. The last foot probably contained another figure.

---

## No. 1182. ब्रह्मपुराणं ।

Substance, country-made yellow paper, 19 × 4⅓ inches. Folia, 248. Lines, 8 on a page. Extent, 9,424 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, old. Verse. Correct.

*Brahma Puráṇa.* One of the great Puráṇas attributed to Vyása. The work comprises one hundred and twenty-three chapters. *Contents:* 1, Cosmogony. 2, Origin and descendants of Manus. 3, Rise of the Devas and Asuras. 4, Birth of Pṛithví, and derivation of the

word Mediní (name of the earth). 5, Cycles of Manus. 6, Creation of the sun, of shadow, of Saturn, and of As'visníkumára. 7, Solar race; story of Ilá; character of Yuvanás'va and other kings; destruction of Dhuṇḍa; story of Satyavrata and the deluge. 8, Story of Tris'anka; of Harischandra; of Sagara; destruction of Haihayas; descendants of Sagara and of the Nishádhas. 9, Creation of the moon and herbs; Rájasúya sacrifice performed by Soma, the moon; creation of Budha. 10, Story of Pururavas; marriage of Jahna with Káverí, origin of Vis'vámítra; of the river Kausikí; descendants of the Rishis. 11, Story of Ayu and others; story of Divodása; praise of Váráṇasí. 12—13. Story of Yayáti and of his descendants; ditto of Kártaviryárjuna. 14, Descendants of Kroshṭu; birth of Kṛishṇa. 15—16, Descendants of Vrishṇi; story of Samantyaka. 17, Continents and islands. 18, Extents of land and of water. 19, Nether regions. 20, Hell. 21, Spheres of the sun, moon, and stars. 22, Polar star. 23, Sacred places. 24, Story of certain sages and Bráhmaṇs. 25, Land fit for sacrifice. 26, Praise of the sacred pool of Koṇáditya. 27—31, Adoration of the sun, marriage of the sun, his hundred and eight names. 32—36, Birth and marriage of Párvatí. 37—38, Daksha's feast. 39, Description of Ekámra-tírtha, or Bhuvanes'vara. 40, Description of Utkala, Vaitarini and Purus'ottama. 41, Ditto of Avantipura. 42—43, Ancient history of Purus'ottama. 44—49, Story of Indradyumna and his establishment of the Temple of Jagannátha. 50 to 54, Story of Márkaṇḍeya, and his devotion to Jagannátha. 55, Praise of the Márkaṇḍeya Tank. 56, Praise of Narasiñha: 57, Ditto of Svetamádhava. 58—60, Directions for and praise of bathing in the sea near Puri. 61, Praise of Panchatírtha. 62—63, The feast of Mahájyais'hṭhí, or the bathing festival. 64, Jagannátha's journey to Guṇḍíchá. 65, The twelve annual festivals. 66, The regions of Vishṇu. 67, Special merits of the Kshetra. 68, Praise of Ananta-Vásudeva. 69, The merit of dying at this kshetra. 70, The story of Kaṇḍu. 71 and 72, The various forms of Vishṇu described. 73, Birth of Krishna. 74—78, Krishna's early deeds. 79, Amours of Kṛishṇa and the Gopís. 80, The journey of Akrura to Gokula with the news of Kṛishṇa. 81, Departure of Baladeva and Kṛishṇa to Mathurá. 82—83, Kṛishṇa's feats of valour at Mathurá and destruction of Kañsa. 84, Destruction of Panchajana and the

recovery of a conch-shell from him. 85, Attack of Mathurá by Jarásandha. 86, Encounter of Kṛishṇa with Muchukunda. 87, Baladeva's return to Gokula. 88, He indulges in spirituous drinks. 89, Marries Rukminí. 90, Destruction of Sambara. 91, The wives of Krishṇa; marriage of Aniṛuddha with the grand-daughter of Rukmin; Gambling of Baladeva and Rukmin; destruction of Rukmin. 92, Destruction of Tárakásura. 93, The loot of Párijata flower. 94, Kṛishṇa's assumption of sixteen thousand and one hundred forms for the gratification of his numerous wives. 95—96, Marriage of Aniruddha with Ushá. 97, Vásudeva kills Pauṇḍra. 98, Rape of the daughter of Duryodhana by Sámba and the battle with Baladeva. 99, Destruction of Dvivida. 100, The fall of the Yádavas. 101, Funeral of Baladeva and Kṛishṇa; Arjuna's discourse with Ashṭávakra and return to Hastinápur; the Páṇḍava's retirement to a wilderness. 102, The ten incarnations of Vishṇu. 103, The regions of Yama described. 104, Sins and their appropriate punishments. 105, Vicious actions; s'ráddhas. 106, Good behaviour, treatment of vicious men in the regions of Yama. 107, Causes which lead to the transmigration of human souls into animal forms. 108, The course of creation. 109, The regions of the Pitris; s'ráddha described in detail. 110, Daily and occasional s'ráddhas and articles fit to be offered on those occasions. 111 and 112, Duties of the different orders of society. 113, Acts which reduce Bráhmaṇs to the condition of S'údras. 114 and 115, Means of translation to heaven. 116, Reflection of Hari the only means of severing the bonds of the earth. 117, The after-life of Vaishṇavas. 118, Praise of keeping up the night on the 11th of the moon; story of a Chaṇḍála; ditto of a Bráhmaṇa and a Rákshasa; ditto of Urvasí and a Bráhmaṇa. 119, The illusion of Vishṇu. 120 and 121, Duties to be observed in the present Kali age. 122, Periodical destruction of the earth. 123, Substantial destruction of the earth; Sáṅkhyayoga; praise of the Puráṇa. Wilson's Vishṇu Puráṇa I p. XXVII.

Beginning. यस्मात् सर्व्वमिदं प्रपञ्चर(?स)हितं माया जगज्जायते
यस्मिंस्तिष्ठति याति चान्तसमये कल्पाच्च कल्पं पुनः ।
यं ध्यात्वा मुनयः प्रपञ्चरहितं विन्दन्ति मोक्षं ध्रुवं
तं वन्दे पुरुषोत्तमाख्यमखिलं नित्यं विभुं निश्चल ॥

यं ध्यायन्ति बुधाः समाधिसमये शुद्धं वियत्सन्निभं
नित्यानन्दपदं प्रसन्नममलं सर्व्वेश्वरं सर्व्वगं ।
व्यक्ताव्यक्तपरं प्रपञ्चरहितं ध्यानैकगम्यं विभुं
तं संसारविनाशहेतुमजरं नित्यं हरिं धीमहि ॥
सुपुण्ये नैमिषारण्ये विचित्रे सुमनोहरे ।
नानामुनिजनाकीर्णे नानापुष्पोपशोभिते ॥

End. व्यक्तं स एव चाव्यक्तं स एव पुरुषोऽव्ययः ।
परमात्मा स विश्वात्मा विश्वरूपधरो हरिः ॥
व्यक्ताव्यक्तात्मिका तस्मिन् प्रकृतिः सम्प्रलीयते ।
पुरुषश्चापि भो विप्रा व्यापिन्यव्याहतात्मनि ॥
द्विपरार्द्धात्मनः कालः कथितो यो मया द्विजाः ।
तदहस्तस्य विप्रेन्द्रा विष्णोरीशस्य कथ्यते ॥
व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा ।
तत्र स्थिता निशा चान्या तत्प्रमाणं तपोधनाः ॥
नैवाहस्तस्य न निशा नित्यस्य परमात्मनः ।
उपचारस्तथाप्येष तस्य ब्रह्मन्तु कथ्यते ॥
इत्येष मुनिशार्दूलाः कथितः प्राकृतो लयः ।
इत्यादिब्रह्मपुराणं समाप्तं ॥ शुभमस्तु ॥

विषयः । अत्र चतुर्विंशत्यधिकशताध्यायाः, श्लोकाश्च दशसहस्रसङ्ख्यकाः ।
१ अध्याये, सङ्क्षेपेण सृष्टिवर्णनं । २ अ, मन्वादिवंशकथनं । ३ अ, देवासुराणामुत्पत्तिवर्णनं । ४ अ, पृथोरुत्पत्तिचरित्रकीर्त्तनं, भूमेर्मेदिनीतिसञ्ज्ञाव्युत्पत्तिकथनञ्च । ५ अ, मन्वन्तरानुकीर्त्तनं । ६ अ, आदित्योत्पत्तिः, सञ्ज्ञापरिणयः, मार्त्तण्डनामव्युत्पत्तिः, छायाजननं, शनैश्चरस्य जन्म, अश्विनीकुमारयोरुत्पत्तिवर्णनञ्च । ७ अ, सूर्य्यवंशवर्णनं, इलोपाख्यानं, युवनाश्वादीनां चरित्रकीर्त्तनं, धुन्धुवधः, सत्यव्रतोपाख्यानकथनञ्च । ८ अ, त्रिशङ्कूपाख्यानं, हरिश्चन्द्रादीनामुत्पत्तिः, सगरनामव्युत्पत्तिः, हैहयादीनां निधनकथनं, सगरवंशवर्णनं, निषधवंशकीर्त्तनञ्च । ९ अ, चन्द्रौषधीनां जन्मकथनं, चन्द्रकृतराजसूययज्ञकीर्त्तनं, बुधस्य जन्मविवरणञ्च । १० अ, पुरूरवआदीनामुपाख्यानं, कावेर्य्या सह जह्नोर्विवाहः, तद्वंशे विश्वामित्रादीनामुत्पत्तिः, कौशिकीनदीविवरणं, क्षत्त्रादीनां वंशकीर्त्तनञ्च । ११ अ, आयुरादीनामाख्यानं, दिवोदासप्रसङ्गेन वाराणसीवर्णनञ्च । १२ अ, ययातिचरितकीर्त्तनं । १३ अ,

विषयः। ययातिवंशकीर्त्तनं, कार्त्तवीर्य्यार्ज्जुनचरित्रवर्णनञ्च। १४ अ, क्रोष्टुवंशकीर्त्तनं, श्रीकृष्णजन्मकथनञ्च। १५। १६ अ, वृष्णिवंशकथनं, स्यमन्तकोपाख्यानवर्णनञ्च। १७ अ, द्वीपानां वर्षाणाञ्च वर्णनं। १८ अ, भूमिसागरद्वीपानां परिमाणादिकीर्त्तनं। १९ अ, पातालविवरणं। २० अ, नरकवर्णनं। २१ अ, चन्द्रसूर्य्यनक्षत्रमण्डलादीनां संस्थानकथनं। २२ अ, भुवनसंस्थितिकीर्त्तनं। २३ अ, तीर्थवर्णनं, तन्माहात्म्यकीर्त्तनञ्च। २४ अ, ऋषिभिः सह ब्रह्मणः संवादकथनं। २५ अ, कर्म्मभूमिप्रशंसा, भारतवर्षपरिमाणादिकीर्त्तनञ्च। २६ अ, कोणादित्यतीर्थतन्माहात्म्यकथनं। २७। २८। २९ अ, सूर्य्यपूजा, द्वादशादित्यकीर्त्तनं, सूर्य्यमाहात्म्यवर्णनं, ऋतुभेदेन सूर्य्यस्य वर्णभेदकथनं स्तवराजकीर्त्तनञ्च। ३०। ३१ अ, सूर्य्योत्पत्तिपरिणयादिकीर्त्तनं, तदष्टोत्तरशतनामकथनञ्च। ३२। ३३ अ, पार्व्वतीजन्मतपस्या-तद्ब्राह्मसंवादादीनां कीर्त्तनं। ३४ अ, पार्व्वतीस्वयम्बरे ब्रह्मादीनामागमनं, पार्व्वत्युत्सङ्गवर्त्तिपञ्चमुखशिशुकर्त्तृकं शक्रादीनां बाहुस्तम्भनं, देवानां शिवस्तुतिः, उद्वाहतत्स्थानवर्णनञ्च। ३५। ३६ अ, देवानां शिवस्तुतिकरणं, गौरीकर्त्तृकहिमालयपरित्यागवर्णनञ्च। ३७। ३८ अ, दक्षयज्ञभङ्गविवरणं, भद्रकालीवीरभद्रयोरुत्पत्तिः, दक्षकर्त्तृकमहादेवस्तुतिकीर्त्तनञ्च। ३९ अ, एकाम्रक्षेत्रवर्णनं, तत्र विन्दुसरोनामतीर्थकीर्त्तनञ्च। ४० अ, उत्कलदेशवर्णनं, तत्र वैतरणीनदीकीर्त्तनं, पुरुषोत्तममाहात्म्यकथनञ्च। ४१ अ, अवन्तीपुरवर्णनं। ४२। ४३ अ, क्षेत्रवर्णनं, पुरुषोत्तमपूर्व्ववृत्तान्तकथनञ्च। ४४। ४५ अ, क्षेत्रवर्णनं, इन्द्रद्युम्नस्य अश्वमेधयज्ञः, भगवत्प्रासादनिर्म्माणवर्णनञ्च। ४६ अ, इन्द्रद्युम्नस्य भगवत्प्रतिमानिर्म्माणचिन्तावर्णनं। ४७ अ, तत्कृतपुरुषोत्तमकारुण्यस्तुतिकीर्त्तनं। ४८ अ, इन्द्रद्युम्नस्य स्वप्ने वासुदेवसन्दर्शनं, वृक्षच्छेदनकाले ब्राह्मणवेशेन हरिविश्वकर्म्मणोः तत्समीपागमनं, भगवत्प्रतिमानिर्म्माणकथनञ्च। ४९ अ, इन्द्रद्युम्नं प्रति साक्षाद् भगवतो वरदानं, ब्रह्मकर्त्तृकपुरुषोत्तमदर्शनकाल-तन्माहात्म्यकीर्त्तनञ्च। ५०। ५१ अ, मार्कण्डेयस्य वटमूलाश्रयणं, प्रलयदर्शनकथनञ्च। ५२। ५३। ५४ अ, मार्कण्डेयस्य भगवत्कुक्षिपरिभ्रमणं, भगवतः स्तुतिः, भगवद्दर्शनलाभकीर्त्तनञ्च। ५५ अ, मार्कण्डेयह्रदमाहात्म्यवर्णनं, श्रीकृष्णमाहात्म्यकीर्त्तनञ्च। ५६ अ, नरसिंहमाहात्म्यवर्णनं। ५७ अ, श्वेतमाधवमाहात्म्यकीर्त्तनं। ५८ अ, समुद्रस्नानविधानं। ५९ अ, श्रीकृष्णपूजाविधिः। ६० अ, समुद्रस्नानमाहात्म्यकथनं। ६१ अ, पञ्चतीर्थमाहात्म्यकीर्त्तनं। ६२ अ, महाज्यैष्ठीप्रशंसा। ६३ अ, श्रीकृष्णस्य स्नानमाहात्म्यकीर्त्तनं। ६४ अ, गुण्डिचा-

विषयः। यात्रामाहात्म्यकथनं। ६५ अ, द्वादशयात्राफलकीर्त्तनं। ६६ अ, विष्णुलोकानुकीर्त्तनं। ६७ अ, क्षेत्रस्य विशेषमाहात्म्यकथनं। ६८ अ, अनन्त-वासुदेवस्य माहात्म्यकथनं। ६९ अ, क्षेत्रे देहत्यागफलकथनं। ७० अ, कण्डूपाख्यानं। ७१। ७२ अ, विष्णोर्नानाविधमूर्त्तिवर्णनं। ७३ अ, अंशावतारकथनं। ७४ अ, श्रीकृष्णजन्मविवरणं। ७५ अ, पूतनावध-शकटासुरहनन-यमलार्ज्जुनमोचनादीनां कीर्त्तनं। ७६ अ, कालीयनागदमनं। ७७ अ, धेनुकासुर-प्रलम्बासुरयोर्बधः, गोवर्द्धनगिरिपूजनकीर्त्तनञ्च। ७८ अ, गोवर्द्धनधारण-कृष्णेन्द्रसंवादादीनां वर्णनं। ७९ अ, गोपीकृष्णयोः सङ्गीतकीर्त्तनं। ८० अ, अक्रूरस्य वृन्दावनयात्रा, केशिवधकथनञ्च। ८१ अ, रामकृष्णयोर्मथुराप्रयाणं, अक्रूरस्य जलमध्ये रामकृष्णसन्दर्शनवर्णनञ्च। ८२ अ, कंस-रजकबधः, रामकृष्णयोर्मालाकारेण सह संवादवर्णनञ्च। ८३ अ, कुब्जादर्शनं, धनुर्भङ्गः, कुवलयापीड़हननं, देवक्यादीनां रामकृष्णसन्दर्शनं, मुष्टिकचाणूरयोर्निपातनं, कंसवधवर्णनञ्च। ८४ अ, पञ्चजनाभिधदैत्यहननं, कृष्णस्य पाञ्चजन्यशङ्खप्राप्तिविवरणं, गुरुदक्षिणादानकीर्त्तनञ्च। ८५ अ, जरासन्ध-कर्त्तृकमथुरारोधवर्णनं। ८६ अ, मुचुकुन्दकर्त्तृकश्रीकृष्णस्तुतिकीर्त्तनं। ८७ अ, बलदेवस्य गोकुले प्रत्यागमनवर्णनं। ८८ अ, बलदेवस्य वारुणीलाभः, तत्क्रीड़ावर्णनञ्च। ८९ अ, रुक्मिणीहरणवर्णनं। ९० अ, शम्बरवधपूर्व्वकं प्रद्युम्नागमनवर्णनं। ९१ अ, कृष्णमहिषीणां वर्णनं, रुक्मिणः पौत्र्या सह अनिरुद्धस्य विवाहः, बलरामरुक्मिणोः द्यूतक्रीड़ा, रुक्मिवधकीर्त्तनञ्च। ९२ अ, नरकासुरवधवर्णनं। ९३ अ, पारिजातहरणं। ९४ अ, कृष्णस्य शताधिकषोड़शसहस्रदेहपरिग्रहकथनं। ९५ अ, उषायाः स्वप्ने अनिरुद्धदर्शनं। ९६ अ, उषानिरुद्धयोर्विलासवर्णनं। ९७ अ, पौण्ड्रकाभिधवासुदेववधकीर्त्तनं। ९८ अ, शाम्बकर्त्तृकदुर्य्योधनकन्याहरणं, बलदेवेन सह कौरवाणां युद्धकीर्त्तनञ्च। ९९ अ, द्विविदनामकवानरवधवर्णनं। १०० अ, शाम्बस्य उदरात् मुषलोत्पत्तिः, उद्धवस्य वदरिकाश्रमगमनं, यादवानां निधनं, रामकृष्णयोः स्वधामगमनवर्णनञ्च। १०१ अ, रामकृष्णादीनामौर्द्ध्वदेहिकक्रियासम्पादनं, दस्यूनां समीपे अर्ज्जुनस्य पराजयः, अर्ज्जुनस्य व्याससमीपगमनं, अष्टावक्रेण सह अप्सरसां संवादकथनं, पाण्डवानां वनप्रवेशकथनञ्च। १०२ अ, ब्रह्मकर्त्तृकहिरण्यकशिपुवरदानकथनं, विष्णोर्दशावतारवर्णनञ्च। १०३ अ, यमलोकवर्णनं। १०४ अ, पापकर्म्मणां पृथक् पृथक् यातनाकथनं। १०५ अ, पुण्यजनककर्म्मकीर्त्तनं, श्राद्धविधिकथनञ्च। १०६ अ, सदाचारकथनं,

विषयः । धार्म्मिकानां यमलोकगमनवर्णनञ्च । १०७ । १०८ अ, येन येन कर्म्मणा तिर्य्यग्योनित्वं भवति तद्विस्तारकथनं, संसारचक्रवर्णनञ्च । १०९ अ, पितृलोकोपाख्यानं, विस्तरेण श्राद्धविधिकथनञ्च । ११० अ, नित्यनैमित्तिकादिश्राद्धविधानं, श्राद्धे विहिताविहितद्रव्यकथनञ्च । १११ । ११२ अ, विस्तरेण वर्णाश्रमाचारधर्म्मनिरूपणं । ११३ अ, केन केन कर्म्मणा द्विजः शूद्रत्वमाप्नोतीति कीर्त्तनं । ११४ । ११५ अ, स्वर्गगमनोपायादिकीर्त्तनं । ११६ अ, हरिस्मरणमेव संसारबन्धनमोचनमित्याख्यानं । ११७ अ, वैष्णवादीनां गतिकथनं ११८ अ, हरिवासरमाहात्म्यं, गीतमाहात्म्यकथनप्रसङ्गेन चण्डालोपाख्यानकीर्त्तनं ब्रह्मराक्षसस्य स्वोत्पत्तिविवरणकथनं, उर्व्वशीब्राह्मणसंवादकीर्त्तनञ्च । ११९ अ, विष्णुमायाकथनं, विविधोपाख्यानवर्णनञ्च । १२० । १२१ अ, कलियुगधर्म्मकथनं । १२२ अ, नैमित्तिकप्रलयकीर्त्तनं । १२३ अ, प्राकृतप्रलयकथनं, साङ्ख्यकथनं, ब्रह्मवादकीर्त्तनञ्च ॥

---

## No. 1183. कृष्णतत्त्वामृतं ।

Substance, country-made yellow paper, 14 × 5 inches. Folia, 24. Lines, 8 on a page. Extent, 484 s'lokas. Character, Bengali. Date ? Place of deposit, S'ántipura, Kálídása Vidyávágís'a. Appearance, new. Prose and verse. Correct.

*Krishṇa-tattvámṛita.* A dissertation on the divinity of Krishṇa; the means of attaining salvation through him; and the dualistic philosophy of the Vaishṇavas. By Rádhámohana Gosvámi.

Beginning. श्रीकृष्णं परमानन्दलक्षणं पीतवाससं ।
प्रणम्य तत्त्वमयममृतं भावभावितं ॥
संसारानलतापार्त्तिहारि भूरिसुखोदयं ।
समुद्भावयति श्रीलमोहनो निगमार्णवात् ॥
तत्र ब्रह्मसंहितायां ।
"ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः ।
अनादिरादिर्गोविन्दः सर्व्वकारणकारणं ॥"
अत्र कृष्णपदं कृष्णशरीरोपलक्षितपरतत्त्वपरं, यशोदास्तनन्धये नवतमालश्यामलत्विषि कृष्णशब्दो रूढ इति भगवच्चतन्यदेववाक्यात् कृष्णवर्णत्वात् पापकर्षणाच्च यौगिकरूढमपीत्यादि ।

End. "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति" सप्तमीयात् "कृष्ण एव परो देवस्तं ध्यायेदिति" गोपालतापनीवचनात् "असारे खलु संसारे सारं कृष्णपदार्चनमिति" गौतमीयात् "ईश्वरः परमः कृष्णः" इत्यादिवचनात्, अन्यनिरपेक्षो निरन्तरं श्रीकृष्णं भजेदिति शं।

Colophon. इति कलियुगपावनावतारश्रीमदद्वैतवंशसम्भवश्रीराधामोहनगोस्वामिभट्टाचार्य्यविरचितं श्रीकृष्णतत्त्वामृतं समाप्तं ॥

विषयः। श्रीकृष्ण एव नित्यनिरतिशयज्ञानानन्दाश्रयः परमेश्वर इति निरूपणं। आत्मनो ज्ञानाश्रयत्वकथनं। ज्ञानस्वरूपत्वकीर्त्तनं। प्रकृतितत्त्वनिरूपणं। मायास्वरूपकीर्त्तनं। प्रसङ्गाद् भ्रमकथनं। परमात्मजीवात्मनोर्भेदः। आत्मज्ञानस्यैव मोक्षहेतुत्वं। श्रीकृष्णस्य गुणभेदेन ब्रह्मपरमात्म-भगवन्नामधेयत्वनिरूपणं। भगवच्छरीरकथनं। गुणावताराः। प्रकृतेरुपादानकारणत्वकथन। परमाणुवादखण्डनं। ब्रह्मोपादानवादिमतनिरासः। साङ्ख्यमतखण्डनं। वृन्दावनलीलातिमधुरं श्रीकृष्णरूपमेव सर्व्वतो मनोहरमिति वर्णनं। भक्तिरेव तत्प्राप्त्युपाय इति कथनं। रूपादीनामप्राकृतत्वादिना शास्त्रे तस्यारूपादिविशेषणदानमिति कथनं। विष्णुपुराणाद्युक्तकेशावतारकथादीनां मीमांसा। भगवद्भक्तिनिरूपणं, तद्विभागादिकञ्च। इति समाप्तिः ॥

---

## No. 1184. कविकान्ता।

Substance, country paper, 16 × $2\frac{3}{4}$ inches. Folia, 95. Lines, 6 on a page. Extent, 3,548 s'lokas. Character. Bengali. Date, Sk., 1599, Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, old and decayed. Prose. Generally Correct.

*Kavikántá.* A commentary on the Raghuvans'a of Kálidása. By Achárjya Gopínátha Kavirája.

Beginning. अव्याज+ +व निजङ्गतोपि —————————— ।
अर्द्धार्द्धसम्पानकृतैकदेहौ गौरीगिरीशौ शिवमावहेतां ॥
विश्वं यशोभिरवदाय तु कालिदासो वाचा वि+ + +नवः पुरुषावतारः।
पुंसां प्रमादयति यस्य गिरां प्रपञ्चो वाणै+ + + + +क+ इवाम्बु सद्यः ॥
कविराजगोपीनाथ+ + +रघुवंशकाव्यस्य ।
व्यञ्जितरसभाशेषं कविकान्ता रच्यते टीका ॥

श्रीकालिदासमुकवेर्वचसि प्रसङ्गाद्बोधितीरजलदाम्बुवचो मदीयं।
आदीयतां सुकृतिभिः कुसुमस्य योगात् रम्भागुण+ + + +बहवो वहन्ति ॥
मनुमहाराजकुलजमहीपतीनां चरितानि विवर्णयिष्यन् सकलकविसार्थवाहः श्रीकालिदासः परदेवतानमस्करणमैहिकामुष्मिकफलप्रदमिति आशीर्वाद-वस्तुनिर्देशावुद्दिश्य देवतानमस्काररूपं महाकाव्यमुखमाह। वागर्थाविति।

End. रघुवृषभो रघुश्रेष्ठः सैनिकैः सह ++++ समीयिवान् सङ्गतः सन् स्वमन्दिरं न्यवर्त्तयत ॥ श्रीः ॥

Colophon. इति श्रीमदाचार्य्यगोपीनाथ+ +कविराजकृतौ कविकान्ताख्यायां रघुवंशटीकायां नवमः सर्गः॥ श्रीः ॥

पूर्व्वसर्गान्ते दशरथस्य पुत्रो + + + + + + नपुत्रोदयो भण्यते इति सर्गयोः सुसम्बिलं ॥

नवनवशरचन्द्रे टिप्पनीं वै रघोस्तु,
समलिखदिति शाके सम्मिते सौम्यवारे।
शशधरपरिपूर्णे श्रावणस्य तृतीये.
मिहिर + + + + + + + + + कृष्णशर्म्मा ॥ (अतः परं खण्डितं)

विषयः। रघुवंशव्याख्यानं नवमसर्गान्तं ॥

---

## No. 1185. बालरामायणं।

Substance, country paper, 17 × 4 inches. Folia, 178. Lines, 5—6 on a page. Extent, 3,783 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura. Rámadhana Vidyávágis'a. Appearance, old. Prose and verse. Incorrect.

*Bálarámáyaṇa.* A drama founded on the incidents described in the Rámáyaṇa and the life of Ráma. By Rájasekhara Kavirája. The work is held in high estimation as a dramatic composition of great merit, and a very good edition of it has lately been published by Paṇḍit Bála S'ástrí of the Benares Sanskrit College.

Beginning. प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना
य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना।
यदात्मानो विद्याः परिणमति यस्यार्थवपुषा
स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥

नान्द्यन्ते सूत्रधारः। ससंरम्भं परिक्रम्य। पुरोऽवलोक्य च सप्रश्रयमञ्जलिं बद्धा, भो भो भुजस्तम्भाम्लानितलक्ष्मीकरेणुना रघुकुलैकतिलकेन महेन्द्रपालदेवेन अधिकृताः सभासदः सर्व्वानेव वो गुणनिधिर्विज्ञापयति, विदितमेवैतद् भवतां। ++++++++++++++++++++++++

End. वशिष्ठः। रामं प्रति, किन्ते भूयः प्रियमुपकरोमि।

रामः। अतः परमपि प्रियमस्ति।

भग्नाजगवं न चापि कुपितो भर्गः सुरग्रामणीः
सेतुश्च ग्रथितः प्रसन्नमधुरो दृष्टश्च वारांनिधिः।
पौलस्त्य हतः स्थितश्च भगवान् प्रीतः श्रुतीनां कविः॥
प्राप्तं यानमिदञ्च याचितवते दत्तं कुबेराय च॥

तथापीदमस्तु। सम्यक् संसारविद्याविषदमुपनिषद् भूतमर्थाद्भुतानां
ग्रथ्नन्तु ग्रन्थिबन्धं वचनमनुपतत् सूक्तिमुक्ताः सुयुक्ताः।
सन्तः सन्तर्पितान्तःकरणमनुगुणं ब्रह्मणः काव्यमूर्त्ते-
स्तत्त्वं सात्त्विकैश्च प्रथमपिशुनितं भावयन्तोऽर्चयन्तु॥

इति निष्क्रान्ताः सर्व्वे।

इति राघवानन्दो नाम दशमोऽङ्कः॥

Colophon. इति श्रीकविराजराजशेखरविरचितं बालरामायणं नाम महानाटकं समाप्तं।

विषयः। आपाणिग्रहणाद् राजपदप्राप्तिपर्य्यन्तं रामचरित्रमवलम्ब्य दशभिरङ्कैः विरचितमिदं महानाटकं। तत्र शुनःशेफप्रवेशमुखेन प्रभातवर्णनं। तापसच्छद्मना प्रविष्टस्य राक्षसस्य तेन सह संलापः। प्रहस्तकेन सह रावणस्य जनकालयगमनं। तत्र सीतां पश्यतस्तस्य औत्सुक्यं, अकृतार्थता च धनुर्भङ्गाय कृतोद्यमस्य सत्यन्योन्यसमरोद्योगे जनकरावणयोः, माध्यन्दिनीं सन्ध्यामनुष्ठातुं निष्क्राम रावणः। इति प्रतिज्ञापौलस्त्यो नाम प्रथमोऽङ्कः।

शिवस्य चात्मनोऽवस्थां वर्णयता भृङ्गिरिटेः सप्रकृतिमनुचिन्तयता नारदेन सह परशुरामरावणयोः वीर्य्यविषयकं कथोपकथनं। सीतामनुसन्धाय रावणस्य मदनचेष्टितं। याचितपरशुना परशुरामेण यदभिहितं, रावणसमीपे मायामयस्य तत्कथनं। भार्गवदशमुखयोर्युद्धं। इति परशुरामरावणीयो नाम द्वितीयोऽङ्कः।

गृध्रमिथुनसंवादप्रसङ्गेन ताड़कानिधनपूर्व्वकं रामचन्द्रेण मारीचो निगृहीत इति सूचना। रावणसमीपे 'सीतास्वयम्वराभिधान'नाटकस्य अभिनयः। तत्र, विश्वामित्रेण सह रामलक्ष्मणयोः स्वयम्बरसभाधिष्ठानं। रामस्य सीता

विषयः। सौन्दर्य्यपक्षपातः। तस्येन सीतामनुसन्धाय रावणस्य उन्मादः। हेमप्रभया समं सीतायाः समागतराजदर्शनं। तत्र नरकासुरपाण्ड्यराजादीनां प्रशस्तिवर्णनोन्मुखायां सत्यां प्रतिहार्य्यां तत्त्वबुद्ध्या तद्वधार्थं रावणेन गृहीते चन्द्रहासे प्रहस्तकर्त्तृकं तन्निवारणं। पुनः, चेदिपति-सिंहलेश्वर-मथुरानाथावन्तिनाथ-क्रथकैशिकाधिपति-काञ्चीपुरेश्वर-लाटेश्वरप्रभृतीनां प्रशस्तिवर्णनं। धनुर्भङ्गे राजकुलस्य अक्षतार्थता तद्भङ्गाय दशमुखस्य उत्थानेच्छा। रामेण कृतेऽपि धनुर्भङ्गे प्रथमतो नाटकधिया तस्य अविश्वासः। जनकेन समर्पितायां जानक्यां रामचन्द्रकरे तस्य च पुनः संरम्भः। सन्ध्यावर्णनं। इति विलक्षलङ्केश्वरो नाम तृतीयोऽङ्कः।

रामचन्द्रं प्रति श्रुतभार्गवसमरसंरम्भेण शक्रेण दशरथः सत्वरं सुरलोकात् तत्र प्रहित इति उपाध्यायवटुसंवादेन सूचितं। पुरन्दरस्यन्दनस्य चतुर्द्दिशं मत्तवारणीयफलकेषु परशुरामचित्रं लिखितमस्तीति वाचमाकर्ण्य मातलेः, सौदामिन्या सह हरकृताक्षेपदेश-रेणुकाशिरश्छेदनादिभार्गवचरित्रचित्रं पश्यतो दशरथस्य विमानाद् विदेहराजमन्दिरावतरणं। सीतां प्रति जनकशतानन्दयोः सुनयोपदेशः। जनकदशरथयोरन्योन्यमाप्यायनं। भार्गवसमीपे रामस्य विनयः। भार्गवनिग्रहाय जनकस्य धनुर्ग्रहणं। विश्वामित्रस्य तन्निवारणं। राममुद्दिश्य भार्गवस्य वैष्णवधनुरर्पणं। लक्ष्मणकर्त्तृकं तत्र ज्यारोपणं। उर्म्मिलादिभिः सह लक्ष्मणादीनां विवाहः। इति भार्गवभङ्गो नाम चतुर्थोऽङ्कः।

माल्यवतो मिथिलानिवासिना स्पर्शेन प्रहितस्य लेखस्य वाचनं। विरचिता सीताप्रतिकृतिः रावणोपच्छन्दार्थं यन्त्रकारेण विशारदनामकेनेति मायामयवचनमाकर्ण्य, मयापि सीताधात्रेयिका कारिता सिन्दूरिका नाम, किञ्च, तत्प्रदर्शनेन दशाननः प्रलोभनीयस्त्वयेति तत्प्रति माल्यवत आदेशः। सीतासन्दर्शनाभिलाषिणो रावणस्य मायामयवाक्यस्मरणात् सीतानयनाय प्रहस्तं प्रति समादेशः। सीतां पश्यतः तस्य पूर्व्वरागः। तत्र सिन्दूरिकायाः सीतापूर्व्वरागवर्णनञ्च। सीतां प्रति तस्य स्वागतप्रश्नः। सीताया अनुरागव्यञ्जनं। तत्करस्पर्शेन सारिकाधिष्ठितं सीताप्रतिकृतियन्त्रमिति रावणस्य निश्चयः। तस्य चित्तविनोदनार्थं लीलोद्यानप्रवेशः। ऋतूनां वर्णनं। तत्र तस्य वैधुर्य्यवर्णनञ्च। रावणकृतमदनोपालम्भः। मन्दरकामिनी-हिमगिरिसुन्दरीप्रभृतीनां तत्सेवनार्थमागतानां 'पर्व्वतकलत्राङ्गसङ्गो नितरां तापायेति' तासां विसर्ज्जनं। रम्भामेनकादीनामप्सरसां ताम्रपर्णीमुरलाप्रभृतीनां नदीनाञ्च

विषयः। सदुपचारः। वारुणीलक्ष्मीसरस्वतीनां तत्कृतनतिरस्कृतिः। इन्दीवराकर चन्द्रबिम्बमवलोक्य 'पुरन्दरोऽयं सीतामालिङ्गतीति' बुद्ध्या तस्य पुनः चन्द्रहासस्मरणं। अत्रान्तरे छिन्ननासायाः शूर्पणखाया रावणसमीपे स्वावस्थाप्रदर्शनं। रावणकर्तृकतत्समाश्वासनञ्च। इति उन्मत्तदशाननो नाम पञ्चमोऽङ्कः।

शूर्पणखामायामययोर्माल्यवता सह संवादः। अथैकदा कैकेय्या सममसुरानीकविजयाय दशरथे पुरुहूतं समुपस्थितवति तद्रूपधारिणौ रामचन्द्रं सपदिछलयितुमयोध्यां शूर्पणखा अहञ्च प्रापतुः। ततश्च मन्थरारूपधारिण्या शूर्पणखया 'महाराज! अद्य कैकेयी त्वया प्रतिपन्नं वरद्वयं याचते' इत्युक्तेन मया निर्व्वासितो राजपुत्रः प्रहस्तश्च गन्तुं वनायेति माल्यवत्समीपे मायामयस्य कथनं। अत्रान्तरे कैकेय्या सह दशरथस्य अयोध्याप्रवेशः। वामदेवप्रमुखात् रामस्य निर्व्वासनं श्रुत्वा तयोर्मूर्च्छा। लक्ष्मणघ्नयोस्तयोर्विलापादि च। सुमित्राया वामदेवप्रदत्तपत्रिकावाचनं। तत्र समागतस्य सुमन्त्रस्य सर्व्वेषां समीपे नर्म्मदापरपारगमनपर्य्यन्तं रामवनवासवृत्तान्तकथनं। अनन्तरमागतस्य जटायुर्दूतस्य रत्नशिखण्डस्य तेषां पुरतः, 'रामकृतमायामृगानुसरण-सीताहरण-जटायुःपतनादि'वृत्तान्तकीर्त्तनं। इति निर्दोषदशरथो नाम षष्ठोऽङ्कः।

वैतालिकयुगलप्रवेशमुखेन रामकृतखरदूषणबध-बालिनिग्रहादीनां हनूमत्कृतसमुद्रोल्लङ्घनाशोकवनदलनादीनाञ्च कीर्त्तनं। समुद्रकूलोपविष्टस्य रामस्य चेष्टावर्णनं। रामेण परित्यक्ते आग्नेयास्त्रे गङ्गायमुनाभ्यां सह समुद्रस्य तत्परतो विनयः। सेतुबन्धनं। तत्र राक्षसैः सह वानराणां युद्धं। रामलक्ष्मणादीनां पुरतो दशमुखस्य सीताशिरश्छेदनं। रामस्य विलापः। निर्ह्लादादपि तन्मुखात् समुल्लासमाकर्ण्य तेषां विस्मयः। सिंहनादेन सह रामस्य युद्धं। इति असमपराक्रमो नाम सप्तमोऽङ्कः।

सुमुखदुर्मुखाभिधानराक्षसयोः संवादकथनव्याजेन सिंहनादबध-लक्ष्मणशक्तिशेलादीनां कथनं। रामरावणादीनां पुरतः तुलाद्यूते ताराकुमारेण कुमारो राक्षसपतेर्निहत इति वर्णनं। करङ्ककङ्कालाभ्यां सह रावणस्य लक्ष्मणमेघनादयोरन्योन्यं सम्प्रहारदर्शनं। कुम्भकर्णप्रबोधः। वानरैः सार्द्धं तस्य युद्धं। कुम्भकर्णादीनां निधनं दृष्ट्वा रावणस्य मूर्च्छा। इति वीरविलासो नामाष्टमोऽङ्कः।

पुरुहूतसमीपे चित्रगुप्तस्य लङ्कालेख्यकवाचनं। रामरावणयोर्युद्धदर्शनाय चारणमिथुनाभ्यां समं देवराजदशरथयोस्तत्र प्रवेशः। तयोर्घोरसमरवर्णनं। संवृत्ते रावणबधे रामलक्ष्मणयोरुपरि पुष्पवृष्टिः। इति रावणबधो नाम नवमोऽङ्कः।

विषयः । अलकया सह समीकाया लङ्कायाः प्रवेशमुखेन सीताया वह्निशुद्धिः, भरतस्य पार्श्वं हनूमान् प्रेषितश्चेति सूचना । विमानमानेन रामलक्ष्मणादीनाम् अयोध्यायात्रा । तत्र सीतामुद्दिश्य रामस्य युद्धस्थलीप्रदर्शनं । पुरन्दरप्रेरितस्य विद्याधरस्य तेषां पुरतो रामदिव्यचरितकीर्त्तनं । सीतामुद्दिश्य तस्य हिमालयकैलासमानससरोवरादीनां वर्णनं । तत्र सुग्रीवादीनां समुद्रवर्णना । सिंहलस्य । समुद्रकूलस्य । माल्यवतः । मलयस्य । ताम्रपर्णीनद्याः । अगस्त्याश्रमस्य । तत्र रामलक्ष्मणप्रभृतीनामगस्त्येन समं साक्षात्कारः । द्रविड़देशस्य वर्णनं । सप्तगोदावरीतीरे परशुरामस्य । कावेर्य्याः । महाराष्ट्रदेशस्य । नर्म्मदायाः । लाटदेशस्य । उज्जयिनीस्थमहाकालनाथस्य । मालवदेशस्य । यमुनायाः । पञ्चालदेशस्य । महोदयनामकनगरस्य । कान्यकुब्जस्य । प्रयागस्य । वाराणस्याः । मिथिलायाश्च वर्णनं । अयोध्याप्राप्तिः । भरत-शत्रुघ्नपुरःसरेण वशिष्ठेन सह सर्व्वेषां सम्भाषणादिः । इति राघवानन्दो नाम दशमोऽङ्कः ।

समाप्तोऽयं ग्रन्थः ।

---

## No. 1186. शब्दखण्डः ।

Substance, country paper, 22 × 5 inches. Folia, 154. Lines, 9—12, on a page. Extent, 7,535 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Gosvámi Bhaṭṭácharya. Appearance, very old. Decayed. Prose. Correct.

*S'abdakhaṇḍa*—Being the last part of Gaṅges'a's *Tattva-chintámaṇi*. The work treats from a logical standpoint the value of Testimony as a proof. In the course of his dissertation, the author reviews at length the opinions of his predecessors. The MS. is a very old and remarkably correct one. Vide ante I. p. 295.

Beginning. अथ शब्दो निरूप्यते । प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणं । ननु शब्दो न प्रमाणं । तथा हि, करणविशेषः प्रमाणं, करणञ्च तद् यस्मिन् सति क्रिया भवत्येव । न च शब्दे सति प्रमाणं भवत्येवेति नायं शब्दः प्रमाणं । इत्यादि ।

End. ऐतिह्यञ्च आप्तोक्तत्वेन शब्द एव अन्तर्भवति । अर्थापत्त्यनुलब्ध्योस्तु यथायथमन्तर्भावः प्रागेव चिन्तितः । अतः सिद्धं चत्वारि प्रमाणानीत्युपरम्यते ।

धीराः कुशाग्रमतयो भवतः प्रणम्य
मौलौ निधाय करवारिरुहे समीहे।
वाणीयमर्थरहितापि विशृङ्खलापि
सानुग्रहेण हृदयेन विलोकनीया॥ शिवं।

Colophon. इति महामहोपाध्यायगङ्गेश्वरविरचिते तत्त्वचिन्तामणौ शब्दखण्डस्तुरीयः परिच्छेदः समाप्तः॥०॥

विषयः। शब्दलक्षणं। तत्प्रामाण्ये सौगतमतं। वैशेषिकमतं। स्वीयमतं। जरन्मीमांसकमतं। प्राभाकरमतञ्च। आकाङ्क्षानिरूपणं। तत्र नव्यमतं। योग्यतानिरूपणं। आसत्तिनिरूपणं। तात्पर्य्याधीनं शब्दप्रामाण्यमिति कथनं। अत्र मीमांसकमतं। वेदस्य पौरुषेयत्वकथनं। वेदलक्षणं। पौरुषेयत्वलक्षणं। शब्दानित्यत्वकथनं। उच्छिन्नत्वेन अभिमतो वेदो नित्यानुमेय इति निर्णयः। वाक्यलक्षणं। स्मृत्याचारयोर्वेदमूलत्वमिति कथनं। प्रलयस्थापनं। प्रवर्त्तकज्ञाननिरूपणं। तत्र नव्यमतं। हिंसानिरूपणं। विधिविचारः। तत्र नव्यमतं। आचार्य्यमतं। गुरुमतं। विषयनिरुक्तिः। अपूर्व्ववादः। शक्तिवादे। कार्य्यान्विते। अन्विते। स्वर्गलक्षणं। देवतालक्षणं। पदार्थनिरूपणं। तत्र प्रभाकरमतं। जातौ शक्तिरिति। जातिविशिष्टव्यक्तावेव शक्तिरिति कथनञ्च। योगरूढविचारः। अत्र मीमांसकमतं। शब्दसाधुत्वविचारः। लक्षणा। तत्र नव्यमत। समासविचारः। अत्र नव्यादीनां मतं। आख्यातविचारः। अत्र भट्टमतं। मण्डनाचार्य्यमतं। उपसर्गद्योतकताविचारः।

---

## No. 1187. श्रीकृष्णस्तोत्रं, क्वचित् २ व्याख्यायुक्तं।

Substance, country paper, 13 × 3 inches. Folia, 16. Lines, 4 on a page. Extent, 168 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, old. Verse. Correct.

*S'ríkṛishṇa-stotra.* A hymn in praise of the perfection of Krishṇa's person. By S'aṅkara Ácharya. There is no reason to believe that the great S'ivite Sannyási who commented on the Vedánta Sútras of Vyása wrote this hymn, and it is therefore to be inferred that either the work is a forgery, or the author is a homonymous person of a different and much later age.

Beginning. लक्ष्मीभर्त्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं
नीलाद्रेस्तुङ्गशृङ्गस्थितमिव रजनीनाथबिम्बं विभाति ।
पायाद् वः पाञ्चजन्यः स सकुलदितिजत्रासनैः पूरयन् स्वै-
र्निध्वानैर्नीरदौघध्वनिपरिभवदैरम्बरं कम्बुराजः ॥ १ ॥

End. मोदात् पादादिकेशस्तुतिमिति रचितां कीर्त्तयित्वा विधात्मः
पादाब्जद्वन्द्वसेवासमयकृतमतिर्मस्तकेनानमेद् यः ।
उन्मुच्यैवात्मने नो निचयकवचतां पञ्चतामेत्य भानो-
र्विम्बान्तर्गोचरं स प्रविशति परमानन्दमात्मस्वरूपं ॥ ५ ॥

Colophon. इति श्रीशङ्कराचार्य्यविरचितं श्रीकृष्णस्तोत्रं समाप्तं ।

विषयः । श्रीकृष्णस्तोत्रव्याजेन तद्रूपमाहात्म्यवर्णनं ।

---

## No. 1188. अद्वैतरहस्यं ।

Substance, country paper, 12 × 3 inches. Folia, 4. Lines, 4 on a page. Extent, 44 s'lokas. Character, Bengali. Date, ? Place of deposit, Kálidása Vidyávágís'a. Appearance, Fresh. Prose and verse. Correct.

*Advaita-rahasya.* A dissertation in support of the non-dual theory of the Vedánta. By Rámánanda Tírtha. The author was one of the foremost professors of this school of philosophy.

Beginning. इह किल प्रातीतिकभ्रमत्यागार्थमात्मज्ञानरहस्यं चातुर्य्याक्षेपमुद्रया नमस्कार-
व्याजेन दर्शयति ।
निराभासाय शान्ताय ज्ञानातीताय ते नमः ।
मह्यमज्ञेयरूपाय नित्यमुक्तचिदात्मने ॥ इत्यादि ।

End. अवस्व तात ! अवस्व निशामय निशामय ।
येनैव निर्वृतिः स्यात्तु तेनैव विहरानघ ! ॥
अथ वा यासि सङ्कोचं लोकदृष्ट्या तु मूढधीः ।
तदा नैव सुखं यासि लोकभ्रष्टोऽसि हे सुत ! ॥

Colophon. इति श्रीरामानन्दतीर्थकृताद्वैतरहस्यं समाप्तं ॥

विषयः । ब्रह्मणो लक्षणादिकथनपुरःसरमद्वैतवादसंस्थापनं ।

---

## No. 1189. अवधूतषट्कं ।

Substance, country-made yellow paper, 11 × 4 inches. Folium, 1. Lines, 8. Extent, 19 s'lokas. Character, Nágara. Date, ? Place of deposit, S'ántipura. Kálidása Vidyávágís'a. Appearance, old. Verse. Correct.

*Avadhúta-shaṭka.* A hymn in six stanzas in praise of Avadhútas, a class of houseless hermits, to which its author S'ankara A'chárya belonged.

Beginning. न योगी न भोगी न वा मोक्षकाङ्क्षी
न वीरो न धीरो न वा साधकेन्द्रः ।
न शैवो न शाक्तो न वा वैष्णवो वाऽ-
वधूतश्चिदानन्दरूपोऽहमात्मा ॥ १ ॥

End. विभूतिं त्रिशूलं तथा रक्तवासो
दधानः कपालं गले नागहारं ।
प्रसन्नान्तरात्मा सदा हृष्टचेता
विरेजेऽवधूतो द्वितीयो महेशः ॥ ६ ॥

Colophon. इति शङ्कराचार्य्यविरचितमवधूतषट्कं समाप्तम् ।

विषयः । अवधूतप्रकृतिवर्णनं ।

---

## No. 1190. आलोकः ।

Substance, Palm-leaf, 14 × 2 inches. Folia, 92. Lines, 6 on a page. Extent, 3,956 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágis'a. Appearance, old and decayed. Prose. Correct.

*A'loka.* A commentary on the Tattva-chintámaṇi of Gaṅges'a. By Gadádhara. The MS. comprises the first three books only, but it is very old and correct. (Vide ante I p. 295, and Hall's Contributions, p. )

Beginning. वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि
दृष्ट्वा दशाननसमागमनभ्रमेण ।

भूयोऽपि शैलपरिवृत्तिभयेन गाढ-
मालिङ्गितो गिरिजया गिरिशः पुनातु ॥
अधीत्य जयदेवेन हरिमिश्रात् पितृव्यतः ।
तत्त्वचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥
प्रसङ्गान्मङ्गलस्य समाप्तिहेतुतां स्थापयितुं भूमिकामाचरति, इहेति । इह खलु वाक्यालङ्कारे एकवाक्यता अविप्रतिपत्तित्वेन भ्रममूलकता निराकृतेत्यादि ।

End. अदण्डव्यावृत्तधीकरणतावच्छेदको दण्ड इति शब्दादकामेऽपि तद्वृत्त्याद्दण्डव्यावृत्त्यप्रतीतेः सर्व्वसिद्धत्वादिन्द्रियासन्निकर्षादिना प्रत्यक्षसामग्र्यभावात्, तस्माद् यथोक्तं विशेषणपदप्रवृत्तिनिमित्तं विशिष्टधीविषयस्तु विशेषण इत्यतः खण्डितत्वात् शेषवाक्यं नास्ति ।

विषयः । चिन्तामणेः व्याख्यानं ।

---

## No. 1191. आलोकरहस्यं ।

Substance, country paper, 17 × 4 inches. Folia, 26. Lines, 8 on a page. Extent, 1,518 s'lokas. Character, Bengali. Date, Place of deposit, S'ántipura, Kálidása Vidyávagís'a. Appearance, old. Prose. Correct.

*A'loka-rahasya.* A gloss on the last named work. By Mathurá-nátha Tarkavágís'a. The codex comprises only the third book.

Beginning. न्यायाम्बुधिकृतसेतुं हेतुं श्रीरामसखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विशदीकृत्य दर्श्यन्ते प्रत्यक्षालोकफक्किकाः ॥
निर्विघ्नं प्रारिप्सितग्रन्थसमाप्तिकामनया कृतं स्तुतिपूर्व्वकभगवत्प्रार्थनारूपं मङ्गलं शिष्यशिक्षायै आदौ निबध्नाति, वक्त्राणीति । गिरिशो महादेवः पुनातु पवित्रं करोतु प्रारिप्सितग्रन्थसमाप्तिप्रतिबन्धकं पापं नाशयतु इत्यादि ।

End. सामानाधिकरण्यविरहव्यभिचारादिनिश्चयात्मकघटादिव्यतिरेकज्ञानप्रतिबध्यायां घटादिनिश्चयेति अतः खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । जयदेवकृतप्रत्यक्षखण्डालोकस्य व्याख्यानं ।

---

## No. 1192. कृष्णभक्तिरसोदयः ।

Substance, country-made yellow paper, 12 × 4 inches. Folia, 12. Lines, 5 on a page. Extent, 180 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rádhikánátha Gos'vamí. Appearance, new. Prose and verse. Correct.

*Krishna-bhaktirasodaya.* A treatise on the Bhakti system of the Vaishnavas. By Rádhámohana S'armá. The MS. is incomplete.

Beginning. गोपीनयनचकोरी—स्वादितसुरमास्तमितांगरुचिः ।
कोऽपि व्रजेन्द्रतनयो नीरदनीलो विधुर्जयति ॥
श्रीमदद्वैतवंशेन राधामोहनशर्म्मणा ।
क्रियते परमामोदः कृष्णभक्तिरसोदयः ॥
श्रीमद्रसामृताम्भोधिर्गोस्वामिभिरुदाहृतः ।
तस्मादुद्धृत्य यत्किञ्चिदन्यतश्च निवेद्यते ॥
चान्तव्यं मम चापल्यं तद्गन्धेरितचेतसः ।
वैष्णवैः कृष्णसम्बन्धगुणमात्रपरिग्रहैः ॥ तत्र भक्तिलक्षणमित्यादि ।

End. आनुगत्यञ्च शास्त्रादिप्रसिद्धासु रागात्मिकाङ्गश्रवणकीर्त्तनस्मरणपादसेवनवन्दनात्मनिवेदनप्रायतनपरिपाटीषु प्रवृत्त्या सहशीकरणमित्यतः खण्डितत्वात् परिशेषवाक्यं नास्ति ।

विषयः । भक्तिलक्षणं । अनुशीलनस्वरूपप्रदर्शनं । उपनामस्य भजनाङ्गत्वकथनं । भक्तिलक्षणपरिष्क्रिया । भक्तिप्रयोजननिर्द्देशः । तद्विवरणकथनञ्च । रुचिलक्षणं । केवलयुक्तेरप्रतिष्ठता । साधनसाध्यभेदेन भक्तेर्द्वैविध्यकीर्त्तनं । साधनभक्तिलक्षणं । वैधीलक्षणं । रागलक्षणं । चतुःषष्टिमद्भुतानि भक्त्यङ्गानि । सन्ध्योपासनादीनां कर्त्तव्यताकथनादिः । भक्त्यनुकूलवैराग्यलक्षणं । तत्प्रतिकूलवैराग्यलक्षणञ्च । रागानुगालक्षणं । अतः परं खण्डितं ।

---

## No. 1193. तत्त्वचिन्तामणिप्रत्यक्षखण्डः ।

Substance, country paper, 17 × 4 inches. Folia, 49. Lines, 5—8 on a page. Extent, 1,650 s'lokas. Character. Bengali. Date, ? Place of deposit, S'ántipura, Gosvámi Bhaṭṭácharya. Appearance, old. Prose. Correct.

*Pratyaksha Khanḍa.* The third book of Gaṅges'a's Tattva-chintamaṇi. This, like No. 1186, is a remarkably old and correct codex.

Beginning. गुणातीतोऽपीशस्त्रिगुणसचिवस्त्र्यक्षरमय-
त्रिमूर्त्तिर्यः सर्गस्थितिविलयकर्म्माणि तनुते ।
कृपापारावारः परमगतिरेकस्त्रिजगतां
नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥
आन्वीक्ष्यानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलं ।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिं ॥
यतो मणेः पण्डितमण्डनक्रिया प्रचण्डपाषण्डमतस्तिरस्क्रिया ।
विपक्षपक्षे न विचारचातुरी न च स्वसिद्धान्तवचो दरिद्रता ॥
इह खलु सकलशिष्टैकवाक्यतया अभिमतकर्म्मारम्भसमये तत्समाप्तिकामा मङ्गलमाचरन्ति । इत्यादि——

End. सविकल्पकज्ञानानां जात्यादियोजनया हीनानां इन्द्रियजानां प्रत्यक्षत्वापाकरणादितः परं खण्डितत्वात् शेषवाक्यं नास्ति ।

विषयः । मङ्गलवादः । प्रामाण्यवादः । तत्र प्रामाण्यं स्वतो ग्राह्यमिति पूर्व्वपक्षः । प्रामाण्यं परतो ग्राह्यमिति सिद्धान्तः । प्राभाकरमतनिरासः । प्रामाण्यस्वरूपविचारः । अन्यथा-ख्यातिकथनं । प्रत्यक्षलक्षणं । तत्र सन्निकर्षविशेषस्य कारणतासंस्थापनं । विषयालोकसंयोगस्य विषयोद्भूतरूपस्य महत्त्वस्य च प्रत्यक्षकारणत्वकथनं वायुर्न प्रत्यक्ष मनोजन्य इति कथनं । सुवर्णं प्रत्यक्षं तैजसञ्चेति कीर्त्तनं । मन इन्द्रियमणु चेति निर्द्देशः । ज्ञानं मानसमिति कथनादि । सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षस्य च द्वैविध्यकथनञ्च इत्यतः खण्डितं ॥

---

## No. 1194. प्रत्यक्षमणिफक्किका वा प्रत्यक्षखण्डटीका ।

Substance, country paper, 18 × 3½ inches. Folia, 28. Lines, 8 on a page. Extent, 1,710 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Gosvámi Bhaṭṭácharya. Appearance, old and decayed. Prose. Correct.

*Pratyaksha-maṇi-phakkiká.* A commentary on the last named work. By Mathuránátha Tarkavagís'a. *Vide ante* I, p. 295.

Beginning. न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विशदीकृत्य दर्श्यन्ते प्रत्यक्षमणिफक्किकाः ॥
निर्व्विघ्नं प्रारिप्सिततत्त्वचिन्तामणिनामग्रन्थसमाप्तिकामनया कृतं महादेवनमस्कारूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति, गुणातीत इतीत्यादि ।

End. मङ्गलस्य सफलत्वं व्यवस्थाप्य मोक्षसाधनीभूततत्त्वज्ञानचिकीर्षावतां स्वीयग्रन्थोपादानप्रवृत्तये मोक्षसाधनीभूतफलवदान्वीक्षिकीप्रतिपादितप्रतिपादकत्वेन हेतुना मोक्षसाधनीभूततत्त्वज्ञानजनकतां स्वीयग्रन्थस्य प्रतिपादयितुं तादृशहेतुमत्त्वं स्वीयग्रन्थस्य दर्शयति अथेत्यादिना विविच्यत इत्यन्तेन । अथ मङ्गलस्य समाप्तिहेतुतानिरूपणानन्तरमित्यतः खण्डितत्वात् शेषवाक्यं नास्ति ।

विषयः । प्रत्यक्षचिन्तामणिव्याख्यानं ।

---

## No. 1195. नारदस्मृतिः ।

Substance, country-made, yellow paper, 22 × 4 inches. Folia, 30. Lines, 7 on a page. Extent, 997 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Bharatachandra S'iromaṇi. Appearance, old. Prose and verse. Generally correct.

*Nárada Smṛiti.* The Institutes of Hindu Law. By Nárada. In the preface, the work is described to comprise four thousand stanzas, but the codex contains only one thousand stanzas, and still professes to be complete. Contents: Chapter 1; Courts of law defined; 2, Jurisprudence; 3, Debts; 4, Documents; 5, Witnesses; 6 Fire ordeal; 7, Ordeal by drinks; 8, Ordeal by poisons; 9, Money; 10, Loans; 11, Rules of guilds and trades; 12, Gifts; 13 and 14, Wages; 15, Sales of property by persons whose right to it is questioned; 16, Payment of value of purchases; 17, Duties of purchasers; 18, Oaths; 19, Boundaries; 20, Connexion of the sexes; 21, Inheritance; 22 and 23, Punishments of various kinds, reprimands, &c.; 24, Venial offences.

Beginning. इति ह स्माह भगवान् मनुः प्रजापतिः सर्व्वभूतानुग्रहार्थमाचारस्थितिहेतुभूतं शास्त्रं चकार यत्रादौ लोकवृष्टिभूतप्रविभागस्तद्देशप्रमाणपरिषल्लक्षणं वेद-

वेदाङ्गयज्ञविधानमाचारो व्यवहारः कण्टकशोधनं राजवृत्तं वर्णधर्माश्रमप्रविभागो विवाहन्यायस्त्रीपुंसविकल्पो दायादनुक्रमः। श्राद्धविधावशौचकल्पो भक्ष्याभक्ष्यलक्षणं विक्रेयाविक्रेयमीमांसा। पातकभेदैः स्वर्गनरकानुदर्शनप्रायश्चित्तान्युपपदो रहस्यानीत्येवं चतुर्विंशतिप्रकरणानि तदेतत् श्लोकशतसहस्रमासीत् तेनाध्यायसहस्रेण मनुः प्रजापतिरुपनिबध्य देवर्षये नारदाय प्रायच्छत्। स च तस्मादधीत्य महत्त्वात् नायं ग्रन्थः सुकरो मनुष्याणां शक्यो धारयितुं इति द्वादशभिः सहस्रैः सञ्चिक्षेप। तच्च सुमतये भार्गवाय प्रायच्छत्। स च तस्मादधीत्य तथैवायुर्ह्रासादल्पीयसी मनुष्याणां शक्तिरिति ज्ञात्वा चतुर्भिः सहस्रैः सञ्चिक्षेप। तदेतत् सुमतिकृतं मनुष्या अधीयन्ते।

End. हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः।
एतानि सततं पश्येन्नमस्येदर्चयेत् स्वयं।
प्रदक्षिणञ्च कुर्वीत यथास्यायुः प्रवर्द्धते॥

Colophon. इति नारदीये धर्मशास्त्रे प्रकीर्णकं नाम व्यवहारपदमष्टादशं समाप्तम्॥

विषयः। अत्र १ अध्याये, परिषल्लक्षणं। २, व्यवहारलक्षणं। ३, ऋणशोधनं। ४, धनस्वामिसंशयोच्छेदकलिखनसाक्षिभोगरूपत्रिविधप्रमाणान्तर्गतलिखनप्रमाणकथनं। ५, साक्षिप्रमाणकथनं। ६, पापिपरीक्षार्थमग्निसंस्कारकथनं। ७, पापिपरीक्षार्थं पानीयविधिकथनं। ८, विषपानरूपपापिपरीक्षाकथनं। ९, परीक्षाविषये कोषविधिकथनं। १०, ऋणदानस्य विशेषनामकथनं। ११, वणिक्प्रभृतयः सम्भूय यत् कर्म्म कुर्वन्ति तत् सम्भूय समुत्थानं नाम तस्य विवरणं। १२, दत्ताप्रदानकथनं। १३, भृत्यानां वेतनदानादानविधिकथनं। १४, वेतनस्यानपाकर्म्मकथनं। १५, अस्वामिकृतविक्रयस्य सिद्धत्वासिद्धत्वकथनं। १६, विक्रेयपण्यस्यासम्प्रदानकथनं। १७, क्रयकर्त्तुरनुवादकथनं। १८, समयस्यानपाकर्म्मकथनं। १९, सेतुकेदारसीमाकथनं। २०, स्त्रीपुंयोगकथनं। २१, दायभागकथनं। २२, साहसकथनं। २३, वाक्पारुष्यदण्डपारुष्यकथनं। २४, द्यूतसमाह्वयकथनं। प्रकीर्णककथनं॥०॥

ग्रन्थादौ चतुर्भिः सहस्रैः सञ्चिक्षेप एतस्य उक्तत्वात् एतद्ग्रन्थस्य चतुःसहस्रश्लोकात्मकत्वं सूचितं, अस्मिन् ग्रन्थे किञ्चिदधिकसहस्रसङ्ख्यकश्लोकानां प्राप्तत्वेनास्य सखण्डत्वमनुमितं। समाप्तमित्यनेन यत् समाप्तिसूचकं वाक्यं तद्भ्रमपतितं॥

## No. 1196. शब्दालोकः ।

Substance, country paper, 18 × 3 inches. Folia, 18. Lines, 6—7 on a page. Extent, 3,650 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Nṛis'iñhaprasáda Gos'vámí. Appearance, old. Prose. Correct.

*S'abdáloka.* A commentary on the last book of Gañges'a's *Tattva-chintámaṇi.* By Jayadeva. (*Vidè ante* I, p. 295.)

Beginning. न जाने श्रीजाने विरचितमिह ग्रन्थगहने
समर्था नैवार्थानधिगमयितुं निर्म्मितिरपि ।
तथाप्येतावत्यामपि किल विगत्यामहमिह
प्रवृत्तो यत्तस्मिंस्तव चरणसेवैव शरणं ॥
अधीत्य जयदेवेन हरिमिश्रात् पितृव्यतः ।
शब्दचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥
अथेति । इहाथशब्दस्य आनन्तर्य्यवचनत्वेन उपस्थितस्य उपमाननिरूपणस्यैव प्राप्तत्वात् तस्येत्यादि ।

End. अन्वयव्यभिचारवारणाय योग्यतादीति लक्ष्ये व्यभिचारवारणाय अनुपपत्ती-त्यर्थः । अन्वयेति । अन्यलभ्येऽपि शक्तौ विशेषणद्वयं त्यक्का पदात् । इत्यतः खण्डितम् ।

विषयः । गङ्गेशकृततत्त्वचिन्तामण्यन्तर्गतशब्दखण्डव्याख्यानं ।

---

## No. 1197. शब्दखण्डटीका ।

Substance, country paper, 17 × 3½ inches. Folia, 9. Lines, 8 on a page. Extent, 400 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Nṛisiñhaprasáda Gos'vámí. Appearance, old. Prose. Correct.

*S'abdakhaṇḍa ṭiká.* A commentary on the last book of Gañges'a's Tattva-chintámaṇi. By Mathuránátha Tarkavágís'a.

Beginning. न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥

श्रीमता मथुरानाथतर्कवागीशश्रीमता ।
विषदीकृत्य दर्श्यन्ते तुरीयमणिफक्किकाः ॥
आन्वीक्षिकीपण्डितमण्डलीषु सत्ताण्डवैरध्यनं विनापि ।
मदुक्तमेतत् परिचिन्त्य धीरा निःशङ्कमध्यापनमातनुध्वं ॥
प्रत्यक्षादिप्रमाणत्रयं निरूपितमिदानीं चरमप्रमाणं शब्दो निरूपणीयोऽतः शिष्यावधानाय प्रतिजानीते, अथेत्यादिनेत्यादि ।

End. विशेषणविशेष्यभावेति । परस्य विशेष्यविशेषणभावेन स्वार्थनावच्छेदकावाच्छिन्नानुभवजनितेत्यतः खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । गङ्गेशकृततत्त्वचिन्तामणन्तर्गतशब्दखण्डव्याख्यानं ।

---

## No. 1198. विल्वमङ्गलं ।

Substance, country paper, $11\frac{1}{2} \times 3$ inches. Folia, 15. Lines, 6 on a page. Extent, 281 s'lokas. Character, Bengali. Date, Sk., 1616. Place of deposit, S'ántipura, Rádhikánátha Gosvámí. Appearance, old. Verse. Generally correct.

*Vilvamañgala.* A hymn in praise of Krishṇa. By Vilvamañgala.

Beginning. यं वेदविदपि प्रियमिन्दिराया यन्नाभिनीरहरुहगर्भदृष्टो न धाता ।
गोपालबालललना वनमालिनन्तं गोधूलिधूसरशरीरमरीरमंस्ताः ॥ इत्यादि ।

End. ददातु वः शं किल व्रजेशः पीताम्बरोऽसौ वृन्दावनेशः ।
मन्दारमाली वर्हावतंसी, सतां हृदिस्थोऽमरारिध्वंसी ॥
यात्यतो वेदबध्योऽसि चरणन्विदमुत्थित ।
अनेन मूलं खड्गेन पतितं वेत्स्यसि चितौ ॥

Colophon. इति विल्वमङ्गलं समाप्तं ।
ऋतुविधुरसपृथ्वी शाकके शुभ्रपक्षे
वृषगकमलबन्धौ पञ्चदश्यां पदाब्जं ।
नगवरधर ते श्रीरामदेवः प्रणम्य
अलिखदथहविल्वमङ्गलं नाम काव्यं ॥

विषयः । श्रीकृष्णस्तवनं ।

---

## No. 1199. भारतभावदीपः ।

Substance, country-made yellow paper, 12 × 4½ inches. Folia, 170. Lines, 10 on a page. Extent, 4,887 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kalidása Vidyávágís'a. Appearance, new. Verse. Generally correct.

*Bhárata-bhávadípa.* A perpetual gloss on the Mahábhárata. By Nílakaṇṭha Súri. The codex examined is very imperfect, containing only the commentary on the Gítá portion of the work. A complete and very correct MS. of the entire work exists in the Library of the late Rájá Pitámbar Mitra, Surá; copies more or less perfect also exist in the Libraries of the late Rájá Sir Rádhákanta Deva, of Rájá Komalkrishṇa Bahádur, of the Asiatic Society of Calcutta, and of the Sanskrit Colleges of Calcutta and Benares.

Beginning. ॐ नमो ब्रह्मवादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः ।

प्रणम्य भगवत्पादान् श्रीधरादींश्च सद्गुरून् ।
सम्प्रदायानुसारेण गीताव्याख्यां समारभे ॥
भारते सर्व्ववेदार्था भारतार्थाश्च कृत्स्नशः ।
गीतायां सन्ति तेनेयं सर्व्वशास्त्रमयी मता ॥
कर्म्मोपास्तिज्ञानभेदैः शास्त्रं काण्डत्रयात्मकं ।
अन्ये तूपासनाकाण्डस्तृतीयो नातिरिच्यते ॥
तदेव ब्रह्म विद्धि त्वं नेदं यत्तदुपासते ।
इति श्रुत्यैव वेद्यस्य ह्युपास्यादन्यतेरिता ॥
इयमष्टादशाध्यायी क्रमात् षट्कत्रिकेण हि ।
कर्म्मोपास्तिज्ञानकाण्डत्रितयात्मा निगद्यते ॥
तत्र दुर्य्योधनं श्रुत्वा औत्सुक्यादग्रिमं वृत्तान्तं बुभुत्सुः धृतराष्ट्र उवाच, धर्म्मक्षेत्रेति ।

End. भूतिरैश्वर्य्यं सर्व्वनिदर्शनं, नीतिर्नयश्च, एतत् सर्व्वं तत्र तस्मिन् पक्षे ध्रुवमिति मम मतिः । अतः पाण्डवैः सह सन्धिरेव कर्त्तव्य इति भावः ॥

Colophon. इति श्रीमत्पदवाक्यप्रमाणज्ञमर्य्यादाधुरन्धरवंशावतंसश्रीगोविन्दसूनोः श्रीनीलकण्ठसूरिवर्य्यस्य कृतौ भारतभावदीपे भीष्मपर्व्वणि गीतार्थव्याख्यानेऽष्टादशोऽध्यायः ॥

विषयः । भगवद्गीताव्याख्यानं ॥

## No. 1200. लीलावतीप्रकाशः ।

Substance, country paper, 18½ × 3½ inches, Folia, 7. Lines 6 on a page. Extent, 212 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávagís'a. Appearance, old. Prose. Correct.

*Líláratí-prakás'a.* A commentary on the Lílávatí of Vallabha Áchárya. By Vardhamána. The Lílávatí is an abridgment of the principal doctrines enunciated in the Chintámaní of Gańges'a. The work is of considerable repute, but rare in Bengal. Mr. Hall does not notice it in his *Contributions.*

Beginning. एकत्र शूलमपरत्र विषप्रसून-मन्यत्र कीर्त्तिरपत्र च पीतवासः ।
तत्यातु वर्ष्म शशलक्ष्मकलाकिरीट-निस्पिष्टकैटभहरोर्मम वाञ्छितानि ॥
न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने ।
गङ्गेश्वराय गुरवे पित्रेऽत्र भवते नमः ॥
विशिष्टशिष्टाचारानुमितकर्त्तव्यताकं विघ्नविघातकं मङ्गलं निबध्नाति, नाथ इति ।

End. किञ्च । प्रतियोग्यधिकरणवद्योगव्यवच्छेदस्य न विचारसहत्वमित्याह, अपि चेति । अतः खण्डितम् ।

विषयः । न्यायलीलावतीव्याख्यानं ।

---

## No. 1201. लीलावतीप्रकाशरहस्यं ।

Substance, country paper, 17½ × 4 inches. Folia, 12. Lines, 19 on a page. Extent, 507 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidásá Vidyávagís'a. Appearance, old. Prose. Correct.

*Lílárati-prakás'a-rahasya.* A commentary on the last named work. By Mathuránátha Tarkavágís'a.

Beginning. निर्व्विघ्नं प्रारिप्सितग्रन्थसमाप्तिकामनया कृतं हरिहरात्मकभगवत्प्रार्थनरूप मङ्गलं शिष्यशिक्षायै आदौ निबध्नाति एकत्रेत्यादि ।

End. जातिमत्येव सत्तेत्यादौ अन्यस्मिन् लक्षणाव्यवच्छेदस्य शक्तिबललभ्य इत्याहुरिति सङ्क्षेपः । विस्तरस्त्वस्मत्कृतदीधितिरहस्येऽनुसन्धेयः ॥

Colophon. इत्यन्तं प्रचरन्ती माथुरी समाप्ता ।

विषयः । वर्द्धमानोपाध्यायकृतलीलावतीटीकाया व्याख्यानं ।

---

## No. 1202. लीलावतीरहस्यं ।

Substance, country paper, 17½ × 4 inches. Folia, 21. Lines, 8 on a page. Extent 924 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávagís'a. Appearance, old. Prose. Correct.

*Lílávatí-chintámaṇi-rahasya.* A commentary on the *Lílávatí* of Vallabha Ácharya. By Mathuránátha Tarkavágís'a. This is a commentary on the original text of Vallabha, whereas No. 1201 is a gloss on the commentary of Vardhamána.

Beginning. श्रीमता मथुरानाथतर्कवागीशधीमता ।
विविच्यते फक्किकार्थो लीलावत्या विशेषतः ॥
निर्व्विघ्नं प्रारिप्सितग्रन्थसमाप्तिकामनया कृतं श्रीकृष्णनमस्काररूपं मङ्गलं शिष्य-शिक्षार्थं आदौ निबध्नाति नाथ इति ।

End. द्रव्यत्वगुणत्वादीनां षषां यद्विच्छेदषट्कं तेन निवर्ज्जिता । अतःपरं खण्डितं ॥

विषयः । मूललीलावतीव्याख्यानं ।

---

## No. 1203. लीलावतीदीधितिटिप्पनी ।

Substance, country paper, 17½ × 4 inches. Folia, 27. Lines, 8 on a page. Extent, 1039 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávagís'a. Appearance, old. Prose. Correct.

*Lílávatí-dídhiti-ṭippaní.* A gloss on Raghunátha S'iromaṇi's commentary on the Lílávatí of Vallabha. By Jagadís'a Tarkálaṅkára.

Beginning. कर्पूरकुन्दकुमुदकैलासोदरसोदरं ।
विघ्नविध्वंसकं धाम नमामः शैवदैवतं ॥
कणभक्षमुनेः पद्यरत्नाविन्यस्तवासनाः ।
वचांसि जगदीशस्य चिन्तयन्तु विचक्षणाः ॥ इत्येत्यादि ।

End. यन्नदत्तीयवाल्यदेहः तज्जन्यत्वस्यैव, यूनि यन्नदत्ते सत्त्वात् तद्व्यवच्छेदासम्भवः ॥
इत्यतः खण्डितं ।

विषयः । शिरोमणिकृतलीलावतीटीकाया व्याख्यानं ।

---

## No. 1204. अभिधारहस्यं ।

Substance, country paper, 17½ × 4 inches. Folia, 11. Lines. 7 on a page. Extent, 352 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidásá Vidyávagís'a. Appearance, old. Prose. Correct.

*Abhidhá-rahasya.* A gloss on Jayadeva's Abhidhá-vichára, or a commentary on the *Abhidhá* section of the last book of the Tattva-chintámaṇi. By Mathuránátha Tarkavágís'a.

Beginning. ननु वेदः साक्षादेव प्रवर्त्तयतु किं द्वारेण भवतु वा द्वारं, अन्यदेव हि किञ्चिद्भविष्यति यदि चेच्छां विना न प्रवृत्तिः, विधिज्ञानानन्तरमिच्छा अनुभूयते। इत्यादि ।

End. यदुक्तं तद्वीजद्वयं स्वयमेवाह हेतुद्वयेत्यादिना ।

Colophon. इति अभिधारहस्यं समाप्तं ॥

विषयः । जयदेवमिश्रकृताभिधाविचारस्य टीका ।

---

## No. 1205. नैषधटीका ।

Substance, country paper, 19½ × 3½ inches. Folia, 38. Lines, 7 on a page. Extent, 1,380 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Gosvámi Bhaṭṭáchárya. Appearance, old. Prose. Incorrect.

*Naishadha-ṭíká.* A commentary on the well-known poem, the Naishadha. By Vans'ivadana S'armá. The MS. is incomplete.

Beginning. श्रीरामचरणौ नत्वा वंशीवदनशर्म्मणा ।
नैषधीयप्रबन्धेऽस्मिन्नतिसङ्क्षिप्य लिख्यते ॥
अत्र द्वाविंशतिः सर्गाः श्रीहर्षकविना कृताः ।
नलभैम्यभिधाप्राप्तिश्चिवदुर्गागुणैः प्रियाः ॥
प्रथमे भीमजारूपश्रवणाद् विरही मिषात् ।
गत्वा वनं सरस्तीरे धृत्वा हंसं नलोऽत्यजत् ॥ इत्यादि ।

End. सौरभातिशयमविन्दत लेभे। किन्तु,—इत्यतः खण्डितम् ।

विषयः । श्रीहर्षकृतनैषधचरितस्य व्याख्यानं ।

---



## No. 1206. कुसुमाञ्जलिप्रकाशः ।

Substance, palm leaf, 13½ × 2¼ inches. Folia, 214. Lines, 6 on a page. Extent, 30,816 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágísá. Appearance, very old. Prose. Correct.

*Kusumáñjalí-prakás'a.* A commentary on the *Kusumáñjalí* of Udayanáchárya. By Vardhamána. MSS. of this work are exceedingly scarce.

Beginning. (प्रथमपत्रं नास्ति) उपकारलब्धं भमदुःखिनमुपकर्त्तुं व्याप्रियमाणमित्यर्थः । तथापि भूयशो घूमादिविषयकस्य स्वीयस्य सत्वात् किमनेन इत्यत आह ईशस्य पदयुगेति । इत्यादि ।

End. तत्र न्यायकुसुमाञ्जलेर्यत् समर्पणं तेन भवान् प्रीतोऽस्तु ॥
यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्यात्मजोऽतिविषमं कुसुमाञ्जलिं तं प्राकाशयत् छतिमुदे बुधवर्द्धमानः ॥

Colophon. इति महोपाध्यायश्रीवर्द्धमानविरचितो न्यायकुसुमाञ्जलिप्रकाशः सम्पूर्णः ॥

विषयः । उदयनाचार्य्यकृतकुसुमाञ्जलेर्व्याख्यानं ॥

---

## No. 1207. राजभूषणी ।

Substance, country-made yellow paper, 9½ × 5 inches. Folia, 28. Lines, 13 on a page. Extent, 773 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, old. Verse. Correct.

*Rájabhushaṇí.* A treatise on civil polity. By Rámánanda Tírtha. Contents: the uses of kings; the importance of government; punishment; the attributes proper for ministers; do. of clerks; do. of priests; do. of Bráhmaṇas; do. of kings; do. of ambassadors; royal robes; rules of warfare, treatise &c.; military expeditions; diurnal duties of kings; rules of government; law of inheritance; witnesses; swearing in court; punishment of perjury; division of time; intercalation; punishment of priests who fail to perform their duties; fees to priests; wages; punishment for venial offences; punishment for mischief; do. for theft; do, for adultery; do. for gambling; do. for boundary disputes; inauguration of kings.

Godhead, the main object of the second part is to establish the preeminence of Rádhá, and to assign to her a position similar to what the Tantras have assigned to Durgá, and this is done by narrating a great number of stories and anecdotes, some of which occur in other Puráṇas in an abbreviated or modified form, but most are quite new.

Beginning. नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥
श्रीनारद उवाच। गणेशजननी दुर्गा राधा लक्ष्मी सरस्वती।
सावित्री च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता॥
आविर्बभूव सा केन सा वा का+ + +वरा।
किं वा तल्लक्षणं सा च बभूव पञ्चधा कथं॥
सर्व्वासां चरितं पूजा विधानं गुणमीप्सितं।
अवतारं कुतस्तस्यास्तन्मां व्याख्यातुमर्हसि॥
श्रीनारायण उवाच। प्रकृतेर्लक्षणं वत्स को वा वक्तुं क्षमो भवेत्।
किञ्चित्तथा प्रवक्ष्यामि यच्छ्रुतं धर्म्मवक्त्रतः॥ इत्यादिः।

End. न तस्य मृत्युर्भवति जले वह्नौ विले ध्रुवं।
जीवन्मुक्तो भवेत् सोऽपि सर्व्वसिद्धेश्वरो भवेत्॥
यदि स्यात् सिद्धकवचो विष्णुतुल्यो भवेद् ध्रुवं।
कथितं प्रकृतेः खण्डः सुधाखण्डात् परं मुने॥
या एव मूलप्रकृतिर्यस्याः पुत्रो गणेश्वरः।
कृत्वा कृष्णव्रतं या च लेभे गणपतिं सुतं॥
स्वांशेन कृष्णो भगवान् बभूव च गणेश्वरः।

Colophon. इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायणनारदसंवाद त्रिषष्टितमोऽध्यायः।
श्रुत्वा च प्रकृतेः खण्डं शृणुषोश्च सुधोपमं।
भोजयित्वा च दध्यन्नं तस्मै दद्याच्च काञ्चनं॥
सवत्सां सुरभिं रम्यां ददाति भक्तिपूर्व्वकं। इति प्रकृतिखण्डः समाप्तः॥

विषयः। १, २, अध्याये।—पञ्चधाप्रकृतिकथनं। प्रकृतिसञ्ज्ञानिरुक्तिः। तत्स्वरूपादिकथनं। राधैव प्रकृतिरितिकथनं। देवानां पत्नीनिरूपणादिकं। सर्व्वासां राधाकलारूपत्वकथन। प्रकृतिचरित्रकथनं। गोलोकादीनां नित्यत्वकथनं। कृष्णस्य साकारत्वेऽपि निराकारत्वकथनं। श्रीकृष्णस्य स्वेद-निश्वासादिभ्यो जलपवनादी-

नामुत्पत्त्यादिकथनं। अण्डोत्पत्तिवृत्तान्तकथनं। अनपत्या भवेति राधां प्रति श्रीकृष्णस्य शापदानकथनं। सरस्वत्यादीनामुत्पत्तिः। देवादीनामुत्पत्तिः।

३, ४, ५, अ०।—असङ्ख्यब्रह्मविष्णुशिवकथनं। ब्रह्माण्डसंस्थानादिकथनं। विराज-उत्पत्त्यादिकथनं। विश्वनिर्णयवर्णनं। सरस्वत्याः पूजाविधानं। सरस्वतीकवचं। सरस्वतीस्तोत्रं। नदीरूपायाः सरस्वत्या माहात्म्यकथनं। गङ्गासरस्वत्योर्विरोधवर्णनं। वृक्षरूपा नदीरूपा च भवेति पद्मां प्रति सरस्वत्याः शापदानविवरणं। गङ्गासरस्वत्योरन्योन्यशापेन नदीभावप्राप्तिकथनं। स्त्रीजितस्य पुरुषस्य निन्दा। एकभार्य्यस्य सुखित्वकथनं। कलेः पञ्चसहस्रे वर्षे गते सति पद्मागङ्गासरस्वतीनां पुनर्विष्णुलोकगमनं भावीति कथनं। तासां माहात्म्यकथनं।

६, ७ अ०।—कलेर्दशसहस्रवर्षपर्य्यन्तं शालग्राम-जगन्नाथयोः पृथिव्यामवस्थितिकथनं। तावत्कालं वेदपुराणश्राद्धतर्पणादीनामवस्थानकथनं। अतः परं कलिधर्मकीर्त्तनं। तत्र सन्ध्या-यज्ञसूत्रादीनां विलोपकथनं। वृक्षाणां ह्रस्वपरिमाणत्वकथनं। नराणाञ्च अङ्गुष्ठप्रमाणकथनादिकं। कल्क्यवतारकथा। प्रलयकथनञ्च। विशेषेण राधाया माहात्म्यकथनं। मेदिन्या उत्पत्तिकथनं। मेदिनीनिरुक्तिः। वराहकृतपृथिव्युद्धारकथनं। तत्पूजाविधानं। मङ्गलस्य उत्पत्तिः। पृथिव्या ध्यानादिकथनं। पृथिवीस्तोत्रादिकथनं। भूमिदानादिमाहात्म्यं। भूमौ दीपशङ्खादिस्थापने दोषकथनं।

८, ९ अ०।—सगरवंशवर्णनं। भगीरथकृतगङ्गानयनविवरणं। तिथ्यादिविशेषे गङ्गास्नानमाहात्म्यकथनं। गङ्गाया ध्यानादिकथनं। गङ्गास्तोत्रं। कार्त्तिकपूर्णिमायां श्रीकृष्णस्य रासोत्सवकथनं। तत्र ब्रह्मादीनां तत्पूजनादिवृत्तान्तकथनं। तुलस्या रूपवर्णनं। कलौ पृथ्वीत्यागानन्तरं गङ्गायां श्रीकृष्णसान्निध्यगमनविवरणं। शुष्ककण्ठोष्ठानां ब्रह्मविष्णुशिवादीनां श्रीकृष्णेन सह संवादकीर्त्तनं। पुनः श्रीकृष्णपदाङ्गुष्ठाद् गङ्गाया आविर्भावकथनं।

१०, ११, १२ अ०।—हरिणा सार्द्धं गङ्गाया विवाहकथनं। वृषध्वजभक्तस्य वृषध्वजाभिधानन्वपतेरुपाख्यानं। भगवता सह महादेवस्य संवादः। धर्म्मध्वजकुशध्वजयोरुपाख्यानं। वेदवत्या जन्मादिविवरणं। तस्यास्तपस्यादिवर्णनं। तां कामयमानस्य रावणस्य वृत्तान्तकीर्त्तनं। दशमुखं प्रति तस्याः शापदानं। जनकात्मजारूपेण तस्याः पुनर्जन्मग्रहणादिविवरणं। परीक्षासमये पुनस्तुभ्यं जानकीं दास्यामीति रामं प्रति वह्निवचनं। रावणकृतच्छायासीताहरणकथनं। रावणवधानन्तरं पुष्करतीर्थे तपश्चरन्त्याश्छायासीतायाः लक्ष्मीत्वप्राप्तिकथनं। पुनस्तस्या द्रौपदीरूपेण जन्मवृत्तान्तकथनं। महादेवान्तिके पतिं देहीति पञ्चवारं सीताया

विषयः। प्रार्थनया रसिकचूडामणेर्गौरीशस्य पञ्च ते प्रिया भविष्यन्तीति वरदानं, तेन च द्रौपद्याः पञ्चपतिपत्नीत्वकथनं।

१३, १४, १५, १६, १७, १८, १९ अ०।—धर्म्मध्वजपत्न्या माधव्या गर्भे तुलस्या जन्मादिविवरणं। तुलस्यै ब्रह्मणो वरदानवृत्तान्तकथनं। शङ्खचूडेन सह तस्याः संवादः। स्त्रीचरित्रकीर्त्तनं। तयोर्विवाहकथनं। वैकुण्ठधामवर्णनं। तुलसीशङ्खचूडयोर्विलासवर्णनं। महादेवेन सह शङ्खचूडस्य संवादः। दम्भदानवस्य उपाख्यानं। दानवैः सह देवानां युद्धवर्णनं। नारायणस्य शङ्खचूडरूपमास्थाय तुलसीसमीपगमनवृत्तान्तकथनं। पाषाणमयो भवेति कृष्णं प्रति तुलस्याः शापदानं। गण्डकीनद्या उत्पत्तिः। तुलसीशिलाचक्रयोर्माहात्म्यकीर्त्तनं। श्रीधर-दामोदरादिशिलाचक्रलक्षणं। तुलसीनामाष्टकादिकथनं।

२०, २१, २२, २३, २४, २५, २६, २७, २८, २९, ३०, ३१ अ०।—मद्रदेशाधिपतेरश्वपतेरुपाख्यानं। गायत्रीजपप्रकार-माहात्म्यादिकथनं। सावित्रीध्यानस्तोत्रादिकथनं। सावित्र्या जन्मकथनं। सत्यवतः काष्ठाहरणादिवृत्तान्तकथनं। यमेन सह सावित्र्याः संवादः। कर्म्मफलप्रदर्शनं। कर्म्मविपाककथनं। येन येन कर्म्मणा स्वर्गादिलाभो भवति तत्कीर्त्तनं। यमाष्टककीर्त्तनं। नरककुण्डवर्णनं। नरा येन येन कर्म्मणा यादृशं नरकं प्राप्नुवन्ति तत्कथनं। अवश्यकर्त्तव्याकर्त्तव्यनिरूपणं। पापनिरूपणं। तत्त्वज्ञानकथनं। लौहकुण्डादिलक्षणकीर्त्तनं। श्रीकृष्णमाहात्म्यादिकीर्त्तनं।

३२, ३३, ३४, ३५, ३६ अ०।—महालक्ष्म्या राधायाश्च उत्पत्तिकथनं। तयोः परिणयकथनं। स्वर्गमर्त्यादिषु महालक्ष्म्या नामभेदादिकथनं। भाद्रशुक्लाष्टम्यादिषु तस्याः पूजाविधानं। इन्द्रं प्रति दुर्व्वाससः शापदानविवरणं। पद्मायाः समुद्रकन्यात्वकथनं। शूद्रश्राद्धान्नादिभोजनप्रतिषेधः। वैष्णवमन्त्रग्रहणफलकीर्त्तनं। सन्न्यासिनां ग्राम्यधर्म्मादिनिषेधकथनं। पुत्रकन्याजननादिकारणकीर्त्तनं। कालधर्म्मकथनं। शक्रगीष्पतिसंवादः। लक्ष्मीचरित्रकीर्त्तनं। लक्ष्मीपूजाविधिः। तत्र ध्यानस्तोत्रादिकीर्त्तनं।

३७, ३८, ३९, ४०, ४१, ४२, ४३ अ०।—स्वाहाया उत्पत्तिकथनं रूपवर्णनञ्च। तस्यास्तपस्या, वह्निपत्नीत्वकथनञ्च। तद्गर्भे दक्षिणाग्न्यादीनां जन्मकथनं। स्वाहामन्त्रादिकथनं। स्वधाया जन्म, रूपवर्णनञ्च। स्वधापूजामन्त्रादिकथनं। दक्षिणाया उत्पत्तिः, रूपवर्णनञ्च। भर्तृप्रशंसा। भर्तृ-पतिप्रभृतिनामनिर्व्वचनं। दक्षिणया सह यज्ञस्य विवाहः। तद्गर्भे फलस्य जन्म। अदक्षिणस्य कर्म्मणो निन्दादिकीर्त्तनं। दक्षिणाया ध्यानादिकथनं। षष्ठीनामनिरुक्तिः। तस्याः कार्त्तिकपत्नीत्व-

कथनं। प्रियव्रतोपाख्यानं। षष्ठ्या सार्द्धं क्रोडीकृतमृतपुत्रस्य तस्य संवादकीर्त्तनं। पुत्रजनने एकविंशतिदिने वटमूलादौ षष्ठीपूजावश्यकताकीर्त्तनं। षष्ठीध्यान-स्तोत्रादिकथनं। मङ्गलचण्डीनामनिरुक्तिः। तस्या आविर्भाव-पूजनादिकथनं। मनसानामनिरुक्तिः, तस्याः पूजादिकथनं।

४४, ४५, ४६ अ०।—जरत्कारुणा सह तस्या विवाहादिवृत्तान्तकीर्त्तनं। राधया सह विहरमाणस्य श्रीकृष्णस्य वामपार्श्वतो गवामधिष्ठात्र्याः सुरभ्या उत्पत्त्यादि-कथनं। (अत्र च पाठान्तरे राधाया वामपार्श्वतः सुरभ्या उत्पत्तिरवधेया)। तस्या ध्यानस्तोत्रादिकथनं। राधिकाया उत्पत्तिकथनं। द्विधारूपस्य भगवतो दक्षिणा-र्द्धात् श्रीकृष्णस्य वामार्द्धाच्च राधिकाया आविर्भावादिकथनं। राधानामनिरुक्तिः। राधालोमकूपेभ्यो गोपीनामुत्पत्त्यादिकथनं। राधाया वामभागात् महालक्ष्म्या उत्पत्तिकथनं। तया सार्द्धं वैकुण्ठाधिपतेश्चतुर्भुजस्य दाम्पत्यकथनं। राजलक्ष्म्या-दीनामुत्पत्त्यादिकथनं। ब्रह्मादिस्तम्बपर्य्यन्तं जगतो मिथ्यात्वकथनं। विरजाया नदीभावप्राप्तिविवरणं। राधायाः शापेन श्रीदाम्नः शङ्खचूड़दैत्यरूपेण जन्मादि-कथनं। "गोपकन्या भव किन्तु शतं समास्ते कृष्णविच्छेदो भविष्यतीति" राधां प्रति श्रीदाम्नः शापदानं। वृषभानुगृहे अयोनिजायाः राधाया जन्मवृत्तान्तकी-र्त्तनं। श्रीकृष्णस्य अवतारकथनं। कलावत्यादीनामुत्पत्तिकथनं।

४७, ४८, ४९, ५०, ५१ अ०।—राज्ञ उत्कलस्य ब्रह्मकृतसुयज्ञेतिनामकरणं। सुयज्ञं प्रति 'कुष्ठी भवेति' कस्यचिद् ब्राह्मणस्य शापदानवृत्तान्तः। अतिथिं ब्रा-ह्मणं दृष्ट्वा अभ्युत्थानाद्यकरणे प्रत्यवायादिकथनं। कर्म्मविपाककथनं। सुतपासु-यज्ञसंवादः। सुतपसो जन्मादिविवरणं। नारायणादीनामाश्रयकथनं। काल-परिमाणकीर्त्तनं। युगादिपरिमाणकथनं। स्वायम्भुवमनुकृतयज्ञसङ्ख्यादिकथनं। चतुर्द्दशमनुविवरणं।

५२, ५३, ५४, ५५ अ०।—श्रीकृष्णस्य योगनिद्राकथनं। शिवस्य मृत्युञ्जयनाम-कारणकथनं। राधाया गर्भधारणादिकथनं। महाविराज उत्पत्तिकथनं। राधायाः श्रीकृष्णप्राणाधिष्ठातृत्वकथनं। राधासेवनमाहात्म्यं। विप्रपादोदकमाहात्म्यं। राधातन्त्रदानकथनं। राधाया ध्यानादिमन्त्रकथनं। राधिकास्तोत्रकीर्त्तनं। रा-धिकाकवचकथनं। शिवकृष्णयोरभेदकीर्त्तनं। शिवनामनिरुक्तिः। एवं महादेवादि-नाम्नामपि। दुर्गानारायणीशानाप्रभृतिषोड़शनामधेयानामर्थादिकथनं। सर्व्वादौ केन दुर्गा पूजितेति कथनं। सुरथवैश्ययोः कथनं।

५६, ५७ अ०।—चन्द्रकृतताराहरणवृत्तान्तकीर्त्तनं। चन्द्रस्य कलङ्कोत्पत्तिकथनं। शत्रोरपि गुणा वक्तव्या इत्यादिकथनं। शुक्रकृतचन्द्रपापापनयनविवरणं। अम्बु-

वाच्यां भूमिखननादिषु पापकथनं। एवं कन्याविक्रय-एकादशीभोजन-मातापितृप्रा-लनदैवसिकनिधुवन-परस्त्रीमुखस्तन-श्रोणीप्रभृतिदर्शन-नरघातनादिपापकीर्तनं। वृहस्पतेर्विलापवर्णनादिकं। ब्रह्मेन्द्रादीनां संवादः। सम्वर्त्तकृतोतथ्यपत्नीहरण-कथनं। अङ्गिरसो भार्य्यायाः पुंसवनव्रतानुष्ठानवृत्तान्तकीर्तनं। वृहस्पतेरुत्पत्ति-कथनं। शिवेन सह तस्य संवादः। वैष्णवमाहात्म्यं। भक्तानां श्रीकृष्णे भक्तिं विना मोक्षाभिलाषो नास्तीतिकथनं। श्वेतद्वीपाद् विष्णोरागमनादिकथनं।

५८, ५९ अ० —शुक्रालयवर्णनं। तत्र ब्रह्मादीनां गमनविवरणं। ताराभिक्षा-कथनं। बलात्कारेण स्त्रीणां सतीत्वहानिर्न जायते, वस्तुतः प्रायश्चित्तानुष्ठानेन शुद्धिर्भवतीति कथनं। बुधस्य जन्मकथनं। तेन सह चित्रायाः पाणिग्रहणकथनं। अधिरथादीनां जन्मादिकथनं। सुरथस्य शरत्कालीनमहापूजाद्यनुष्ठानादि-कथनं। ध्रुवगोत्रस्य नन्देः सुरथराजधानी-कोलारोधविवरणं।

६०, ६१, ६२, ६३ अ०।—सुरथवैश्ययोः प्रकृतिसन्दर्शनकथनं। नवधाभक्तिल-क्षणकीर्तनं। मूलप्रकृतिध्यानादिकथनं। षोड़शोपचारमन्त्रादिकथनं। बलि-दानयोग्यच्छागादिलक्षणकथनं। बोधनादिकालकथनं। ज्ञानकथनं। मधुमा-सादौ श्रीकृष्णकृतदुर्गापूजाकथनं। दुर्गास्तोत्रकथनं। ब्रह्माण्डमोहनाभिधान-दुर्गाकवचकीर्तनं। प्रकृतिखण्डफलश्रुतिः। समाप्तिः।

---

## No. 1249. धातुदीपिका।

Substance, country-made yellow paper, 11 × 6 inches. Folia 102. Lines 24 on a page. Extent, 2,907 s'lokas. Character, Bengali. Date ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Incorrect.

*Dhátu-dípiká.* A commentary on the Kavikalpadruma, of Vopadeva. By Durgádása. The Kavikalpadruma is a list of Sanskrit roots arranged under the ten heads of Sanskrit conjugation. The work of course belongs to the school of Vopadeva, and differs from others in having its own peculiar symbols and technical terms.

Beginning. नत्वा शङ्करचरणसरोजं श्रीदुर्गादासेन धीमता।
विदधे धातुदीपिका नाम टीका कविकल्पशाखिनः॥
कति कति सन्ति ये सन्तः सन्तोषं नो + + + इतरगुणे।
ये परगुणमनुलुब्धा दुर्गादासश्रमो भवेत्तेभ्यः॥

सुखाय च्छात्रवर्गाणामनेनेति परिभाष्यते ।
अन्तस्थाः स्युर्यवरला आद्या इत्यादयः स्वराः ॥
ऊष्मसञ्ज्ञाः शषसहा अन्त्यात् प्रागुपधा भवेत् । श्रीवोपदेवो धातुपाठं चिकीर्षितप्रारिप्सितसमाप्तये शिष्टाचारप्राप्तं मङ्गलमाचरति,—शब्दाकरकरग्राममर्थमित्यादिः ।

End. सर्व्वेषां ++++++मन्येषां हेमराशिवत् ।
कविकल्पद्रुमस्य प्रदीप्यते धातुदीपिका ॥

Colophon. इति श्रीदुर्गादासविरचिता +———कविकल्पद्रुमटीका समाप्ता ।

विषयः । वोपदेवविरचितकविकल्पद्रुमाभिधेयधातुपाठस्य व्याख्यानं ॥

---

## No. 1250. माध्यन्दिनशतपथब्राह्मणभाष्यं ।

Substance, country-made yellow paper, 14 × 8 inches. Folia, 487. Lines, 24—25—26—27—28 on a page. Extent, 18,201 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Incorrect.

*S'atapatha-bráhmaṇa-bháshya.* A commentary on the S'atapatha Bráhmaṇa of the White Yajur Veda. By Mahidhara. Large extracts from this work have already been printed in Dr. Weber's edition of the Bráhmaṇa. See also Weber's Catalogue of the Berlin Collection, and Max Müller's *Ancient Sañskṛit Literature.*

Beginning. वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः ।
कृते चेतर+चीरसागरादिव चन्द्रमाः ॥
विजेता राजते जातो वीरः श्रीरच्चमा+शः ।
धर्म्मब्राह्मणसाम्यः समादिशन् सायणाचार्य्यः ॥
ऋग्यजुःसामशाखानामेकैका व्याकृता लया ।
तावता तत्समानार्थं ज्ञातुं शक्या ++परः ॥
वासना+++++ मन्त्रार्थानामशेषतः ।

प्रायेणाध्वर्य्यवं कर्म्म पू+ ++न्तरैर्विना ॥
करतलामलक+ परं तत्त्वं प्रकाशितं ।
सका+सदृशी शाखा त्वया व्याख्यायतामिति ॥
सर्व्वतः सायणाचार्य्यो विम्रश्योदीरिता+ + ।
माध्यन्दिने शतपथे ++ व्याख्यां करोति+ ॥
सञ्चारः पदवाक्यार्थन्यायानां दर्शितः पुरा ।
वेदानामर्थवत्त्वादि यच्चान्यदुपयुज्यते ॥
सर्व्वशाखासु यत्नेन विज्ञेयं तदिहाखिलं ।
यत्र सन्दिष्टमज्ञातमत्र तद्विचरिष्यते ॥
सम्मत्या कल्पसूत्राणां ब्राह्मणानाञ्च सङ्ग्रहात् ।
इह हि चरमे चतुर्द्दशे काण्डिके करतलामलकवत् परं तत्त्वं प्रकाशितं । ततः प्राकृतैश्च +++++काण्डैः त्रेताग्निसाधर्म्म्यप्राधान्येन । इत्यादिः ।

End. यदा मलिम्लुचो भवति, तदा त्रयोदश, अतोऽस्या इष्टेर्द्वादशकपालसंस्कृतहविर्युक्तत्वात् संवत्सरसम्मितत्वं । अतः संवत्सररूपाया इष्टेर्द्वादश त्रयोदश वा दक्षिणा युक्ता इत्यर्थः । इति पञ्चमं ब्राह्मणं ।
वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

Colophon. इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीबुक्कभूपालसाम्राज्यधुरन्धरसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणे पञ्चमकाण्डे पञ्चमोऽध्यायः । समाप्तञ्च पञ्चमकाण्डं ।

विषयः । शुक्लयजुर्वेदीयमाध्यन्दिनशतपथब्राह्मणस्य व्याख्यानं ।

---

## No. 1251. गङ्गावाक्यावली ।

Substance, country-made yellow paper, 13 × 7 inches. Folia, 137. Lines, 25 on a page. Extent, 3,211 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose and verse. Generally correct.

*Gangá-vákyávalí.* A treatise on the religious merits of the River Ganges, including directions for visiting, saluting, and worshipping the river, for bathing in it on different auspicious occasions, consecrating gifts, performing s'ráddhas, special merits of Gangáságara and Prayága,

&c., &c. By Vidyápati. The author was a distinguished poet, and, according to tradition current in Tirhoot, lived during the reign of Rájá S'iva Siñha of Tirhoot, who granted him a patent conveying a small plot of land in the year two hundred and ninety-three of Lakshmaṇa Sena's era, which would be equal to the Christian era 1400. The Sadukti-karṇámrita (*ante* No. 1180) however, quotes from the works of a Vídyá-pati, and the Sadukti itself was completed in the year 1205, A. C., or nearly two hundred years before S'iva Siñha. Thus we have two Vidyápatis, and it is doubtful who wrote the work under notice. Tirhoot tradition assigns it to the second.

Beginning. स्वस्त्यस्तु वस्तुहिनरश्मिरतः प्रसादादेकं वपुः श्रितवता हरिणा समेत्य ।
तन्नाभिपङ्कजसहोत्थमृणाललीलामाविष्करोति हृदि यस्य भुजङ्गराजः ॥
यावद्गङ्गा विभाति त्रिपुरहरजटामण्डलं मण्डयन्ती
मल्लीमाला सुमेरोः शिरसि सितमहावैजयन्ती जयन्ती ।
याता पातालमूलं स्फुरदमलरुचिः शेषनिर्म्मोकवल्ली
तावद्विश्वासदेव्या जगति विजयतां गाङ्गवाक्यावलीयं
अथ भक्तिश्रद्धापुरःसरमेव सर्व्वकर्म्मविशेषमाह । अतो भक्तिश्रद्धे अवश्यमेव कर्त्तव्ये, तथा च यमः ।——
श्रद्धा भक्तिश्च काम्यानां वृद्धिक्षेमकरे हि ते । इत्यादिः ।

End. गङ्गातीरं परित्यज्य येऽन्यतीर्थाभिलाषिणः ।
तोयान्तरे रतिर्येषां ते वै रौरवगामिनः ॥
यावत् स्वर्गतरङ्गिणी हरजटाभ्रष्टान्तरा लम्बते
यावद्विश्वविशालविस्तृतकरः सूर्य्योऽयमुज्जृम्भते ।
यावन्मण्डलमैन्दवं वितनुते शम्भोः शिरोमण्डलं
तावत् कल्पलतेयमस्तु सफला देव्याः सतां श्रेयसि ॥
कियन्निबन्धमालोक्य श्रीविद्यापतिसूरिणा ।
गङ्गावाक्यावली देव्याः प्रमाणैर्विमलीकृता

Colophon. इति श्रीविद्यापतिविरचिता गङ्गावाक्यावली समाप्ता ।

विषयः । गङ्गानामस्मरणप्रकरणं । तत्र भक्तिश्रद्धादिलक्षणं । स्मरणप्रयोगः । (एवं परत्रापि प्रयोगो बोद्धव्यः) । नामसङ्कीर्त्तनादिमाहात्म्यकथनं । यात्राप्रकरणं । गङ्गावासमाहात्म्यं । यात्रापूर्व्वदिने केशवपनादिकर्त्तव्यता । श्राद्धविधानं । श्रवणमाहात्म्यादिकथनं । गमनप्रकरणं । वीक्षणप्रकरणं । नमस्कारप्रकरणं । स्पर्शनकरणं । सामान्यतः सर्व्वतीर्थप्राप्तिश्राद्धप्रकरणं । मुण्डनादिकथनं ।

श्राद्धोत्तरकर्म्मकथनं। गङ्गाभक्त्यादिमाहात्म्यकथनं। अभयप्रकरणं। क्षेत्रप्रकरणं। अवगाहनादिप्रकरणं। स्नानप्रकरणं। सामान्यकालस्नानादिविधानं। आचमनादिकथनं। गङ्गावाहनध्यानादिमन्त्रकथनं। पुण्यकालस्नानप्रकरणं। तत्र तिथिस्नानं। विशेषेण माघसप्तमीस्नानकीर्त्तनं। नन्दास्नानं। युगाद्यास्नानं। दिनक्षयस्नानं। नक्षत्रस्नानं। एवं योग-दशहरा-सङ्क्रान्तिस्नानकथनं। सङ्क्रान्तिनिरूपणं। माम-ग्रहण-मध्याह्न-वारुण्यादि-महाज्यैष्ठी-शिवसन्निहित-पश्चिमवाहिन्यादिगङ्गास्नानकथनं। तर्पणप्रकरणं। नीलीरक्तादिवस्त्रपरिधानेन तर्पणाद्यनुष्ठाननिषेधः। मृत्तिकाप्रकरणं। जपप्रकरणं। पूजाप्रकरणं। मृत्तिकानिर्म्मितशिवलिङ्गपूजनादिविधानं। पितृलोकानुद्दिश्य देवस्नानादिविधानं। दानप्रकरणं। तत्र दानादिस्वरूपकथनं। द्रव्यदैवतनिरूपणं। प्रतिषिद्धदानं। सामान्यदानं। घृतधेनु-सुवर्णधेनु-भूमिप्रभृतिदानविधानं। तत्र भूमिदाने परिमाणादिकथनं। व्रतफलादिकथनं। गङ्गास्तोत्रकीर्त्तनं। दशहरागङ्गापूजाविधिः। श्राद्धे विहिताविहितद्रव्याणि। जलप्रकरणं। तत्यानप्रकरणं। आश्रयप्रकरणं। मृत्युप्रकरण। प्रायश्चित्तप्रकरणं। अस्थिस्थितिप्रकरणं। गङ्गासागरसङ्गमादिप्रकरणं। प्रयागमाहात्म्यादिप्रकरणं। तत्र मुण्डनमरणादिप्रकरणं। विघ्नप्रकरणं। प्रतिषिद्धप्रकरणं। गङ्गामाहात्म्यकीर्त्तनं। इति।

---

## No. 1252. ब्रह्मवैवर्त्तीयब्रह्मखण्डः।

Substance, country-made yellow paper, 13 × 7 inches. Folia, 94. Lines, 22 on a page. Extent 2,068 s'lokas. Character, Bengali. Date ? Place of deposit, S'rírámpur College. Appearance, fresh. Verse. Generally correct.

*Brahma-khaṇḍa.* The first part of the Brahma-vaivarta Purána, being the tenth of the eighteen great Puráṇas attributed to Vyása (Vide ante p. 227). It is thoroughly sectarial in character, and treats of the preeminence of Kṛishṇa as the supreme Deity. Náráyaṇa is assumed to be a part manifestation of Kṛishṇa, and legends are over and over introduced to illustrate the subordinate character of S'iva, Durgá, and the other gods and goddesses. The seat elect of Kṛishṇa is described to be Goloka, the highest heaven of the Vaishṇavas. The MS. comprises thirty chapters, and professes to be complete.

Beginning. गणेशब्रह्मेशसुरेशशेषाः सुराश्च सर्व्वे मुनयो मुनीन्द्राः ।
सरस्वती श्रीगिरिजादिकाश्च (यं) नमन्ति देवाः प्रणमामि तं विभुं ॥
स्थूलात् स्थूलतमां तनूं विदधतं विराजं विश्वानि लोमविवरेषु महान्तमाद्यं ।
सृष्ट्युन्मुखः स्वकलयापि ससर्ज्ज सूक्ष्मां नित्यां समेत्य हृदये तमजं भजामि ॥
ध्यायन्ते ध्याननिष्ठाः सुरनरमनवो योगिनो योगरूढाः
सन्तः स्वप्नेऽपि सन्तं कतिकतिजनिभिर्यं नमस्यन्ति नम्रा ।
ध्याये स्वेच्छामयं तं त्रिगुणपरमहो निर्व्विकारं निरीहं
भक्तध्यानैकहेतोर्निरुपममचिरं श्यामरूपं दधानं ॥
वन्दे कृष्णं गुणातीतं परं ब्रह्माच्युतं यतः ।
आविर्बभूवुः प्रकृतिब्रह्मविष्णुशिवादयः ॥
ॐ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
ॐ नमः सर्व्वविघ्नविनाशकाय ।
अमृतपरमपूर्व्वं भारतीकामधेन्वाः श्रुतिगणकृतवत्सो व्यासदेवो दुदोह ।
अतिरुचिरपुराणं ब्रह्मवैवर्त्तमेतत् पिबत पिबत मुग्धा दुग्धमक्षय्यमिष्टं ॥
भारते नैमिषारण्ये ऋषयः शौनकादयः ।
नित्यां नैमित्तिकीं कृत्वा क्रियामूषुः कुशासने ॥
एतस्मिन्नन्तरे सौतिमागच्छन्तं यदृच्छया ।
प्रणतं सुविनीतं तं विलोक्य ददुरासनं ॥
तं सम्पूज्यातिथिं भक्त्या शौनको मुनिपुङ्गवः ।
संपृच्छत् कुशलं शान्तः शान्तं पौराणिकं मुदा ॥
वर्त्मायामविनिर्मुक्तं वसन्तं सुस्थिरासने ।
सस्मितं सर्व्वतत्त्वज्ञं पुराणानां पुराणवित् ॥
परं कृष्णकथोपेतं पुराणं श्रुतिसुन्दरं ।
मङ्गलं मङ्गलार्हञ्च मङ्गल्यं मङ्गलालयं ॥
सर्व्वमङ्गलवीजञ्च सर्व्वदा मङ्गलप्रदं ।
सर्व्वामङ्गलविघ्नघ्नं सर्व्वसम्पत्करं परं ॥
हरिभक्तिप्रदं शश्वत् सुखदं मोक्षदं भवेत् ।
तत्त्वज्ञानप्रदं दारापुत्रपौत्रविवर्द्धनं ॥
पप्रच्छ सुविनीतञ्च विनीतो मुनिसंसदि ।
यथाकाशे तारकाणां द्विजराजो विराजते ॥

शौनक उवाच ।

प्रस्थानं भवतः कुत्र कुत आयासि ते शुभं ।
किमस्माकं पुण्यदिनमद्य त्वद्दर्शनेन च ॥
वयमेव कलौ भीता विशिष्टज्ञानवर्ज्जिताः । इत्यादिः ।———

End. दिव्या स्त्रीपूजिता येन पतिपुत्रवती सती ।
प्रकृतिः पूजिता तेन सर्व्वमङ्गलदायिनी ॥
मूलप्रकृतिरेका सा पूर्णब्रह्मस्वरूपिणी ।
सृष्टौ पञ्चविधा सा च विष्णुमाया सनातनी ॥
प्राणाधिष्ठात्री देवी या श्रीकृष्णस्य परात्मनः ।
सर्व्वासां प्रेयसी कान्ता सा राधा परिकीर्त्तिता ॥
नारायणप्रिया लक्ष्मी सर्व्वसम्पत्स्वरूपिणी ।
रागाधिष्ठात्री देवी या सा च पूज्या सरस्वती ॥
सावित्री वेदमाता च पद्मरूपा विधेः प्रिया ।
शङ्करस्य प्रिया दुर्गा तस्याः पुत्रो गणेश्वरः ॥

Colophon. इति ब्रह्मवैवर्त्ते महापुराणे ब्रह्मखण्डे नारायणनारदसंवादे त्रिंशत्तमोऽध्यायः ।
समाप्तश्चायं ब्रह्मखण्डः ।

विषयः । १, २, ३ अध्याये ।—सूतेन सह ऋषीणां संवादः । गोलोकादिवर्णनं । परब्रह्म-निरूपणं । महदादिसृष्टिकथनं । नारायणाविर्भावकथनं । नारायणकृतश्रीकृष्ण-स्तोत्रं । शम्भोराविर्भावकथनं । तत्कृतश्रीकृष्णस्तोत्रं । विधातुराविर्भावकथनं । तत्कृतश्रीकृष्णस्तवनं । धर्म्मस्य प्रादुर्भावः । तत्कृतश्रीकृष्णस्तुतिः । भारत्या आवि-र्भावः । तत्कृतश्रीकृष्णस्तोत्रं । महालक्ष्म्या आविर्भावः । तत्कृतश्रीकृष्णस्तोत्रं । एवं दुर्गादीनामाविर्भावादिकथनं ।

४, ५, अ० ।—सावित्र्या आविर्भावादिकथनं । रतिमदनादीनामाविर्भावादि-कथनं । सङ्क्षेपेण ब्राह्म वाराह-पाद्मकल्पविवरणकीर्त्तनं । अत्रान्तरे भगवतो रासमण्डलवर्णनं । राधिकाया आविर्भावकथनादिकं । तस्या लोमकूपेभ्यः गोपा-ङ्गनानामुद्भवकथनं । श्रीकृष्णस्य लोमविवरेभ्यः गोपानामाविर्भावकथनं । काम-धेनूनामाविर्भावादिकथनं ।

६ अ० ।—श्रीकृष्णस्य अङ्गविशेषेण सृष्टिप्रक्रियाकथनं । तस्य नारायणादिभ्यो लक्ष्म्यादिदानवृत्तान्तकथनं । तत्समीपे शिवस्य दास्यप्रार्थना । सालोक्यादि-षड्विधमुक्तिकथनं । श्रीकृष्णार्चनमहिमा । शिवनामोच्चारणमाहात्म्यं । शिवेन

प्रत्याख्यातायाः सिंहवाहिन्या गोलोके अवस्थानादिकथनं । शिवस्तन्त्रशास्त्रं रचयिष्यतीति कथनं ।

७, ८, ९ अ०।—ब्रह्मकृतसृष्टिविवरणं । शिवस्य तामसत्वं नास्तीतिकथनं । रुद्रनामकथनादिकं । नारदं प्रति ब्रह्मणः शापदानकथनं । अप्सरआदीनामुत्पत्तिकथनं । भूमिगर्भे मङ्गलस्य जन्मवृत्तान्तकीर्त्तनं । कद्रुवंशादिकथनं । दनुवंशादिकथनं । अश्विन्यादीनां चन्द्रपत्नीत्वकथनं । चन्द्रस्य क्षयरोगोत्पत्तिविवरणं। हरिहरयोः संवादः ।

१०, ११ अ०।—कुवेरादीनां जन्मादिकथनं। सच्छूद्रकथनं। वर्णसङ्करकथनं। घृताचीविश्वकर्म्मणोः संवादः। मातृपित्रादीनां गुरुतरागुरुतरत्वादिकथनं। मातृसम्बोधनेनैव मातृतुल्यता भवतीति कथनं। कामार्त्तस्य लघुः शापेन घृताच्याः शूद्रगृहे जन्मादिकथनं। तस्याः शापेन विश्वकर्म्मणोऽपि कारुरूपेण जन्मग्रहणकथनं । प्रयागक्षेत्रे मिलितयोः जातिस्मरयोस्तयोः संलापादिकथनं । तद्गर्भे कुण्डकारादीनामुत्पत्तिकथनादिकं। सङ्कराणामुत्पत्तिकथनं। गोदावर्य्या उत्पत्तिकथनं। गणकदैवज्ञादीनामुत्पत्तिकथनं। सम्बन्धनिरूपणं। कल्याणमित्रस्य मुनेरुत्पत्तिः। तन्नामस्मरणेन वज्रभीतिर्नास्तीति कथनं। सूर्य्यकृतविप्रस्तोत्रं। विप्रपादोदकमाहात्म्यं। वैष्णवब्राह्मणप्रशंसा।

१२, १३, १४ अ०।—नारदशापेन ब्रह्मणोऽपूज्यताकथनं । गन्धर्वराजस्य शिवाराधनावृत्तान्तः। तत्पुत्रत्वेन नारदस्य जन्मादिकथनं। षट्चक्रकथनं। इड़ापिङ्गलादिषोड़शनाड़ीकथनं। नारदस्य पुनः शूद्रगृहे जन्मादिकथनं। उपवर्हणनामकेन नारदेन विना कृताया मालावत्या विलापादिवर्णनं। तत्समीपे ब्राह्मणरूपेण श्रीकृष्णस्य आगमनं। कृष्णभक्तिमाहात्म्यं।

१५, १६, १७, १८ अ०।—मालावतीसमीपे स्वामिना सह मृत्युकन्याया आगमनादिविवरणं। कालादीनां रूपवर्णनं। मालावतीकालपुरुषसंवादः। आयुर्वेदागमविवरणं। धन्वन्तरि-दिवोदासादीनां ग्रन्थकथनं। ज्वरादिलक्षणचिकित्सादिकथनं। विष्णुना सह असुराणां संवादः। मालावतीकृतश्रीकृष्णस्तोत्रं। उपवर्हणस्य शरीरे श्रीकृष्णस्य अधिष्ठानकथनं।

१९, २०, २१ अ०।—महापुरुषब्रह्माण्डपावननामककवचकथनं । शङ्करकवचकथनं । शङ्करस्तवराजकथनं । कान्यकुब्जदेशे नारदस्य जन्मवृत्तान्तकथनं। द्रुमिणस्य उपाख्यानं। मातुर्मरणे अप्राप्तप्रागल्भ्यस्य नारदस्य श्रीकृष्णमन्त्रप्राप्तिविवरणं। नारदशापमोचनवृत्तान्तकीर्त्तनं।

२२, २३, २४, २५ अ०।—नारदनामनिरुक्तिः। एवं प्रचेतोदक्ष-कर्द्दम-मरीचि-

प्रभृतीनां नामनिर्व्वचनं। ब्रह्मनारदसंवादेन वेदसारकथनं। कृष्णभक्तिमाहात्म्यं। गार्हस्थ्याश्रमप्रवेशे नियमादिकीर्त्तनं। दारपरिग्रहप्रकारः। संसारस्य अनित्यताकथनादिकं। नारदस्य शिवसान्निध्यगमनविवरणं।

२६, २७ अ०।—शिवस्य नारदाय कृष्णमन्त्रादिदानपूर्व्वकं द्विजानामाह्निकाचारकथनं। गुरुमाहात्म्यकथनं तिलकावश्यकता। शालग्रामादौ हरेरर्च्चनविधानं। शिलाचक्रमाहात्म्यं। श्रीकृष्णार्च्चनप्रकारकथनं। गृहि-द्विज-यति-वैष्णवादीनां भक्ष्याभक्ष्यकथनं। विष्णोरनिवेदितान्नजलादीनां विष्ठामूत्रसादृश्यादिकथनं। मांसादिभोजननियमकथनं।

२८, २९, ३० अ०।—तत्त्वज्ञानकथनं। जीवस्य ब्रह्मप्रतिविम्बत्वकथनं। ब्रह्मणो निर्गुणत्वादिकथनं। प्रकृतिलक्षणादिकथनं। वैष्णवमते ब्रह्मस्वरूपकथनं। तत्र गोलोकधामवर्णनं। गोपीकदम्बवेष्टितस्य श्रीकृष्णस्य राधया आलिङ्गितस्य परब्रह्मत्वकथनं। कृष्णनामनिर्व्वचनं। नारायणर्षेराश्रमवर्णनं। नारायणनारदसंवादः। भगवत्तत्त्वकथनं। राधायाः पूजने श्रीकृष्णस्य प्रीत्याधिक्यकथनं। इति।

---

## No. 1253. ब्रह्मवैवर्त्तीयगणपतिखण्डः।

Substance, country-made yellow paper, 12 × 7 inches. Folia 134. Lines, 20 on a page. Extent, 2,680 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Verse. Generally correct.

*Gaṇapati Khaṇḍa* alias *Gaṇes'a Khaṇḍa*. The third part of the Brahma-vaivarta Puráṇa. According to the Nárada Puráṇa it should comprise s'lokas; the MS. under notice contains 2680 s'lokas, divided into forty-six chapters, and professes to be complete. The work is devoted to the birth, attibutes, and worship of Gaṇes'a, and forms the scriptures of the followers of that god. It is to be noted, however, that, though the praise of the elephocephalic divinity is its main object, the Vaishṇavite character of the Puráṇa is nowhere lost sight of, and ever and anon the preeminence of Kṛishṇa is prominently brought forward.

Beginning. नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

श्रुतं प्रकृतिखण्डं तदमृतार्णवमुत्तमं।
सर्व्वोत्कृष्टमभीप्सितञ्च मूढ़ानां ज्ञानवर्द्धनं ॥
अधुना श्रोतुमिच्छामि गणेशखण्डमीश्वर।
तज्जन्मचरितं नृणां सर्व्वमङ्गलमङ्गलं ॥
कथं जज्ञे सुरश्रेष्ठः पार्व्वत्या उदरे शुभे।
देवी केन प्रकारेण लेभे तादृशं सुतं ॥
स चांशः कस्य देवस्य कथं जन्म लेभे सः।
अयोनिसम्भवः किंवा किंवाऽसौ योनिसम्भवः ॥
किंवा तद्ब्रह्मतेजो वा कियानेव पराक्रमः।
का तपस्या च किं ज्ञानं किमु+विमलं यशः ॥
अथ तस्य पुरः पूजा विश्वेषु निखिलेषु च।
स्थिते नारायणे शम्भौ जगदीशे च ब्रह्मणि ॥ इत्यादिः।

End. कात्स्न्र्यञ्च ब्रह्मवैवर्त्तं श्रुत्वा यल्लभते फलं।
तत्फलं लभते मर्त्यः श्रुत्वेदं खण्डमुत्तमं ॥
वाञ्छां कृत्वा तु मनसि शृणोति परमास्तिकः।
तस्मै ददाति सर्व्वेष्टं सुरश्रेष्ठो गणेश्वरः ॥

Colophon. इति ब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे गणपतिखण्डे षट्चत्वारिंशत्तमोऽध्यायः। इति गणपतिखण्डः समाप्तः ॥

विषयः। १ प्रथमाध्याये।—पार्व्वत्या सह स्मरहरस्य विलासमविरामं निर्व्वर्ण्य ब्रह्मादीनां नारायणसमीपगमनादिविवरणं। निधुवनप्रवृत्तस्य पुरारेः पुरद्वारस्थितानामिन्द्रचन्द्रप्रभृतिदेवानां शिवस्तवनं। भूमौ शिववीर्य्यपातकथनं। नारायणनारदसंवादः।

२, ३ अ०।—पलायितान् देवान् उद्दिश्य पार्व्वत्याः शापदानकथनं। शिवकृतपार्व्वतीस्तोत्रं। कामिनीनां दुःखवर्णनं। साध्वीलक्षणादिकथनं। पुण्यकाभिधानव्रतप्रशंसा।

४, ५, ६, ७ अ०।—पुण्यकविधानं। पुण्यकव्रतकथा। पार्व्वत्या व्रतानुष्ठानमहोत्सववर्णनं। हरकृतहरिस्तुतिः। गणेश-लम्बोदर-गजाननप्रभृतिनामधेयानां कारणकथनं। सर्व्वाग्रे गणेशादिपञ्चदेवतापूजाविधानं। दक्षिणादानावश्यकता। तत्र पार्व्वत्या सह ब्रह्मादीनां वादानुवादकीर्त्तनं। पार्व्वतीकृतश्रीकृष्णस्तोत्रं।

८, ९ अ०।—गिरिजागिरिशयोः पुरतः वृद्धरूपेण श्रीकृष्णस्य गमनवृत्तान्तकथनं। पञ्चविधपितृकथनं। नानाविधमातृकथनं। पञ्चविधपुत्रकथनं। हरिभक्तप्रशंसा।

गणेशजन्मकथनं। शिवयोः समीपे आकाशवाणीविवरणं। तयोः पुत्रमुखदर्शन-वृत्तान्तकीर्त्तनञ्च।

१०, ११, १२ अ०।—गणेशाय ब्रह्मविष्णुकुवेरादीनां यौतुकदानादिकथनं। मङ्गलमहोत्सववर्णनं। मुद्रितनयनेन शनैश्वरेण सह पार्व्वत्याः संवादः। शनैश्वरस्य स्ववृत्तान्तवर्णनं। तद्दृष्टिपातेन गणेशस्य शिरोरहितत्वकथनं। गजशिरश्छेदनविवरणं। गणेशस्य मस्तकहीनदेहे गजशिरःसंयोजनं। दुर्गायाः शनैश्वराय वरदानं।

१३, १४, १५, १६ अ०।—गणेशनामाष्टककथनं। गणेशपूजास्तवकवचादिकथनं। भूपतितशैववीर्य्यनिक्षर्वविवरणं। कार्त्तिकप्रवृत्तिप्राप्तिकथनं। कार्त्तिकानयनार्थं वीरभद्रादिप्रेरणकथनं। तैः सार्द्धं कार्त्तिकस्य संवादः। स्कन्दाद्यादिषोड़शमातृकथनं। पार्व्वतीप्रेरितरथेन कार्त्तिकस्य कैलासागमनकथनं। पुरीप्रवेशकाले तस्य पूर्णकुम्भवेश्यादिरूपमङ्गलचिह्नसन्दर्शनं। आनन्दोत्सववर्णनञ्च।

१७, १८, १९, २० अ०।—कुमाराभिषेकमहोत्सववर्णनं। विघ्नेशस्य शिरोनाशरूपविघ्नकारणकथनं। शङ्करप्रभाकरयोर्विरोधकीर्त्तनं। शङ्करं प्रति कश्यपस्य शापदानकथनं। मालि-सुमालिनोः कथा। व्याधिनाशनसूर्य्यकवचादिकथनं। गणेशस्य गजास्ययोजने विशेषकारणकथनं। पुष्पभद्रानदीतीरे रम्भया सह कामिनः शक्रस्य संवादकथनं। तयोर्जलक्रीड़ादिवर्णनं। तत्र दुर्व्वाससः आगमनादिविवरणं।

२१, २२, २३, २४, २५ अ०।—इन्द्रस्य पुनः लक्ष्मीप्राप्तिविवरण। लक्ष्मीस्तवकवचपूजादिविधानं। शक्र-सनक-सनन्द-सनातनप्रभृतीनां क्षीरसागरगमनपूर्व्वकं महालक्ष्मीसन्दर्शनवृत्तान्तकथनं। लक्ष्मीचरित्रकीर्त्तनं। गजाननस्य एकदन्तधारणकारणकथनं। जमदग्निसमीपे कार्त्तवीर्य्यार्ज्जुनस्य आतिथ्यग्रहणवृत्तान्तकीर्त्तनं। कामधेनुशरीरात् सैन्योत्पत्तिकथनं। जमदग्निकार्त्तवीर्य्यार्ज्जुनयोर्युद्धवर्णनं।

२६, २७, २८, २९, ३० अ०।—तयोर्विधातृकृतसन्धिसंस्थापनकथनं। पुनस्तयोर्युद्धवर्णनं। जमदग्निनिधनकथनादिकं। अग्निदगरदादेकादशविधबधार्हकथनं। रेणुकाभृगुसंवादः। सहमरणकथनं। ब्रह्मोपदेशात् भृगोः शिवलोकगमनादिवृत्तान्तकथनं। तत्कृतशिवस्तोत्रं। तस्य महादेवात् दिव्यास्त्रादिलाभकथनं।

३१, ३२, ३३, ३४ अ०।—त्रैलोक्यविजयश्रीकृष्णकवचकथनं। श्रीकृष्णपूजादिविधानं। श्रीकृष्णस्तोत्रकीर्त्तनं। परशुरामस्य प्रयाणकाले मङ्गललक्षणसन्दर्शनविवरणं। तस्य स्वप्नदर्शनविवरणं। कार्त्तवीर्य्यार्ज्जुन-रामदूतयोः संवादः। मनोरमासमीपे कार्त्तवीर्य्यार्ज्जुनस्य निजदुःस्वप्नवृत्तान्तकथनं।

३५, ३६, ३७, ३८, ३९ अ०।—कार्त्तवीर्य्यस्य दैववाणीश्रवणविवरणं। यात्राकाले अनिष्टसूचकचिह्नकथनं। ब्राह्मणलक्षणं। मुनिलक्षणं। योगिलक्षणं। हरिभक्तलक्षणं। रामार्ज्जुनयोः सङ्ग्रामवर्णनं। शिवकवचकथनं। रामकृतकालीस्तोत्रं। दशाक्षरमहाविद्याकवचकथनं। रामस्य क्षत्रियकुलनाशनप्रतिज्ञादिकथनं। तस्य वृद्धब्राह्मणेन सह संवादः। महालक्ष्मीकवचादिकीर्त्तनं।

४०, ४१, ४२ अ०।—रामकृत-पद्माक्ष-पुष्कराक्षनाशनकथनं। परशुरामस्य मूर्च्छादिकथनं। अर्ज्जुननिपातनं। राधा-लक्ष्मी-सावित्रीप्रभृतीनां श्रीकृष्णशक्तिविशेषत्वकथनं। परशुरामं प्रति ब्रह्मणो जनकादिषु पूज्यतरपूज्यतमादिनिर्द्देशेन वन्दनाकरणोपदेशः। रामस्य शिवसमीपगमनादिविवरणं। कैलासवर्णनं। गणेश-रामयोः संवादः। ज्ञानस्वरूपनिरूपणं।

४३, ४४, ४५, ४६ अ०।—गणेशदन्तभङ्गादिविवरणं। दुर्गायाः खेदवर्णनं। रामं प्रति तस्याः कोपादिकथनं। गणेशस्य परमरूपवर्णनं। पुत्रनामाष्टकस्तुतिः। विष्णूपदेशेन रामकृतदुर्गास्तोत्रं। गणेशस्य कृष्णरूपत्वेऽपि तुलस्या पूजननिषेधः। तुलसीगणेशयोः संवादकीर्त्तनं। एतत्पाठादिफलश्रुतिः॥ इति।

---

## No. 1254. अमृतसागरी, वा लीलावतीविवृतिः।

Substance, country-made yellow paper, 10 × 6 inches. Folia, 68. Lines, 23 on a page. Extent, 1,607 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, new. Prose. Incorrect.

*Amṛita-ságarí* alias *Lílávatí-vivṛiti.* A commentary on the *Lílávatí* section of the *Siddhánta S'iromaṇi.* By Gañgádhara, son of Govardhana, and grandson of Divákara, of the Vastu race, an inhabitant of the town of Jambusara, which had been established by the renowned sage Yájṇavalkya. The *Siddhánta S'iromaṇi* was written by Bháskara A'chárya, son of Mahes'vara.

Beginning. ॐ नमो गणेशाय। श्रीसूर्य्याय नमः।

आदित्यं जगदुद्भवस्थितिविभुं+ +++++

ध्येयं ब्रह्म षडूर्म्मिदोषरहितं पश्यन्ति ये हृद्गतं।

भक्तानाञ्च मनोरथार्थफलदं क्लेशान्वयच्छेदकं

गीतं सश्रुतिभिः सदोदयमहं वन्दे जगद्भास्करं॥

गुरोरङ्घ्रिपद्मद्वयञ्च प्रणम्य प्रसीदन्मुखं सिन्धुरास्यं गणेशं ।
जगद्बोधरूपां मतिं विश्वमायां गिरां चेश्वरीं ब्रह्मपुत्रीं प्रसन्नां ॥
महेश्वरोऽभूच्च महेश्वरस्य प्रसादलब्धोदयबुद्धिवृद्धिः ।
तस्यात्मजो भास्करलब्धबोधः श्रीभास्कराचार्य्य इति प्रसिद्धः ॥
वेदोपवेदवेदाङ्गवेत्ता विश्वैककोविदः ।
गणितज्ञो गुणाग्रीयो गणनायां द्विजोत्तमः ॥
ब्रह्मादिर्जगदादिकालकलना पञ्चप्रकारागणिः
खेटानाञ्च सवासनाञ्च दिवि यद् गोलप्रपञ्चस्थितिः ।
यन्त्राणि द्विविधञ्च यन्त्रगणितं तेन क्रमाद्विस्तृतं
तत्सिद्धान्तशिरोमणौ तु कविना श्रीभास्करेण स्फुटं ॥
विष्णुस्वरूपं गणितं रहस्यं व्यक्तमिति द्विधा यतः + + + ।
गुरुप्रसादाभ्यसनैर्विदित्वा + + + श्रीमान् महतोऽपि मोहात् ॥
अव्यक्तवीजभूतत्वाद् गणितं वीजसञ्ज्ञितं ।
व्यक्तञ्च पाटीगणितं प्राञ्चर्गणितवित्तमाः ॥
तत्र लीलावती नाम गणकोत्तमपाटिका ।
रचिता भास्करेणान्यपाटिकोक्तस्वरूपिणी ॥
श्रीयाज्ञवल्क्यमुनिवर्य्यकृतप्रतिष्ठं जम्बूसरो नगरमस्ति सुतीर्थरम्यं ।
धीमांस्तु वस्तुकुलजोऽत्र दिवाकर + ज्ञानादिवाकर इति प्रथितो द्विजोऽभूत् ॥
श्रीगोवर्द्धनपादपद्मस्मरणेनान्तःपवित्रात्मवान्
सद्वृत्तः सुयशाः परोपकृतिकृद्दीने दयालुः कृती ।
श्रीगोवर्द्धनसञ्ज्ञितो द्विजवरः ख्यातोऽस्ति भूमण्डले-
+ + + + + + + + + + ॥
तत् सूनोरनुजो + + धीमान् लक्ष्मीधरोऽद्भुतात् ।
गङ्गाधरकृपालब्धो दयागङ्गाधराह्वयः ॥
तेन ख्यातदिवाकरात्मसुधिया विद्वत्सुखप्रीतिदा
सन्देहार्त्तिविनाशिनी गणकधीवृद्धिप्रदारभ्यते ।
श्रीगोवर्द्धननन्दनेन विमला लीलावतीपाटिका-
टीका चामृतसागरीति सरला गङ्गाधरेण स्फुटं ॥
श्रीभास्कराचार्य्य इष्टदेवताप्रणामपूर्व्वकमित्यादिः ।

**End.** लब्धं दीपोच्चमुभयतोऽपि तुल्यमेव १५६ हस्ताः १२, एवं पञ्चसप्तराशिकाद्यखिलं त्रैराशिकेन सिद्धं, स्वार्थं स्वयमेव निगदितं तथा तन्नोक्तमिति ।

Colophon. श्रीगङ्गाधरकृता लीलावतीविवृतिः समाप्ता ।

विषयः । भास्कराचार्य्यकृतसिद्धान्तशिरोमण्यन्तर्गत-लीलावत्या व्याख्यानं ।

---

## No. 1255. नाममाला ।

Substance, country-made yellow paper, 12 × 7 inches. Folia, 32. Lines, 25 on a page. Extent, 900 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose and verse. Generally correct.

*Námamálá.* A dissertation on the merits of repeating the names of Hari, Hara, &c. as a means of salvation. Author's name not known.

Beginning. यन्नामकीर्त्तनादेव सद्यः पापक्षयो भवेत् ।
तमहं संस्मरामीशं शिवं कृष्णं विमुक्तये ॥
ननु नामकीर्त्तनात् सद्यः पापक्षयप्रतिपादकमन्त्रार्थवादेतिहासपुराणोपपुराण-संहितागमादीनां कर्म्मानुष्ठानादिपराणां स्वार्थेऽपि प्रामाण्यं नास्तीति चेत्। इत्यादिः ।

End. तत्र अतिशयाधानं पूर्व्वेणैव निराकृतं । माला-करणं वारयति निरञ्जन इति निर्म्मलः ।

Colophon. इति नाममाला ।

विषयः । हरिहरादिनामकीर्त्तनात् पापक्षयप्रतिपादकवाक्यानामपि मानान्तरसंवादविसंवादयोरभावात् स्वार्थेऽपि प्रामाण्यमस्तीति मतसंस्थापनादिकं । अर्थवादविचारः । नामकीर्त्तनमाहात्म्यकथनं । हरिहरनाम्नां मोक्षसाधनज्ञानसाधनत्व-प्रदर्शनं । तेषां चतुर्व्वर्गसाधनत्वकथनञ्च । नामविशेषकीर्त्तने फलविशेष-कथनं । नाममाहात्म्यस्तोत्रकथनादिकं ।

---

## No. 1256. मन्त्रमहोदधिः ।

Substance, country-made yellow paper, 12 × 7 inches. Folia, 122. Lines, 26 on a page. Extent 3,766 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Some parts have been destroyed by worms. Prose and verse. Generally correct.

*Mantra-mahodadhi.* A compendium of the various mystic formulas and mantras used in worshipping Hindu divinities, and the routine of worship. By Mahidhara, the commentator of the White Yajur Veda. The mantras are all taken from the Tantras, the ritual is throughout Tántric, and the writer evinces a leaning for the S'ákta cult, but the mantras of Vishṇu, Gaṇes'a, Gopála, &c. are all included in the work.

Beginning. प्रणम्य लक्ष्मीनृहरिं महागणपतिं गुरुं ।
तन्त्राण्यनेकान्यालोक्य वक्ष्ये मन्त्रमहोदधिं ॥
प्रातरुत्थाय शिरसि ध्यात्वा गुरुपदाम्बुजं ।
आवश्यकं विनिर्व्वर्त्य स्नातुं यायात् सरित्तटे ॥
श्रौतेन विधिना स्नात्वा मन्त्रस्नानं समाचरेत् ।
स्मार्त्तसन्ध्यां मन्त्रसन्ध्यां कृत्वा देवं विचिन्तयेत् ।
गृहद्वारमथागत्य द्वारपूजां समारभेत् ।
द्वारमस्त्राम्बुना प्रोक्ष्य गणेशं चोर्द्ध्वतो यजेत् ॥
महालक्ष्मीं दक्षभागे वामभागे सरस्वतीं ।
पुनर्दक्षे यजेद्विघ्नं गङ्गाञ्च यमुनामपि ॥
पुनर्वामे क्षेत्रपालं ससिन्धुयमुने अपि ।
पुनर्दक्षे तु धातारं विधातारन्तु वामतः ॥ इत्यादिः ॥

End. प्रयोगानपि तत्रोक्तान् प्रकुर्य्यादिष्टसिद्धये ।
एवं यो भजते नित्यं श्रीमद्गोपालसुन्दरीं ।
सर्व्वान् कामानवाप्यान्ते सायुज्यं ब्रह्मणो ब्रजेत् ॥

Colophon. इति श्रीमहीधरविरचिते मन्त्रमहोदधौ द्वाविंशस्तरङ्गः ॥ २२ ॥ हरये नमः ।

विषयः । प्रथमतरङ्गे ।—प्रातःकृत्यादिकथनपूर्व्वकं सामान्यतो भूतशुद्ध्यादिनिरूपणं । २ तरङ्गे ।—गणेशमन्त्रनिरूपणादिकं । ३ तरङ्गे ।—कालीसुमुखीमन्त्रादिकथनं । ४ तरङ्गे ।—तारामन्त्रादिनिरूपणं । ५ तरङ्गे ।—तारामन्त्रभेदकथनं । ६ तरङ्गे ।—छिन्नमस्तामन्त्रादिकथनं । ७ तरङ्गे ।—यक्षिण्यादिमन्त्रप्रजादिनिरूपणं । ८ तरङ्गे ।—बालालघुश्यामामन्त्रादिनिरूपणं । ९ तरङ्गे ।—अन्नपूर्णामन्त्रादिकथनं । १० तरङ्गे ।—बगलामुखीमन्त्रादिनिरूपणं । शकटाभिधमहाविद्याकथनं । फलादिनिरूपणञ्च । ११ तरङ्गे ।—श्रीविद्यादिनिरूपणं । १२ तरङ्गे ।—श्रीविद्यायाः परिवारपूजनादिप्रकारकथनं । १३ तरङ्गे ।—हनूमन्मन्त्रादिकथनं । १४ तरङ्गे ।—विष्णुमन्त्रादिनिरूपणं । १५ तरङ्गे ।—सूर्य्यादिमन्त्रादिनिरूपणं । १६ तरङ्गे ।—शिवादिमन्त्रनिरूपणादिकं । १७

तरङ्गे ।—कार्त्तवीर्य्यमन्त्रादिकथनं । १८ तरङ्गे ।—कालरात्रि-चण्डिकादि-मन्त्रकथनं । १९ तरङ्गे ।—ताम्रचूड़ादिमन्त्रकथनं । २० तरङ्गे ।—यन्त्रनिरूपणं । २१ तरङ्गे ।—नित्यपूजाप्रकारादिकथनं । २२ तरङ्गे ।—गोपालसुन्दर्य्यादिपूजादिनिरूपणं । (अत्र तरङ्गसङ्ख्यावैषम्यं दृश्यते) ।

---

## No. 1257. पद्मपुराणीयसृष्टिखण्डः ।

Substance, country-made yellow paper, 13 × 7 inches. Folia, 295. Lines, 20 on a page. Extent 7,006 s'lokas. Character, Bengali. Date, Sk. 1725. Place of deposit, S'rírámpur College. Appearance, fresh. Verse. Very incorrect.

*Padma Puráṇa, Sríshṭi Khaṇḍa.* The Padma is the second of the eighteen great Puráṇas; it comprises 55,000 s'lokas, divided, according to its own statement, into five khaṇḍas or parts, each of which may be looked upon as a separate work. A sixth part, the *Kriyáyogasára* is usually added, and it is, perhaps, the most popular of all, being met with more frequently than the others (*ante* p. 113), but as it is not included in the abstracts of the different Puráṇas given in the Nárada Puráṇa, it is obvious that it originally formed no part of the Padma Puráṇa, and can only be looked upon as an apocryphal work; in fact according to native opinion this and the Brahma-vaivarta are the least trustworthy of Puráṇas. Professor Wilson has published a detailed account of the whole of the Padma Puráṇa (*Journal R. A. S.*, V. pp. 280 *et seq. Miscellaneous Essays*, I, pp. 21 *et seq.* Preface to the Vishṇu Puráṇa, pp. xxix *et seq)*; and the following is his remark on the character of the part (the first) under notice:—

"The Paushkara, or *Sr'ish'ti Khaṇḍa* consists of forty-six chapters and about 8500 stanzas. Lomaharshaṇa, the disciple of Vyása, sends his son Ugras'ravas the Súta to Naimisháran'ya, to relate the Puráṇas to S'aunaka and other R'ishis assembled at that place. At S'aunaka's request he communicates to them that Puráṇa, which, from its containing an account of the lotus (Padma), whence Brahmá appeared in order to create the world, is termed the Pádma Puráṇa. Súta, in replying, proclaims also his right by birth and profession to narrate the Puráṇas, which were in the present Kalpa imparted by Vishṇu in

the Matsya avatára to Brahmá, and by him to the gods in the first instance, and in the second to Lomaharshaṇa, by Vyása, who was a form of Brahmá. We have here also the assertion that the Puráṇas consisted originally of 100 koṫ'ís, a thousand million of stanzas, of which 400,000 were thought sufficient for the instruction of man—the rest being preserved by the gods. Súta then recapitulates all that he purposes to narrate to the R'ishis, the whole of which he says was formerly imparted by Brahmá to his will-begotten son, the patriarch Pulastya, by whom it was related at Gaṅgádwára to Prince Bhíshma; in fact, therefore, Pulastya is the person to whom this portion of the Pádma Puráṇa is properly to be ascribed."

It may be noted here that, for reasons already referred to in different parts of these "Notices," I do not subscribe to the date assigned to the different Puráṇas by the learned Professor. The fact of the extent of the whole work, 55,000 verses, being noticed by Chand in the 12th century, is of itself enough to show that the work existed long before that poet. Quotations from the work are frequently met with in works of the 9th, 10th and 11th centuries. I should add, however, that the work has been very carelessly preserved, and there are unmistakable interpolations in different parts of it.

Beginning. स्वस्थं चन्द्रावदातं करिकरमकरक्षोभसञ्जातफेनं
ब्रह्मोद्भूतं प्रसक्तैर्व्रतनियमपरैः सेवितं विप्रमुख्यैः ।
ॐकारालङ्कृतेन त्रिभुवनगुरुणा ब्रह्मणा दृष्टिपूतं
सम्भोगाभोगरम्यं जलमशुभहरं पौष्करं वः पुनातु ॥

सूतमेकान्तमासीनं व्यासशिष्यं महामतिं ।
लोमहर्षणनामा वै उग्रश्रवसभाषत ॥
ऋषीणामाश्रमांस्तात गत्वा धर्म्मान् समासतः ।
पृच्छतां विस्तराद् ब्रूहि यन्मत्तः श्रुतवानसि ॥ इत्यादिः ।

End. ततस्तु दानवा भीष्मा ऊचुः सर्व्वगुरुं वचः ।
दीक्षास्तु च महाभाग भूतः कालाग्रतःस्थितान् ॥
तथाहल्लाश्नना + ह समता + पुरोहितः ।
प्रमाणं वान्यदेवेषु कर्त्तव्यं न कदाचन ॥
एकस्य चैव + भक्तं भोक्तव्यं कर + पुटैः ।

Colophon. इत्यादिमहापुराणे पाद्मे सृष्टिखण्डः समाप्तः ।

विषयः। शरयुग्मागेन्दुशाके वृषराशौ मचीतुते।
सम्पूर्णं स्यात् पूर्व्वभाद्रपदे कृष्णतृतीयके॥

१ प्रथमाध्याये,—सूतेन सह ऋषीणां संवादः। सूतस्य जन्मादिविवरणं। पुराणावतारविवरणञ्च।

२ अ०,—प्रतिसञ्चारादिकथनप्रश्नः। अष्टाङ्गार्घ्यकथनं। ब्रह्मपुलस्त्यसंवादः। पुलस्त्यभीष्मयोः संवादः। महत्तत्त्वादिसृष्टिप्रकारकीर्त्तनं।

३ अ०,—कालपरिमाणादिकथनं। पृथ्वीकृतवराहस्तुतिः। चतुर्व्विधसृष्टिकीर्त्तनं। विशेषेण ब्राह्मणक्षत्रियादीनामुत्पत्तिकथनं। तेषामाचारादिकथनं। ब्रह्मणो भृगुपुलस्त्यप्रभृतिनवमङ्गमकमानसपुत्रसर्ज्जनादिकथनं। पुष्टितुष्टिमेधादीनां पुत्रादिकथनं। शिवस्य अष्टमूर्त्तिस्थानादिकथनं।

४, ५ अ०,—ख्यातिगर्भजाताया लक्ष्म्याः समुद्रकन्यात्वप्राप्तिविवरणं। दुर्व्वासस इन्द्रं प्रति शापदानादिवृत्तान्तः। समुद्रमन्थनविवरणं। नारदकृतविष्णुस्तोत्रं। सतीकृतदक्षयज्ञवर्णनं। सतीपुरतो दक्षस्य शिवनिन्दादिकरणं। सतीदेहत्यागः। दक्षकृतशिवस्तुतिः।

६, ७ अ०,—दक्षप्रजापतेर्वंशकथनं। वस्वादीनामुत्पत्तिकथनं। काश्यपानामुत्पत्तिकीर्त्तनादिकं। ज्येष्ठपूर्णिमाव्रतविधानादिकथनं। गर्भिण्या नियमादिकथनं। ऊनपञ्चाशन्मारुतानामुत्पत्तिः। मन्वन्तरवर्णनं।

८, ९ अ०,—पृथिवीनामनिर्व्वचनं। पृथोरुपाख्यानं। सावर्णिकमनोरुत्पत्तिकथनादिकं। यमयमुनयोरुत्पत्तिकथनं। यमस्य तपस्यादिवर्णनं। मनुवंशकीर्त्तनं। इलोपाख्यानं। सूर्य्यवंशकथनं। पितृवंशकथनं। नर्म्मदाया उत्पत्तिकथनं। श्राद्धे वर्ज्यावर्ज्यकथनं। श्राद्धविधानं। मन्वन्तरकथनं। साधारणादिश्राद्धभेदकथनं।

१०, ११ अ०,—एकोद्दिष्टश्राद्धविधिः। मृताहे पार्व्वणनिषेधः। विश्वामित्रपुत्राणामुपाख्यानं। योगिनां चक्रवाकत्वप्राप्तिकथनादिकं। पिपीलिकोपाख्यानं। विधिघर्म्मविन्दुजातपुरुषभयात् शिवस्य विष्णुभवनपलायनादिविवरणं। अर्ज्जुनस्य त्रिपुरुषजातत्वविवरणकीर्त्तनं। नरनारायणसम्भवकथनादिकं। बालिसुग्रीवप्रभृतीनां जन्मकारणादिकीर्त्तनं। गार्हपत्यादिवह्निविवरणं। ब्रह्ममुखाद् वेदप्रवृत्तिकथनं। ब्रह्मशिरश्छेदनादिकथनं।

१२ अ०,—ब्रह्मणो यज्ञानुष्ठानविवरणं। तेन सह तरूणां संवादः। पुष्करतीर्थोत्पत्तिविवरणं। ब्राह्मी दीक्षा। म्लेच्छादीनामपि पुष्करतीर्थे मरणे ब्रह्मलोकावाप्त्यादिकथनं। आश्रमधर्म्मकथनं। गोपकुमारीवेशधारिण्या कयाचित् कामिन्या सह इन्द्रस्य संवादः। गायत्रीतिसमाख्यया तया सह ब्रह्मणो विवाहकथनं।

विषयः। १३ अ०,—ब्रह्मयज्ञानुष्ठानकाले (युष्माकं कुले अवतरिष्याम्यहं) इति गोपान् प्रति विष्णोर्वरदानविवरणं। तत्र कपर्दिना सह ब्राह्मणानां संलापः। सावित्रीगृहे लक्ष्मीसतीप्रभृतीनामागमनविवरणकथनं। इन्द्रोपेन्द्रादीन् प्रति सावित्र्याः शापदानकथनं। लक्ष्मीसत्यादिकमुद्दिश्य तथा तस्याः शापदानञ्च। विष्णुकृतदुर्गाशतनामस्तोत्रकीर्त्तनं। कार्त्तिकपौर्णमास्यां ब्रह्मपूजनादिफलकथनं।

१४, १५, १६, १७ अ०,—सरस्वतीमाहात्म्यं। उत्तर-पश्चिमवाहिन्योर्गङ्गासरस्वत्योर्विशेषेण माहात्म्यकीर्त्तनं। ज्येष्ठकुण्डमाहात्म्यादिकथनं। सरस्वत्या नन्देतिनामकारणकथनं। राज्ञा सह हरिण्याः संवादः। तत्प्रति तस्याः शापदानं। व्याघ्ररूपेण तेन सह नन्दायाः सवत्सायाः संवादः।

१८ अ०,—पुष्करतीर्थस्य परिमाणादिकथनं। कालेयेतिनामधेयदानववृन्दविप्रकृतानां देवादीनां चेष्टादिवर्णनं। अगस्त्यविन्ध्ययोरुपाख्यानं। अगस्त्यस्य समुद्रपानविवरणं। तत्र स्थितैः कालेयसञ्ज्ञकैः दानवैः सार्द्धं देवानां युद्धवर्णनं। अगस्त्यकुण्डमाहात्म्यकथनं। सप्तर्षीणामाश्रमकथनं। दानदमादिप्रशंसा। अनृतक्रोधादिनिन्दनं। कात्यायनजमदग्निप्रभृतीनां विषस्तोल्यकथनं।

१९, २० अ०,—लावण्यवतीपुष्पप्रवाहयोरुपाख्यानं। तालव्रत-प्रीतिव्रत-गौरीव्रतसरस्वतीव्रतप्रभृतिनानाविधव्रतविधानं। धर्म्मनित्यमहिष्या भानुमत्याः पुरतः वशिष्ठस्य लक्ष्मीलाभोपायकथनादिकं। लीलावतीतिनामधेयाया वेश्याया उपाख्यानं। विशोकद्वादशीव्रतविधानं। गुड़धेनुक्षीरधेनुस्वर्णधेनुदानप्रभृतिव्रतकथनं। लवणाचल-धान्याचलादिदानविधानं। सौरव्रतविधानं। सकलसप्तमीसंसारसप्तमीप्रभृतिव्रतविधानञ्च।

२१, २२ अ०,—अगस्त्यस्य जन्मादिविवरणं। अनन्तफलदतृतीयाव्रतविधानं। गौरीव्रतादिविधानं। द्वारकायाः कुशस्थलीतिपूर्व्वनामकथनं। भगवता द्वैपायनरौहिणेय-कृष्णेति त्रिविधावतारप्रयोजनादिकीर्त्तनं। भीमद्वादशीविवरणं। नारायणमेव पतित्वेन लब्धुं नारीणां तपस्यादिवर्णनं। मन्मथव्रतविधानं। भार्गवविरोचनसंवादकीर्त्तनं। अङ्गारकचतुर्थीव्रतविधिः।

२३, २४, २५ अ०,—आदित्यशयनकथनं। तड़ागारामकूपादिप्रतिष्ठादौ वेद्यादिनिर्म्माणविधिः। रोहिणीचन्द्रशयनव्रतविधानं। तड़ागादिप्रतिष्ठाविधिः। अश्वत्थादिवृक्षरोपणादिविधिः। सौभाग्यशयनव्रतविधिः। वसन्तशुक्लतृतीयायां शिवाशिवयोर्विवाहोत्सवविधिकीर्त्तनं।

२६, २७ अ०,—भगवतो वामनलीलादिवर्णनं। विष्णुपदोत्पत्तिविवरणं। नागतीर्थकथनं। ब्रह्मनागगणसंवादः। सर्पभयनिराकरणोपायकथनं। दृढनासक-

दैत्येन सह देवानां युद्धवर्णनं। शिवदूत्या आविर्भावादिविवरणं। केन कर्म्मणा प्रेतत्वमुपजायते तत्कथनादिकं।

२८ अ०,—मार्कण्डेयोत्पत्तिविवरणं। अत्रिणा सह राघवस्य समागमवृत्तान्तादिकथनं। रामचन्द्रस्य स्वप्नविवरणं। स्वप्ने दृष्टस्य मृतस्य श्राद्धकर्त्तव्यता। ब्राह्मणभोजनकाले सीताया अपमानवृत्तान्तकीर्त्तनं। रामचन्द्रादीनां पुष्करतीर्थगमनकथनं। श्रीरामकृतशङ्करस्तोत्रं। मार्कण्डेयाश्रमवर्णनं।

२९, ३० अ०,—यज्ञानुष्ठानकाले ब्रह्मणा प्रेरितस्य विष्णोः सावित्रीसमीपगमनवृत्तान्तकथनं। सावित्र्या सह गौर्य्यादीनां कथोपकथनं। विष्णुकृतब्रह्मस्तुतिः। क्षेमङ्कर्य्या उत्पत्तिकथनादिकं। पञ्चपातकनाशनादिकथनं। वशिष्ठश्वेतराजसंवादः। विनीताश्वराजोपाख्यानं। ब्रह्माण्डदानविधानं। दैत्यसैन्यवर्णनं।

३१, ३२, ३३ अ०,—दानवैः सह देवानां युद्धवर्णनं। और्व्वस्य जननादिविवरणं। वज्राङ्गकृतमघवदमनकथनं। तारकासुरजन्मकीर्त्तनं। सुरतारकयोः सङ्ग्रामवर्णनं। देववृन्दकृतब्रह्मस्तोत्रं। विभावरीब्रह्मसंवादः। पार्व्वत्या उत्पत्तिकथनादिकं। नारदहिमालयसंवादः। पिनाकपाणेः समाधिभङ्गाय कुसुमशरस्य प्रयाणादिवर्णनं। रतिकृताशुतोषस्तवनादिकं। पार्व्वत्यास्तपस्यादिवर्णनं। गौरीविवाहकथनं। पार्व्वतीगात्रमलात् गणानामुत्पत्तिकथनं।

३४, ३५, ३६ अ०,—कुमारसम्भवकथनं। पितृमाहात्म्यकथनं। केदार-गङ्गासागर-ब्रह्मसरः कुरुक्षेत्र-रामेश्वरप्रभृतितीर्थकथनं। श्राद्धकालनिरूपणादिकं। सोमोत्पत्तिकथनं। ताराहरणविवरणं। राजपुत्रापराभिधेयस्य बुधस्य जन्मादिकथनं। यदुवंशकथनं।

३७ अ०,—क्रोष्टुवंशवर्णनं। मायामोहकर्त्तृकदैत्यमोहनवृत्तान्तकीर्त्तनं। मणिहरणोपाख्यानं। चार्व्वाकमतसूत्रपातः। कृष्णादीनां जन्मकथनादिकं। सङ्क्षेपेण दशावतारप्रयोजनकीर्त्तनं। शुक्रस्य तपस्यादिकथनं। इति समाप्तिः।

---

## No. 1228. कथासरित्सागरसारः।

Substance, country-made paper, 14 × 6 inches. Folia, 914. Lines 30 on a page. Extent, 27,420 s'lokas. Character, Bengali. Date, Samvat 1682. Place of deposit, S'rírámpur College. Appearance, new. Verse. Incorrect.

*Kathásaritságara* alias *Vrihatkathá-ságara*, or *Vrihatkathá*. "The Watery Ocean of Stories," a large collection of entertaining stories.

By Bhaṭṭa Somadeva. The character of this work is already well known to European scholars through the notices published by Wilson and others; and the whole of the text has been brought out, partly in Sanskrit and partly in Roman type, by the learned Professor Weber (*Abhandlungen* II to IV.); it is not necessary therefore to enter at length into its history. The headings of the stories are given below in Sanskrit. The MS. is dated Samvat 1682, and is nearly two hundred and fifty years old.

Beginning. श्रियं दिशतु वः शम्भोः श्यामः कण्ठो मनोभुवा ।
अङ्कस्थपार्व्वतीदृष्टिपाशेनेव विचेष्टितः ॥
सन्ध्यानृत्योत्सवे धारा + + + हूय विघ्नजित् ।
शीत्कारशीकरै रत्याः सत्पयन्निव पातु वः ॥
प्रणम्य वाचं निःशेषपदार्थद्योतदीपिकां ।
बृहत्कथासागरस्य सङ्ग्रहं रचयाम्यहं ॥
आद्यमत्र कथापीठं कथामुखमतः परं ।
ततो लावणको नाम तृतीयो लम्बको भवेत् ॥
नरवाहनदत्तस्य जननञ्च ततः परं ।
स्याच्चतुर्द्दारिका चाथ ततो मदनमञ्जुका ॥
ततो रत्नप्रभा नाम लम्बकः सप्तमो भवेत् ।
सूर्य्यप्रभाभिधानश्च लम्बकश्चाष्टमो भवेत् ॥
अलङ्कारवती नाम ततः शक्तियशा भवे ।
वेलालम्बकसञ्ज्ञश्च भवेदेकादशस्ततः ॥
शशाङ्कवत्यपि ततस्ततश्च मदिरावती ।
महाभिषकनामा च ततः स्यात् पञ्चलम्बकः ॥
ततः सुरतमञ्जर्य्यथ पद्मावती भवेत् ।
ततो विषमशीलाख्यो लम्बकोऽष्टादशो भवेत् ॥
यथा मूलं तथैवैतन्न मनागप्यतिक्रमः ।
ग्रन्थविस्तरसङ्क्षेपमात्रं भाषा च विद्यते ॥
औचित्यान्वयरचा च यथाशक्त्या विधीयते ।
यथा रसाभिघातेन काव्यांशस्य च योजना ॥
वैदग्ध्यख्यातिलोभाय मम नैवायमुद्यमः ।
किन्तु नानाकथाजालस्मृतिसौकार्य्यसिद्धये ॥  इत्यादिः ।

End. एवं मद्वचनोद्गतां पठति यो यो वा शृणोत्यादराद्
यश्चैतां + कथां बिभर्त्ति न चिरात् सोऽध्वस्तपापः कृतः।
सद्विद्याधरतामवाप्य नियतं लोकं मम प्राप्नुयाद्-
इत्यस्याश्च वरं तदा गिरिसुता कान्तः कथा + ददौ ॥

Colophon. इति श्रीभट्टसोमदेवविरचिते कथासरित्सागरे विषमशीललम्बके पञ्चमस्तरङ्गः ॥
आदितश्चतुर्विंश + रशतं, समाप्तश्चायं बृहत्कथासागरसङ्ग्रहः ॥
इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलनात्
पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतं।
प्रसह्य रमयन्ति ये विगतविघ्नबन्ध+यो
धुरन्दधति वैबुधीं भुवि भवप्रसादेन ते ॥०॥
श्रीसातवाहनकुलाम्बुधिपारिजातः सङ्ग्रामराज इति भूमिपतिर्बभूव।
येनावतीर्य्य विविधैर्विबुधैः श्रितेन काश्मीरमण्डलमनीयत नन्दनत्वं ॥०॥
तस्यात्मजो++शेषमहीशमौलिमाणिक्यरत्ननिकषीकृतपादपीठः।
श्रीमाननन्त इति तत्++++++ शौर्य्यैकराशिरुदपद्यत चक्रवर्त्ती ॥०॥
द्वाराग्रसीमनि च यस्य विकृत्तकण्ठः छिन्नोदरं नरपतर्लुठति स्म मूर्द्धा।
सेवागतो जितमहाहरिचक्रचारु—कीर्त्तिः शरेण परितोषमिवैत्य राज्ञः ॥
सोऽथ त्रिगर्त्ताधिपतेस्तनूजां राजेन्द्++वहति स्म देवीं।
तमोपहां सूर्य्यव+ प्रजानां विभातसन्ध्यामिव विश्ववन्द्यां ॥
(आम्नायैरिव नानादेशसमुद्गतविप्रशतसेव्यैः,
श+भिरिव रत्नभ+++ति श्रतां भ्रष्टतामपि शरण्यैः।
कल्पद्ग+रिवान्वाहमाश्रेयगतार्त्तिहारिभिरुदारैः,
देव्या यथा विरचितैः काश्मीरमण्डितमठप्रवरैः।)
यत्रि+र्मितान्यमलतोयहृद्वितस्ता विस्तीर्णतीरभुवि सौधसुधासितानि।
व्योमापगा परिगतान्तहिमाद्रिशृङ्ग++++++सुतरां सुरमन्दिराणि ॥०॥
द+रसङ्ख्यमणिहेममहार्घ्यहार—कृष्णाजिनद्रविणपर्व्वतगोसहस्रः।
विश्वम्भरा रचना+पित+++विश्वं सदा भगवती किल या बिभर्त्ति ॥
क्ष्मामण्डलैकतिलकोऽप्यनली++श—यस्याननाम्बुतमपो गुणि++++।
++शिवोऽपि शिवावतारः श्रीमान् सुतः कलसदेव इति क्षितीशः ॥
उर्व्वीभृतो नमयितुं निखिलानुदग्रान् या+चमश्वजलधीनपि सप्त धीरः।
हृष्टः सुरैरभिनवः कलसोद्भवो यः श्रीहर्षदेव इति नृपवरः स यस्याः ॥
तस्याः सदैव गिरिशार्चनहोमकर्म्म—ध्यानप्रधानविधिबद्धसमुद्यमायाः।

शास्त्रेषु नित्यविहितश्रवणश्रमाया देव्याः क्षणं कमपि चित्तविनोदहेतोः ॥
नानाकथामृतमयस्य बृहत्कथायाः सारस्य सज्जनमनोऽम्बुधिपूर्णचन्द्रः।
सोमेन विप्रवरभूरिगुणाभिरामरामात्मजेन विहितः खलु सङ्ग्रहोऽयं ॥
(प्रविततनरभङ्गिकथासरित्सारा + X + विरचितोऽयं।)
सोमेनामलरुचिना हृदयानन्दाय भवतु सताम्॥

संवत् ॥ १६८२ ॥ भाद्र २४ ॥

विषयः। १ पीठलम्बकस्य प्रथमतरङ्गे,—अनुक्रमणिका। कैलासगिरिवर्णनादिप्रस्तावः। २ त०,—वररुचिभूतपुष्पदन्तस्य काणभूतिप्राप्तिविवरणं। वर्षाचार्य्यकथा च। ३ त०,—काणभूतिं प्रति वररुचिवाक्यं। ४ त०,—वररुचेरात्मपत्नीप्राप्त्यादि-विवरणं। ५ त०,—योगानन्दशकटारयोरुपाख्यानादिकं। ६ त०,—गुणाढ्यस्य विन्ध्यवासिनीस्थानगमनादिवृत्तान्तः। ७ त०,—सर्व्ववर्म्माणं प्रति कार्त्तिकेय-प्रसादकथनं। व्याकरणोत्पत्त्यादिप्रश्नः। ८ त०,—गुणाढ्यस्य काणभूतिप्रमुखात् कथाश्रवणपुरःसरं पैशाचभाषया ग्रन्थशतरचनादिप्रस्तावः। इति पीठलम्बकः समाप्तः ॥ १ ॥

२ कथामुखलम्बकस्य प्रथमतरङ्गे,—ग्रन्थप्रशंसानन्तरं विद्याधरकथाप्रकाशानुक्रम-णिकादिवर्णनं। २ त०,—सहस्रानीकस्य मृगावत्यन्वेषणार्थं गमनादिप्रस्ता-वना। ३ त०,—तस्य पुनः उदयनाभिधेयपुत्रराज्याभिषेकविवरणं। ४ त०,—वासवदत्ताविवाहार्थं वत्सराजानयनाय महागजप्रेरणादिविवरणं। ५ त०,—वत्सराजस्य बन्धनं। तं प्रति वासवदत्ताया अनुरागादिवर्णनञ्च। ६ त०,—तया सह वत्सेशस्य विवाहादिवर्णनादिकं। इति कथामुखलम्बकः समाप्तः ॥ २ ॥

३ लावणकलम्बकस्य प्रथमतरङ्गे,—मगधेशदुहित्रा पद्मावत्या सह वत्सराजस्य विवाहार्थं यौगन्धरायणरुमण्वतोर्वासवदत्ताकृत्रिमदाहमन्त्रणादिकीर्त्तनं। २ त०,—पद्मावतीं भर्त्तुर्बद्धमतां निर्श्चित्य वासवदत्तायाः प्रकृताग्निप्रवेशकरणनिश्चयादि-विवरणं। ३ त०,—ऊर्व्वश्या सह पुरूरवसः सङ्गमनविवरणं। विहितसेनस्य राज्ञ उपाख्यानं। पाटलिपुत्रस्यधर्म्मगुप्तादीनामुपाख्यानं। ४ त०,—वत्सराजस्य कौशाम्बीप्रवेशविवरणं। गोपालकसंवादः। आदित्यसेनादीनामुपाख्यानं। विदू-षकस्य विवाहः। ५ त०,—देवदासादीनामुपाख्यानं। वत्सराजदिग्विजयवर्णनं। ६ त०,—अग्निदत्तपुत्त्रादीनामुपाख्यानं। कार्त्तिकेयजन्मविवरणं। सुन्दरको-पाख्यानं। इति लावणकलम्बकः समाप्तः ॥ ३ ॥

४ नरवाहनदत्तजननलम्बकस्य प्रथमतरङ्गे,—वत्सराजस्य चक्रवर्त्तित्वेन पृथिव्युप-भोगवर्णनादिकं। तेन सह नारदस्य संवादः। २ त०,—जीमूतवाहनस्य उपा-

विषयः। ख्यानं। वासवदत्ताया गर्भवृत्तान्तः। ३ त०,—वासवदत्तायाः स्वप्नवृत्तान्तः। विक्रमचण्डाख्यकाशीराजस्य उपाख्यानं। नरवाहनस्य जन्मादिविवरणं।

इति नरवाहनदत्तजननलम्बकः समाप्तः।

५ चतुर्द्दारिकालम्बकस्य प्रथमतरङ्गे,—कनकरेखाया उपाख्यानं। बालकभद्रकस्य उपाख्यानं। २ त०,—राजकन्यालाभार्थं वर्द्धमानपुरात् कनकपुरीं प्रति प्रस्थितस्य सत्यव्रतस्य उपाख्यानं। गोविन्दस्वामिन उपाख्यानं। नूपुरानयनार्थमशोकदत्तस्य श्मशानगमनादिविवरणं। ३ त०,—अर्णवमार्गेण गच्छतोः सत्यव्रतशक्तिदेवयोरावर्त्तमध्ये प्रवहणनिमज्जनाद् वृत्तमेकमन्वामाद्य लब्धजीवितयोः पश्चिमाहाय्येन अभीष्टस्थानगमनादिवृत्तान्तकथनं। इति चतुर्द्दारिकालम्बकः समाप्तः।

६ मदनकञ्चुकालम्बकस्य प्रथमतरङ्गे,—नरवाहनदत्तस्य विद्याभ्यासादिकथनं। तक्षशिलाधिपस्य कलिङ्गदत्तस्य उपाख्यानं। २ त०,—चित्रकूटाधिपतेः सुषेणस्य उपाख्यानं। कलिङ्गसेनाया उपाख्यानं। ३ त०,—कलिङ्गसेनासमीपे सोमप्रभाया निजपूर्व्वजन्मवृत्तान्तकीर्त्तनं। ४ त०,—कलिङ्गसेनां पश्यतो मदनवेगाख्यविद्याधरकिशोरस्य चेष्टावर्णनादिकं। स्वभर्त्तुः प्रवयस्तया दुःखितायाः सोमप्रभायाः प्रमुखात् वत्सराजगुणान् आकर्ण्य कलिङ्गसेनायास्तं प्रति अनुरागादिकीर्त्तनं। विक्रमादित्योपाख्यानं। ५ त०,—पित्रा अन्यस्मै प्रदेयात्मानं निश्चित्य तस्याः सोमप्रभया सह कौशाम्बीगमनोपायादिचिन्तनं। उषानिरुद्धयोरुपाख्यानं। ६ त०,—यौगन्धरायणोद्योगेन तया सह वत्सराजस्य विवाहप्रस्तावादिकथनं। ७ त०,—वासवदत्तापद्मावत्यादीनां वत्सराजेन समं संलापः। गोकर्णाधिपस्य श्रुतसेनस्य उपाख्यानं। ८ त०,—निशीथसमये कलिङ्गसेनासमीपे उपस्थितस्य वत्सेशस्य तया सार्द्धं कथोपकथनादिकं। इन्द्रदत्तस्य उपाख्यानं। नरवाहनदत्तस्य यौवराज्याभिषेकः। मदनकञ्चुकाया रूपं निरीक्ष्य तस्य चेष्टादिवर्णनं। तया सह तस्य परिणयवर्णनञ्च। इति मदनकञ्चुकालम्बकः समाप्तः॥

७ रत्नप्रभालम्बकस्य प्रथमतरङ्गे,—एकदा उपवनं गतस्य नरवाहनस्य समीपे अशोकपादपमूलस्थिताया अदृष्टचरायाः कामिन्या निजपरिचयदानविवरणं। हेमप्रभनामकविद्याधरस्य उपाख्यानं। विक्रमतुङ्गराजस्य उपाख्यानं। रत्नप्रभया सह नरवाहनस्य विवाहः। २ त०,—रत्नकूटद्वीपाधिपतेरुपाख्यानं। ३ त०,—उज्जयिनीस्थवणिक्कुमारस्य उपाख्यानं। ४ त०,—पाटलिपुत्रस्थविक्रमादित्यस्य उपाख्यानादिकं। ५ त०,—वर्द्धमानपुरस्थवीरभुजन्टपस्य उपाख्यानादिकथनं। ६ त०,—यौगन्धरायणपुत्रेण मरुभूतिना सह गोमुखनामधेयस्य वत्सराजमन्त्रिणो वाक्कलहवर्णनं। प्रतिष्ठानपुरस्थस्य तपोदत्तनामकद्विजस्य उपाख्यानादिकथनं।

विषयः। ७ त०,—चिरायुरिति नामकस्य राज्ञ उपाख्यानादिकीर्त्तनं। ८ त०,—मृगयार्थं वनप्रविष्टेन नरवाहनदत्तेन सह तापस्याः संवादः। कर्पूरिकाया उपाख्यानं। ९ त०,—गोमुखसमीपे नरवाहनदत्तस्य स्वप्नवृत्तान्तकथनं। स्वप्नदृष्टदेशमुद्दिश्य चलितस्य गोमुखमात्रसहायस्य तस्य पुरतः पथिककर्तृकं काञ्चीपुरस्थबाहुबलनामकभूपालस्य उपाख्यानादिकीर्त्तनं। कर्पूरिकापरिणयानन्तरं पुनस्तस्य स्वदेशागमनविवरणं। इति रत्नप्रभालम्बकः समाप्तः॥

८ सूर्य्यप्रभालम्बकस्य प्रथमतरङ्गे,—वज्रप्रभनामकविद्याधरस्य उपाख्यानादिकथनं। चीनदेशाधिपतिपौरवनामकनृपतेः कन्याया वीरभटादिराजकुमारीणाञ्च उपाख्यानं। २ त०,—चन्द्रप्रभस्य राज्ञः पुरतो भूमिं विदार्य्य मयासुरस्य उद्गमनविवरणं। सूर्य्यप्रभ-सुनीथप्रभृतीनामुपाख्यानं। ३ त०,—सूर्य्यप्रभाय प्रह्लादस्य यामिनीनामिकाकन्यादानविवरणं। ४ त०,—श्रुतशर्म्माणमभियोधयितुं मयेन सह सूर्य्यप्रभस्य प्रयाणवर्णनं। ५ त०,—तयोर्युद्धविवरणं। ६ त०,—उज्जयनीस्थमहासेनस्य राज्ञ उपाख्यानादिकीर्त्तनं। ७ त०,—महादेवाज्ञया तयोः सन्धिकरणपुरःसरं सूर्य्यप्रभश्रुतशर्म्मणोः स्वस्थानगमनादिविवरणं। सूर्य्यप्रभस्य कामचूड़ामणितनयापाणिग्रहणादिवृत्तान्तकथनं। इति सूर्य्यप्रभालम्बकः समाप्तः॥

९ अलङ्कारवतीलम्बकस्य प्रथमतरङ्गे,—महारण्यमध्ये नरवाहनदत्तस्य दिव्यवीणारवोन्मिश्रसङ्गीतश्रवणविवरणं। श्रीसुन्दरपुरवासिनोऽलङ्कारशीलनामकविद्याधरस्य उपाख्यानं। अलङ्कारवत्या सह नरवाहनस्य विवाहः। २ त०,—पितुरनुज्ञया वसन्तकेन समञ्चालङ्कारवत्या तस्य श्वशुरालयगमनादिविवरणं। ३ त०,—लक्षपुरस्थस्य लक्षदत्तनामकस्य नृपस्य उपाख्यानं। विक्रमपुरस्थविक्रमतुङ्गनरपतेरुपाख्यानादिकथनं। ४ त०,—नारिकेलद्वीपवासिनां रूपसिद्धिप्रमाणसिद्धिप्रभृतीनामुपाख्यानं। ५ त०,—कनकपुराधिपतेरुपाख्यानादिकं। ६ त०,—कमलपुराधिवासिचन्द्रस्वामिद्विजस्य उपाख्यानं। सुरपुराधिनाथस्य शूरसेनस्य उपाख्यानादिकथनं। इति अलङ्कारवतीलम्बकः समाप्तः॥

१० शक्तियशोलम्बकस्य प्रथमतरङ्गे,—उदयनराजनामाङ्कितरत्नकटकापहारवृत्तान्तकथनं। पाटलिपुत्रस्थशुभदत्तनामकवाहकस्य उपाख्यानं। चित्रकूटनगरस्थरत्नवर्म्मनामकधनपतेरुपाख्यानं। २ त०,—प्रतिष्ठाननगराधिपतेः विक्रमसिंहस्य उपाख्यानं। बलवर्म्मण उपाख्यानादिकीर्त्तनं। ३ त०,—नरवाहनस्य अकस्माद् विद्याधरीगणदर्शनविवरणं। काञ्चनपुरीमहेन्द्रस्य सुमनस उपाख्यानादिकथनं। ४ त०,—शूरवर्म्मण उपाख्यानं। पिङ्गलनामकसिंहस्य उपाख्यानादिकथनं। ५ त०,—वाणिजकपुत्रस्य मुग्धबुद्धेरुपाख्यानं। लघुपातीतिनामककाकस्य उपा-

विषयः। ख्यानं। अजागरस्य उपाख्यानादिकथनञ्च। ६ त०,—काकराजस्य मन्त्रिणाम् उड्डि-व्याड्डिप्रभृतीनामुपाख्यानं। ७ त०,—यशोधरलक्ष्मीधरनामकयोः यमजयोः सहोदरयोरुपाख्यानं। ८ त०,—देवशर्म्मण उपाख्यानं। घट-कर्पटनामकयोश्चौरयोरुपाख्यानादिकं। ९ त०,—पित्रा निराकृतस्य सभार्य्यस्य कस्यचिद् वणिज उपाख्यानं। वज्रवेगाभिधानविद्याधरस्य उपाख्यानादिकथनं। १० त०,—काश्मीरीयविजयक्षेत्रस्थस्य परिव्राजकस्य उपाख्यानं। दक्षिणापथस्थस्य पृथ्वीपतेरुपाख्यानं। क्षेमप्रभाप्रव्राजिकयोरुपाख्यानं। इति शक्तियशोलम्बकः समाप्तः॥

११ वेलालम्बकस्य प्रथमतरङ्गे,—रुचिरदेव-पोतकयोरुपाख्यानं। चन्द्रसारस्य उपाख्यानं। इति वेलालम्बकः समाप्तः॥

१२ शशाङ्कवतीलम्बकस्य प्रथमतरङ्गे,—नरवाहनदत्तस्य अद्भुतस्वप्नदर्शनवृत्तान्तकथनं। कान्यकुब्जस्थशूरदत्तनामकद्विजतनयस्य उपाख्यान। ललितलोचनया सह नरवाहनस्य विवाहः। २ त०,—अयोध्याधिपस्य मृगाङ्कदत्तस्य उपाख्यानं। ३ त०,—विसूचिकारोगाक्रान्तस्य अमरदत्तस्य पुत्रकृतोऽयमभिचार इति मन्यमानस्य निजतनयमृगाङ्कदत्तनिर्व्वासनादिविवरणं। निर्व्वासितस्य मृगाङ्कदत्तस्य शशाङ्कवतीं प्रति अनुरागादिवर्णनञ्च। ४ त०,—शशाङ्कदत्तस्य जलमानुषहृतश्रावरभूपालोद्धरणं। तत्समीपे मयूररूपस्य भीमपराक्रमाभिधानस्य मन्त्रिणो निजवृत्तान्तकीर्त्तनं। कनकमञ्जर्य्या उपाख्यानादिकथनं। ५ त०,—तत्पुरतो गुणाकरस्य निजवृत्तान्तकथनं। विन्ध्यपर्व्वतस्थवराहस्य उपाख्यानादिकं। पाञ्चालदेशस्थितस्य देवभूतिद्विजस्य उपाख्यानं। केदारगिरिस्थस्य शुभनयमुनेरुपाख्यानादिकञ्च। ६ त०,—त्रिगर्त्तनगरीस्थस्य द्विजकिशोरस्य उपाख्यानं। भूनन्दस्य भूपतेरुपाख्यानं। पद्मिष्ठाया उपाख्यानं। वेतालसाधकस्य उपाख्यानं। श्रीदर्शनस्य अनङ्गमञ्जरीपरिणयादिविवरणं। ७ त०,—मृगाङ्कदत्तस्य स्वभृत्येन गजरूपधारिणा शक्तिना सह साक्षात्कारादिविवरणं। अयोध्यापतेः श्रुतधरस्य उपाख्यानं। भीमभटेन सह मृगाङ्कस्य मित्रतादिकथनं। ८ त०,—तत्समीपे विक्रमकेशरिणो निजवृत्तान्तवर्णनं। गोदावरीतीरस्थदेशाधिपतेः विक्रमसेनस्य शान्तशीलाख्यभिक्षूपदेशेन वेतालानयनादिविवरणं। अत्र, १ प्रथमवेताले,—वाराणसीराजतनयस्य वज्रमुकुटस्य उपाख्यानं। ९ त०, २ वेताले,—मन्दारवत्या उपाख्यानं। १० त०, ३ वेताले,—पाटलिपुत्त्रस्थविक्रमकेशरिण उपाख्यानं। ११ त०, ४ वेताले,—शूद्रकनृपतेरुपाख्यानं। १२ त०, ५ वेताले,—सोमप्रभाया उपाख्यानं। १३ त०, ६ वेताले,—मदनसुन्दर्य्या उपाख्यानं। १४ त०, ७ वेताले,—सत्त्वशीलस्य उपाख्यानं। १५ त०, ८ वेताले,—विष्णुस्वामिपुत्राणामुपाख्यानं। १६

विषयः। त०, ९ वेताले,—वीरदेवन्टपतेरुपाख्यानं। १७ त०, १० वेताले,—मदनसेनाया उपाख्यानं। १८ त०, ११ वेताले,—धर्म्मध्वजभूपालस्य उपाख्यानं। १९ त०, १२ वेताले,—अङ्गदेशाधिपस्य यशःकेतोरुपाख्यानं। २० त०, १३ वेताले,—विद्याधरकर्तृकहरिस्वामिकामिनीहरणोपाख्यानं। २१ त०, १४ वेताले,—रत्नदत्तसुताया रत्नावल्या उपाख्यानं। २२ त०, १५ वेताले,—यशःकेतुतनयायाः शशिप्रभाया उपाख्यानं। २३ त०, १६ वेताले,—जीमूतवाहनस्य उपाख्यानं। २४ त०, १७ वेताले,—उन्मादिन्या उपाख्यानं। २५ त०, १८ वेताले,—चन्द्रस्वामिन उपाख्यानं। २६ त०, १९ वेताले,—धनवत्या उपाख्यानं। २७ त०, २० वेताले,—चित्रकूटाधिपस्य चन्द्रलोकस्य उपाख्यानं। २८ त०, २१ वेताले,—अनङ्गमञ्जर्य्या उपाख्यानं। २९ त०, २२ वेताले,—कुसुमपुरस्थविष्णुस्वामिकुमाराणामुपाख्यानं। ३० त०, २३ वेताले,—शोभावतीनगरीस्थयज्ञसोमकुमारस्य वेदसोमस्य उपाख्यानं। ३१ त०, २४ वेताले,—चन्द्रवतीलावण्यवत्योरुपाख्यानं। ३२ त०, २५ वेताले,—विक्रमसेनस्य सन्यासिशिरश्छेदनादिविवरणं। ३३ त०,—न्टगदत्तेन सह श्रुतशीलद्विजस्य कथोपकथनादिकं। गणाधिपप्रसादेन निद्रासमये न्टगाङ्कस्य शशाङ्कवतीलाभोपायादिपरिज्ञानविवरणं। ३४ त०,—तत्समीपे व्याघ्रसेनस्य निजवृत्तान्तकथनादिकं। ३५ त०,—न्टगाङ्कस्य उज्जयिनीप्रवेशविवरणं। उज्जयिनीपतेः कर्म्मसेनस्य समीपे तत्प्रेरितदूतप्रेरणादिकञ्च। ३६ त०,—शशाङ्कवतीपरिणयादिविवरणं। इति शशाङ्कवतीलम्बकः समाप्तः॥

१३ मदिरावतीलम्बकस्य प्रथमतरङ्गे,—मदनकञ्चुकाभिलाषव्याकुलस्य नरवाहनदत्तस्य मलयाचलपरिभ्रमणादिविवरणं। तत्र ब्राह्मणकुमारयोरुपाख्यानं।
इति मदिरावतीलम्बकः समाप्तः॥

१४ पञ्चलम्बकस्य प्रथमतरङ्गे,—अङ्गिरस उपाख्यानादिकं। नरवाहनस्य गन्धर्व्वनगरप्रयाणादिकथनं। २ त०,—वीणादत्ताभिधानगन्धर्व्वकर्तृकं कूपपतितनरवाहनदत्तोद्धरणं। गन्धर्व्वदत्ताया उपाख्यानं। तया सह नरवाहनस्य विवाहादिवर्णनं। ३ त०,—ऋष्यमूकगिरिस्थितस्य नरवाहनस्य समीपे प्रभावत्या आगमनादिविवरणं। तत्र विद्याधरसुन्दर्य्योरागमनवृत्तान्तकथनं। नरवाहनस्य विद्याप्राप्तिः। सुलोचनापरिणयानन्तरं तस्य पुनः चक्रवर्त्तित्वलाभविवरणं। ४ त०,—नागस्वामिन उपाख्यानादिकथनं। इति पञ्चलम्बकः समाप्तः॥

१५ महाभिषेकलम्बकस्य प्रथमतरङ्गे,—विद्याधरमात्रसहायस्य नरवाहनस्य वामदेवमुनेराश्रमगमनादिविवरणं। २ त०,—नरवाहनस्य कनकवत्यादिपाणिग्रहणविवरणं। ऋषभपर्व्वते तस्य महाभिषेकविवरणं। वासवदत्ता-वत्सेश-यौगन्धरायणप्रभृ-

विषयः। तीर्नां तत्र गमनादिवृत्तान्तकथनं। इति महाभिषेकलम्बकः समाप्तः॥

१६ सुरतमञ्जरीलम्बकस्य प्रथमतरङ्गे,—वसन्तकाले नरवाहनस्य मन्दाकिनीतीर-परिभ्रमणविवरणं। शूरसेनराजपत्न्याः सुषेणाया उपाख्यानं। २ त०,—सुरत-मञ्जर्य्या उपाख्यानादिकथनं। ३ त०,—नरवाहनं प्रति कश्यपमुनेरुपदेशदानं। चन्द्रालोक्यनामकस्य शिवराजस्य उपाख्यानं। इति सुरतमञ्जरीलम्बकः समाप्तः॥

१७ पद्मावतीलम्बकस्य प्रथमतरङ्गे,—सार्द्धं स्त्रीभिः कश्यपाश्रममधिवसतो नरवाहनस्य मदनकञ्चुकाविरहखिन्नस्य पुरतो मुनीनां विविधोपन्यासकथनादिकं। बुधदत्तस्य वाराणसीपतेरुपाख्यानं। २ त०,—विद्युत्प्रभनामकस्य दैत्येन्द्रस्य उपाख्यानादि-कथनं। ३ त०,—विद्युद्ध्वजेन सह देवानां युद्धवृत्तान्तकथनं। गन्धर्व्वराजकुमार्य्याः पद्मावत्या उपाख्यानकथनादिकं। ४ त०,—पद्मावत्या विरहवर्णनादिकं। सख्या सह तस्याश्चन्द्रपुरगमनादिविवरणं। पद्मावत्याः स्वप्नदर्शनादिवृत्तान्तकथनं। ५ त०,—शिवमर्चयन्त्यास्तस्या दैववाणीश्रवणादिविवरणं। मेरुध्वजपुत्रयोः मुक्ता-फलध्वजमलयध्वजयोरुपाख्यानं। ६ त०,—तयोः पद्मावतीस्वयम्प्रभाभ्यां सह विवाहवर्णनं। इति पद्मावतीलम्बकः समाप्तः॥

१८ विषमशीललम्बकस्य प्रथमतरङ्गे,—अवन्तिदेशाधिपस्य महेन्द्रादित्यस्य उपाख्याना-दिकथनं। २ त०,—दुन्दुभिनामकयक्षराजदुहितुर्मदनमञ्जर्य्या उपाख्यानं। टि-ण्टाकरालोपाख्यानादिकं। ३ त०,—उज्जयिनीनाथस्य विक्रमादित्यस्य सिंहले-श्वरकन्यापरिणयादिविवरणं। तस्य पुनः मलयवती-चन्द्रावत्यादिपाणिग्रहणवर्ण-नञ्च। ४ त०,—विक्रमादित्यसमीपे राज्ञा अनङ्गवत्याः कार्पटिकोपाख्यानकथ-नं। कटाहद्वीपाधिपतेरश्वत्थनामकस्य नृपस्य उपाख्यानादिकथनं। विषमशीलो-पाख्यानं। ५ त०,—विक्रमादित्यसमीपे कस्यचित् मृतभार्य्याजीवनप्राप्तिविवरण-कथनं। कलिङ्गाधिपतेरुपाख्यानं। नरवाहनेन सह मदनकञ्चुकासमागमविव-रणञ्च। कविपरिचयः। समाप्तिः॥

---

## No. 1259. आदिकाण्डमनोहरा।

Substance, country-made yellow paper, 16 × 4½ inches. Folia, 25. Lines, 9 on a page. Extent, 900 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Generally correct.

*A'dikáṇḍa-manohará.* A commentary on the first book of Válmíki's Rámáyaṇa. By Lokanátha Chakravartí. The most approved commen-

tary is that by Nílakaṇṭha, and an edition of it is now in course of publication by Hemachandra Bandyapádhyáya.

Beginning. नत्वा रघूत्तममयं परमं महस्तत्क्लेशबन्धुनिचयान्धतमोनुनोदं ।
श्रीलोकनाथबुध एष मनोहराख्यां रामायणस्य विदुषां प्रमुदे तनोति ॥
आस्ते यदा विमलबोधसुबोधटीका स-ज्ञतज्ञरचिता च मनोज्ञरूपा ।
अत्रापि सारपरकस्य विमत्सरस्य श्रीलोकनाथरचितैव मनो विधत्ते ॥
प्रतिकल्पं श्रीरामायणपुराणेतिहास+ + +मनोनैर्मल्यद्वारा श्रवणद्वारा मननादिद्वारा वा तत्त्वज्ञानोपपादकाः सन्त्येव यद्यपि, तथापि तास्तपोविद्याविमर्षशीलिनो भगवतः कस्यापि स्वकर्तृत्वेन यशोऽर्पयन्त्यः प्रतिकल्पं विलसन्तीति अस्मिन् कल्पे अखिलभुवनभवनानेकचित्रनिर्म्माणचतुरेण ब्रह्मणा तदर्थे+पि ताभिस्ताभिश्च भगवान् वाल्मीकिरेव यशोभागीकृतः, तत्र काण्डसप्तकश्रीरामायणकर्त्ता वाल्मीकिस्तत्र प्रवृत्त्यवधिकबालचरितवर्णन एव आदिकाण्डस्य प्रवृत्तिः, तत्र सर्गाश्चतुःषष्टिरेव वृत्तान्ताः, द्व्यशीतिरिति अस्मदङ्कतोऽपि वृत्तान्तानुक्रमेणैव, तत्र भगवतो वाल्मीकस्य करतलायितभुवनतदाश्रयवृत्तान्तस्य यद्युपदेशापेक्षापि नापेक्षिता, तथापि विनोपदेशं तत्नयुगस्य अवैदिकत्वेन श्रीमद्भगवन्नारदोपदेशस्यापि वृत्तत्वेन प्रथमं भगवता नारदेन सप्तकाण्डार्थ उपदिष्ट इति । प्रथमसर्गे स एव प्रस्तूयते भगवता वाल्मीकेन । तत्र,—

"नमस्तस्मै मुनीन्द्राय श्रीयुताय तपस्विने ।
शान्ताय वीतरागाय वाल्मीकाय नमो नमः ॥"

इति प्रथमतो विमलबोधाः सम्प्रदायविरुद्धमपि पठन्ति, व्याचक्षते च इत्यादिः ।

End. श्रितनरो विनीततरः ॥ १४ ॥ देवान् यौवराज्ये अभिषेचनं याचन्त प्रार्थयन्ते।

Colophon. इति लोकनाथचक्रवर्त्तिकृतायामादिकाण्डमनोहरायां रामाभिषेकव्यवसायः ।

विषयः । वाल्मीकिकृतरामायणादिकाण्डस्य व्याख्यानं ।

---

## No. 1260. अयोध्याकाण्डमनोहरा ।

Substance, country-made yellow paper, 16 × 4½ inches. Folia, 48. Lines, 10 on a page. Extent, 1,909 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Generally correct.

*Ayodhyákáṇḍa-manohará.* The second book of the work noticed in the preceding No. 1259.

Beginning. श्रीरामो जयति । अञ्जलिमालाः अञ्जलिश्रेणीः । प्रतिगृह्य दर्शनेन स्वीकृत्य ॥ १ ॥

End. व्यतिक्रमादिति अड़ागमाभाव आर्षः । व्यत्यक्रामदिति वा पाठः ॥ ६ ॥

Colophon. इति श्रीलोकनाथचक्रवर्त्तिकृतायाम् अयोध्याकाण्डमनोहरायां नन्दिग्राम-निवासः । अयोध्याकाण्डं समाप्तं ॥

विषयः । वाल्मीकिकृतरामायणायोध्याकाण्डस्य व्याख्यानं ।

---

## No. 1261. आरण्यकाण्डमनोहरा ।

Substance, country-made yellow paper, 16 × 4½ inches. Folia, 43. Lines, 9 on a page. Extent, 1,644 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Incorrect.

*Áranyakáṇḍa-manohará.* The third book of the work noticed under No. 1259.

Beginning. ওঁ नमो रामाय । तपोवनं तपोवने वा पाठः ॥ १ ॥ तापसो वानप्रस्थ आश्रमो येषां ते, राममाश्रित्य अवलम्ब्य दृष्ट्वा इत्यर्थः । इत्यादिः ।

End. आसनानां स्वस्तिकपद्मादीनां, नियमः नियमासनं तत्रैव पूजाकाले अर्पितं प्राप्तं सुखमारम्भो यैः, न पुनरनियतासनैरित्यर्थः ।

Colophon. इत्यारण्यकाण्डस्य श्रीलोकनाथचक्रवर्त्तिकृता मनोहरा समाप्ता ।

विषयः । वाल्मीकिकृतरामायणारण्यकाण्डस्य व्याख्यानं ।

---

## No. 1262. किष्किन्ध्याकाण्डमनोहरा ।

Substance, country-made yellow paper, 16 × 4½ inches. Folia, 48. Lines, 10 on a page. Extent, 1,665 s'lokas. Character, Bengal. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. .Prose. Incorrect.

*Kishkindhyákáṇḍa-manohará.* The fourth book of the work noticed under No. 1259.

Beginning. नत्वा रघूत्तममयं परमं महस्तत्क्लेशवन्धुनिचयान्धतमोनुनोदं ।
श्रीलोकनाथबुध एष मनोहराख्यां रामायणस्य विदुषां प्रमुदे तनोति ॥

किष्किन्ध्याकाण्डपदानां व्याख्यानमघुनादरात् ।
कलयन्तु बुधाः काममुत्साय्य परमत्सरं ॥
तत्र किष्किन्ध्याशब्दो निर्यकारः सयकारश्च, मूर्द्धन्यमध्यमः । इत्यादिः ।

End. प्रवदन्तमङ्गदं, तथेत्यब्रुवन् सचान्वितः सत्वरं जगाम इत्यन्वयः ॥ १४ ॥ पितृराजः, धर्म्मराजः ॥ १५ ॥

Colophon. इति श्रीलोकनाथचक्रवर्त्तिकृता किष्किन्ध्याकाण्डमनोहरा समाप्ता ।

विषयः । वाल्मीकिकृतरामायणकिष्किन्ध्याकाण्डस्य व्याख्यानं ।

---

## No. 1263. पद्मपुराणीयपातालखण्डः ।

Substance, country-made yellow paper, 7 × 5 inches. Folia, 165. Lines, 31 on a page. Extent, 5,115 s'lokas Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, new. Verse. Generally correct.

*Pátála khanda* of the Padma Purána. This is the fourth part of the second great Purána by Vyása. It comprises nine thousand slokas, divided into one hundred and two chapters. (*Ante*, p. 247). Its principal subject is a new and very diffuse version of the Rámáyana. Professor Wilson has given a full analysis of this work, (*Essays* I, pp. 45ff.) and to it I must refer the reader for information on the subject. The contents of the different chapters have been detailed below in Sanskrit.

Beginning. कदाचिन् नैमिषारण्ये सूतं परमकोविदं ।
कोविदाः सर्व्वधर्म्मेषु सर्व्वयज्ञेषु कोविदाः ॥
श्रुतिस्मृतिपुराणज्ञाः सदाचारपरायणाः ।
अनूचानाः सदस्याश्च सर्व्वदा धर्म्मवादिनः ॥
केचित् स्वाध्यायनिरताः केचिद्वेदार्थतत्पराः ।
केचिदध्यात्मतत्त्वज्ञाः केचिद् योगविशारदाः ॥
तर्केषु निपुणाः केचिन् मीमांसायां विचक्षणाः ।
वेदान्तज्ञानसिद्धान्ताः सोऽहमस्मि जपे रताः ॥
वेदाभ्यासेऽतिनिपुणास्तपसा सूर्य्यवर्च्चसः ।
त्रिकालज्ञा महात्मानः स्वधर्म्मनिरताः सदा ॥

चतुःषष्टिकलाभिज्ञास्तेजसा सूर्य्यवर्चसा ।
त्रिकालध्याननिरताः सर्व्वशास्त्रविशारदाः ॥
हिमवन्निलयाः केचिन्महेन्द्रनिलयाः परे ।
विन्ध्याद्रिनिलयाश्चान्ये सह्याद्रिनिलयास्तथा ॥
श्रीशैलनिलया ये च कुरुक्षेत्रस्थिताश्च ये ।
पम्पानिवासिनो ये च कुमाराचलवासिनः ॥
मलयाचलगाः केचिन्निषिध्याचलवासिनः ।
माल्यवन्निलयाः केचित् त्रिकूटाचलवासिनः ॥
दण्डकारण्यनिलया नक्षषारण्यवासिनः ।
चम्पकारण्यगा केचिद्दीचारण्यनिवासिनः ॥
धर्म्मारण्यरताः केचिद् गुहारण्यरतास्तथा ।
ब्रह्मारण्यरताश्चान्येऽर्बुदारण्यनिवासिनः ॥
एते चान्ये च मुनयः सशिष्या बहवो मताः ।
सन्तः + + धना दक्षा जितमाया जितेन्द्रियाः ॥
अहङ्कारविहीनाश्च निर्म्ममाः कामवर्ज्जिताः ।
भगवद्ध्याननिरता लोकानुग्रहतत्पराः ॥
निर्म्मोहाः क्रोधनिर्मुक्ताः शान्ता निर्लोभमत्सराः ।
शमादिगुणसम्पन्ना दृढभक्ता दयालवः ॥
नारायणं जगन्नाथं सर्व्वाध्यक्षमनामयं ।
यजन्तः परया भक्त्या तत्पदाविष्टमानसाः ॥
कृष्णाजिनप्रावरणा जटिला ब्रह्मचारिणः ।
गृणन्तः परमं ब्रह्म जगच्चक्षुरनामयं ॥
जितनिद्रा जिताहारा द्वन्द्वदुःखसहिष्णवः ।
पश्यन्तो विष्णुरूपेण चराचरमिदं जगत् ॥
अब्भक्ष्या वायुभक्ष्याश्च शीर्णा पर्णाशनाः सदा ।
निराहारास्तथा चान्ये कन्दमूलफलाशनाः ॥
कृच्छ्रातिकृच्छ्रपाराकैस्तप्तकृच्छ्रैस्तथैन्दवैः ।
नित्यं संशोधितात्मानस्तथा सान्तपनादिभिः ॥
धर्म्मार्थकाममोक्षाणामुपायं ज्ञातुमिच्छवः ।
एकदा मिलिताः सर्व्वे पप्रच्छुरिदमादरात् ॥
ऋषय ऊचुः । सूत सूतविदां श्रेष्ठ व्यासहार्द्दविचक्षण ॥ इत्यादिः ।

End. गङ्गायै यमुनायै च सरस्वत्यै वटाय च ।
सोमेश्वराय शेषाय माधवाय नमो नमः ॥

Colophon. इति श्रीपद्मपुराणे पातालखण्डे सूतशौनकसंवादान्तर्गतशेषसनकसंवादे शत तमोऽध्यायः ।

विषयः । पद्मपुराणीयपातालखण्डीयप्रयागमाहात्म्यप्रकरणमिदं । अत्र १ प्रथमाध्याये,—सुतेन सह ऋषीणां संवादः ।

२ अ०,—देवदानवयक्षगिरिनदीवेदवृक्षशास्त्रप्रभृतीनां राजनिरूपणादिकं । शौचदयादिधर्म्मपादकीर्त्तनादिकं । स्तेयमदाद्यधर्म्मपादकथनं । कलौ नराणां प्रकृत्यादिनिरूपणं ।

३, ४ अ०,—प्रयागमाहात्म्यकथनं । भगवत्तत्त्वजिज्ञासूनां सनकादीनां पाताल-गमनपूर्व्वकं शेषस्तवनं । कामद-मोक्षदभेदेन तीर्थद्वैविध्यकथनं । प्रयागस्य तीर्थ-राजत्वनिर्व्वचनं ।

५, ६. ७, ८ अ०,—देवगणसनाथस्य नारदस्य ब्रह्मस्तवनादिविवरणं । ब्रह्मादि-कृतप्रयागतुलाकरणवृत्तान्तः । प्रयागपरिमाणादिकथनं । तत्र ब्रह्मकृताश्वमेध-यज्ञानुष्ठानविवरणं । तत्कृतमाधवस्तोत्रं ।

९, १० अ०,—अटतो नीलकण्ठस्य पुरतो माधवस्याविर्भाववृत्तान्तः । तत्कृतमाधव-स्तोत्रं । माधवाज्ञया वटमूले शिवस्य नित्यावस्थानविवरणं । प्रयागक्षेत्रे शक्रकृतो-द्यानशोभावर्णनं । इन्द्रकृतमाधवस्तोत्रादिकं

११, १२ अ०,—कामनाभेदे पुष्पविशेषेण पूजाविधानं । लक्षपुष्पपूजाविधिः । लक्षप्रदक्षिण-लक्षनमस्कार-लक्षदीपदानानां विधानं । मासविशेषे एतेषां फल-विशेषकथनं ।

१३, १४ अ०,—माधवसमीपे अलौकिकरूपलावण्यशालिनीमविदितपूर्व्वां का-मिनीं निरीक्ष्य लक्ष्म्यादीनां विस्मयः । अस्या जन्मादिविवरणं । विकटोपाख्यान-कीर्त्तनञ्च ।

१५, १६, १७, १८ अ०,—अग्नितीर्थोत्पत्तिविवरणं । लक्षहोमविधिः । तत्र कुण्डादिनिर्म्माणप्रक्रिया । यमसमीपे वृद्धब्राह्मणरूपस्य भगवतो यत्किञ्चिद्दानेनापि महत्फलं भवतीति कथनं ।

१९ अ०,—निर्ऋतिक्षेत्रवर्णनं । विकिरनामधेयक्षेत्रवर्णनं । क्षुधार्त्तस्य भिक्षुकस्य निर्ऋतिसमीपे अन्नादिप्रार्थनावृत्तान्तः ।

२०, २१, २२, २३ अ०.—श्राद्धविधिः । श्राद्धपार्व्वणादीनां लक्षणं । तेषां नित्य-त्वादिभेदकथनं । श्राद्धे पात्रकभणार्थं पञ्चाधिकब्राह्मणनिमन्त्रणे दोषकथनं । श्राद्ध-

विषयः। कर्तुर्नियमाः। तत्र दानार्हद्रव्याणि। वर्ज्जनीयानि च। पाकविधिः। तत्र गर्भिणीमृतवत्सादिकृतपाकवर्ज्जनकथनं।

२४, २५, २६, २७ अ०,—वरुणकृतब्रह्मस्तवविवरणं। तत्र चक्रवाकीसमीपे पथिकस्य स्वीयवृत्तान्तकथनं। चन्द्रवतीपुरीविवरणं। मदालसोपाख्यानं। पान्थं प्रति संसारस्य अनित्यत्वं कथयन्त्याश्चक्रवाक्या निजपूर्व्वजन्मकथाकीर्त्तनं। तस्मै पुनस्तस्याः सञ्जीवनीविद्यादानं।

२८, २९, ३० अ०,—वायवीयतीर्थवर्णनं। कौवेरतीर्थकथनं। पुलस्त्योपाख्यानं। कुवेरस्य लङ्कायां निवासविवरणञ्च। हिरण्याक्ष-हिरण्यकशिपु-रावणादीनां जन्मादिविवरणं। रावणविप्रकृतस्य कुवेरस्य तपस्यावर्णनादिकं।

३१, ३२, ३३, ३४, ३५ अ०,—ईशानतीर्थवर्णनं। ईशानकृतमाधवस्तुतिः। तपश्चरता तेन सह माधवस्य संवादः। तीर्थराजश्रवणस्मरणादीनां माहात्म्यकथनं। त्रिवेणीवर्णनं। तत्र तत्परिमाणादिकथनं। प्रणवस्य त्रिवेणीत्वनिरुक्तिः। गङ्गायमुनयोः संवादः। शेषकृतवेणीस्तोत्रं।

३६, ३७, ३८, ३९ अ०,—त्रिवेण्यां चौरमाहात्म्यं। तत्र वासमरणयोः फलश्रुतिः। किञ्च जलप्रवेशेनापि अन्यथा वा तत्र मरणे नात्मघातदोष इति कथनं। तीर्थयात्राविधिः। तत्र अधिकारिनिरूपणं। नियमादिकथनञ्च। तीर्थप्राप्तप्रथमदिनकृत्यनिरूपणं।

४०, ४१, ४२, ४३, ४४ अ०,—तीर्थराजस्नानादौ सङ्कल्पकरणे पापमोचनकामनया तदुल्लेखे पापनिरूपणसङ्ख्यादिकीर्त्तनं। तत्र तर्पणविशेषनिरूपणं। स्त्रीणां रजोयोगेऽपि प्रयागस्नानादौ दोषाभावकथनं। तीर्थश्राद्धविधिः। वेणीमाधवस्य ध्यानं, षोड़शोपचारपूजामन्त्रादिकथनञ्च। वेणीमाधवयोर्युगलस्तोत्रं।

४५, ४६, ४७ अ०,—द्वात्रिंशद्विधापराधकीर्त्तनं। शिलाचक्रपरीक्षणं। पञ्चायतनपूजाविधानं। तीर्थराजे ब्राह्मणदम्पतिपूजनफलकथनं। पुराणश्रवणविधिः। तत्र वक्तृश्रोतृलक्षणनियमादिकथनं।

४८, ४९, ५०, ५१, ५२ अ०,—माघस्नानफलकथनं। माघमासकर्त्तव्यसामान्यधर्म्मनिरूपणं। तत्र विशेषधर्म्मनिर्णयश्च। माघशुक्लचतुर्थ्याः कुन्दचतुर्थीतिनामकथनं। तत्र कुन्दपुष्पेण शिवार्चने फलकथनं। वसन्तपञ्चमी, तत्र वासन्तिकोत्सवविधिः। माघसप्तमीस्नानविधिः। तत्र शिरसि दीपं निधाय मौनस्नानकर्त्तव्यता। माघाष्टम्यां भीष्मतर्पणविधानं। भीमद्वादशी। महामाघीलक्षणं। माघस्नानव्रतोद्यापनविधानञ्च।

५३ अ०,—दानलक्षणं। तत्कर्तृकप्रशंसा। धर्म्मदानलक्षणं। अर्थदानलक्षणं। काम-

विषयः। दानलक्षणं। व्रीड़ादानलक्षणं। हर्षदानलक्षणं। भयदानलक्षणं। दानयोग्यपात्र-लक्षणं। वृत्तस्वरूपकथनं। ध्रुवाजस्रिक-काम्य-नैमित्तिकादिदानलक्षणं। नैमित्तिकदानस्यापि त्रैविध्यं। इष्टापूर्त्तादिलक्षणं।

५४, ५५, ५६, ५७ अ०,—दानकालकथनं। दानार्हद्रव्यादिनिरूपणं। प्रथम-कल्पसमर्थस्य अनुकल्पानुष्ठाने दोषकीर्त्तनं। दानभेदे दक्षिणाभेदनिरूपणं। षोड़शमहादानकथनं। गोदानविधिः। अन्नादिदानविधिकीर्त्तनञ्च।

५८, ५९, ६०, ६१, ६२ अ०,—गुप्तदानप्रशंसा। तत्र मध्यदेशस्थगुप्तधनाभिध-वैश्यस्य उपाख्यानं। कृष्णशर्म्मोपाख्यानं। गुप्तदानमाहात्म्यवर्णनं। सर्व्वस्वदान-प्रशंसा। तद्विधानकथनं। अत्र नापितकुलजातयोः कयोश्चित् सर्व्वस्वदानवृत्तान्त-कीर्त्तनं। श्रीपतिजयाभिधेययोरुपाख्यानं।

६३, ६४ अ०,—ताम्बूलदानविधिः। नागवल्लीसमुत्पत्तिविवरणं। ताम्बूलस्य पारिभाषिकलक्षणकीर्त्तनं। ब्रह्मचारिविधवादीनां ताम्बूलभक्षणप्रतिषेधः।

६५, ६६, ६७, ६८, ६९, ७० अ०,—नानायज्ञमाहात्म्यवर्णनं। एकादशीव्रतनि-र्णयः। तत्र अधिकार्य्यनुकल्पादीनां व्यवस्था। खण्डा-सम्पूर्णादीनां लक्षणकथनं वैष्णवलक्षणं। स्मार्त्तलक्षणं। एकादशीनिशाजागरणमाहात्म्य। चण्डालब्रह्मराक्ष-सयोरुपाख्यानं। अनृतवचनं कुत्र कुत्र दोषाय न भवतीति भगवदुपदेशकीर्त्तनं।

७१, ७२, ७३, ७४, ७५ अ०,—एकादश्युत्पत्तिविवरणं। विष्णुकृतासुरदानवनाशन-वृत्तान्तकीर्त्तनं। शक्तिं प्रति विष्णोर्वरदानं। अक्षयवटमाहात्म्य। मूलमाधव-वटमाधव-शङ्खमाधव-पद्ममाधवादीनां विवरणं।

७६, ७७, ७८, ७९ अ०,—मूलटङ्केश्वर-सूर्य्यकुण्डप्रभृतीनां विवरणं। सूर्य्यस्य तपस्यादिकीर्त्तनं। आदिवेण्या आरभ्य ऋणमोचनान्तं यावत्तीर्थवर्णनं। आनन्द-काननस्थस्य वामननामकब्राह्मणस्य उपाख्यानं। पापमोचनतीर्थवर्णनं। चन्द्रपुर-निवासिनो महामतिनामकस्य विप्रस्य उपाख्यानं।

८०, ८१ अ०,—रामतीर्थविवरणं। रेणुकावधानन्तरं परशुरामकृतैतत्तीर्थनिर्म्मा-णादिवृत्तान्तकथनं। पञ्चाग्न्यादिसाधनविधिः। अत्र विशेषेण धूमपानादीनां प्रकारनिरूपणं। सरस्वतीकुण्ड-गोघट्टनतीर्थादिमाहात्म्यकथनं।

८२, ८३ अ०,—पिशाचमोचनतीर्थ-कामतीर्थ-कापिलतीर्थ-तक्षकतीर्थविवरणं। इन्द्राज्ञया अश्विनीकुमारयो रसराजापहारकतक्षकान्वेषणवृत्तान्तकथनं। कालिय-तीर्थवर्णनं। गरुड़ेन सह विष्णोर्युद्धविवरणं। कालियनाग-गरुड़योरायोधनवर्णनं।

८४, ८५ अ०,—चक्रतीर्थवर्णनं। सिन्धुसागरतीर्थकथनं। पाण्डवकुण्ड-वरुणकुण्ड-योः कथनं। भरद्वाजेश्वरविवरणं। सीतारामाश्रमकथनं। विश्वामित्र-गौतम-

वशिष्ठादीनामाश्रमकथनं। प्रयागक्षेत्रे अश्वदानोद्यतं शक्रं निरूप्य ब्रह्मसुराचार्य्ययोः संवादकथनं। भोगवतीतीर्थकथनं। गङ्गाया भोगवतीतिनामकारणकथनं। दिवोदासस्य तपस्यावर्णनं।

८६, ८७, ८८ अ०,—ब्रह्मकुण्डदशाश्वमेधिकप्रभृत्यन्तर्वेदिस्थतीर्थवर्णनं। सङ्क्षेपेण रामावतारप्रयोजनकीर्त्तनं। ऊर्व्वशीकुण्डकथनं। ऊर्व्वशीपुरूरवसोः संवादः। सुधारसतीर्थ-कोटितीर्थ-मानसतीर्थप्रभृतीनां माहात्म्यादिकथनं।

८९, ९०, ९१, ९२ अ०,—यमयमुनयोरुत्पत्तिविवरणं। तयो रूपवर्णनञ्च। यमुनामाहात्म्यकीर्त्तनं। कालिन्दीतिनामकारणकथनं। यमुनाकलिन्दपर्व्वतयोः संवादः। यमुनाया नदीभावप्राप्तिविवरणं। शान्तिपुरविवरणं। कलिन्दगिरेरारभ्य गङ्गासङ्गमपर्य्यन्तं यमुनापार्श्वस्थितानां तीर्थभूमीनां विवरणादिकं।

९३, ९४, ९५, ९६ अ०,—गङ्गामाहात्म्यं। गङ्गोत्पत्तिविवरणं। अत्र सगरस्य अश्वमेधयज्ञानुष्ठानादिकथनं। सरस्वत्या उत्पत्तिविवरणं। तस्या गर्भे वाड़वस्य जन्म, पुनस्तस्य समुद्रगर्भप्रवेशवृत्तान्तकथनञ्च। त्रिवेण्या उत्पत्तिः। वेणीदानमाहात्म्यं। त्रिवेण्यां क्षौराद्यनुष्ठाने तिथिवारादिदोषाभावकथनं।

९७, ९८, ९९, १००, हठयोगानुष्ठानप्रकारकीर्त्तनं। प्रयागमाहात्म्यश्रवणपठनादिमाहात्म्यकथनञ्च।

---

## No. 1264. वामनपुराणं।

Substance, country-made yellow paper, 13 × 4½ inches. Folia, 198. Lines, 8 on a page. Extent, 6,336 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, new. Verse. Very incorrect.

*Vámana Purána.* The fourteenth of the eighteen great Puráṇas attributed to Vyása. According to the Matsya Puráṇa, "that in which the four-faced Brahmá taught the three objects of existence, as subservient to the account of the greatness of Trivikrama, which treats also of the S'iva Kalpa, and which consists of ten thousand stanzas, is called the Vámana Puráṇa." Its principal subject is the dwarf incarnation of Vishṇu, in which he overcame the giant Bali by a trick, he not being assailable by force. It is related by Pulastya in compliance with a request of Nárada. The MS. under notice is not near so extensive as what the Matsya refers to, but it corresponds closely with the extent of the codices examined by Col. Vans Kennedy and Professor

H. H. Wilson. (Wilson's *Vishṇu Purana*, pp. LXXV ff.) Wilson supposes that "the compilation of the work may have amused the leisure hours of some Brahman of Benares three or four centuries ago," but its name and quotations from it occur in compilations of the 9th, 10th and 11th centuries, and Chand, at the close of the 12th century, gives its extent in verses. The work opens with an account of the rainy season, followed by a request of Deví to S'iva to build a dwelling for their joint use. Then follows the feast of Daksha and its consequences. S'iva, having decapitated Daksha, is required to expiate his crime of Bráhmanicide by dwelling at Kapálamochana in Benares. Then comes the marriage of S'iva with the daughter of the Himálaya mountain, with the usual preludes as described in the *Kumára-sambhava.* Descriptions follow of the birth of Kartikeya and the domestic delights of S'iva, and the whole interspersed with a variety of tales and episodes. The story of the dwarf incarnation, though avowedly the main subject, is given at the end, and takes up but a small portion of the work. Wilson justly observes that the work "divides its homage between S'iva and Vishṇu with tolerable impartiality."

Beginning. ॐ नमो भगवते वासुदेवाय ।

पुलस्त्यमृषिमासीनमाश्रमे वाग्विदां वरं ।
नारदः पर्य्यपृच्छत्तं पुराणं वामनाश्रय ॥
कथं भगवता ब्रह्मन् विष्णुना प्रभविष्णुना ।
वामनत्वं धृतं पूर्व्वं तन्ममाचक्ष्व पृच्छतः ॥
कथं वा वैष्णवो भूत्वा प्रह्लादो दैत्यसत्तमः ।
त्रिदशै + + + साद्धमत्र मे विस्मयो महान् ॥
श्रूयते हि द्विजश्रेष्ठ दक्षस्य दुहिता सती ।
शङ्करस्य प्रिया भार्य्या बभूव वरवर्णिनी ॥
किमर्थं सम्परित्यज्य स्वशरीरं वरानना ।
पुनश्च देवदेवस्य पत्नीत्वमगमच्छुभा ॥
जाता हिमवतो गेहे गिरीन्द्रस्य महात्मनः ।
त्रैलोक्यराज्यमाच्छिद्य बलेरिन्द्रस्य सोऽददत् ॥
नमस्तस्मै श्रीधराय क्षुद्रवामनरूपिण ।
एतन्मे संशयं छिन्धि सर्व्ववित् त्वमतो हि मे ॥ इत्यादिः ।

End. एतत्पवित्रमारोग्यं धन्यं दुःस्वप्ननाशनं ।

पुचदं सर्व्वकामाद्यं सर्व्वग्रहनिवारणं ॥
नीचासनगतैः सर्व्वैः श्रोतव्यमिदमुत्तमं ।
पठितव्यं न सन्ध्यायां न देयं यस्य कस्यचित् ॥

Colophon. इति वामनपुराणे त्रिविक्रमचरितं समाप्तं । समाप्तञ्चेदं वामनाख्यपुराणमिति ।

विषयः । १ प्रथमे अध्याये,—वर्षावर्णनं । वर्षणाद्देजिताया गिरिजाया गिरिसमीपे गृह-निर्म्माणार्थप्रार्थना । जीमूतजालाकलनेन शिवस्य जीमूतकेतुनामकथनञ्च ।

२ अ०,—शरद्वर्णनं । सशङ्करां शङ्करीं विहाय दक्षस्य यज्ञानुष्ठानं । कथं भगवान् कपालीतिविवरणं । दुर्व्वासस उत्पत्तिः । ब्राह्मपुरुषशैवपुरुषयोरारोधनं ।

३ अ०,—वदरिकाश्रमे ब्रह्महत्यया आलिङ्गितं कपालिनं दृष्ट्वा नरनारायण-कालिन्दीपुष्करारण्यप्रभृतीनामन्तर्द्धानं । निर्व्विण्णस्य तस्य पुण्डरीकाक्षस्तवनं । हरे-रुपदेशेन हरस्य काशीपुरीगमनादिविवरणं । कपालमोचनतीर्थवर्णनञ्च ।

४, ५ अ०,—गौतमनन्दिन्याः प्रमुखात् दक्षयज्ञवृत्तान्तं निशम्य दाक्षायण्या देह-त्यागः । वीरभद्रादीनामुत्पत्तिः । यज्ञभूमौ तैः सार्द्धं सङ्ग्रामे ततो देवानामप-यानं । विनष्टे च दक्षे यज्ञस्य मृगरूपेण अपसरणं । शिवस्य कालरूपत्वकीर्त्तनं । मेषादिद्वादशराशीनां लक्षणादिकञ्च ।

६, ७, ८ अ०,—नरनारायणजन्मादिकथनं । वसन्तवर्णनं । सतीविरह-विधुरस्य विधुभूषणस्य अङ्गस्पर्शेन दग्धायाः कालिन्द्याः कज्जलनिभत्वप्राप्तिः शिवविलापः । पाञ्चालीकेशविवरणं । मुनिकामिनीनामौत्सुक्यवर्णनं । शिवलिङ्गपतनवृत्तान्तः । हरिब्रह्मकृतहरस्तुतिः । शैवशिष्यप्रणाली । मदनदाहनं । कामधनुषो मुष्टिबन्ध-कोटिप्रभृतिपञ्चविधस्थानविशेषेण चम्पकवकुलादीनामुत्पत्तिः । उर्व्वश्या जन्म, रूपवर्णनञ्च । नरनारायणाभ्यां समं प्रह्लादस्य युद्धवर्णनं । पीताम्बरप्रह्लादसंवाद-कीर्त्तनञ्च ।

९, १० अ०,—अन्धकोपाख्यानं । तेन सह इन्द्रादीनां समरसंरम्भः । देवानां प्रत्येकं वाहनलक्षणादिकथनं । शक्रस्य जम्भ-वृत्र-वलाद्यभिधदैत्यनाशनं ।

११, १२, १३ अ०,—सुकेशिसमीपे मुनीनां धर्म्मस्वरूपकीर्त्तनादि । जम्बूप्लक्षा-दीनां परिमाणादिकथनं । पापविशेषे नरकविशेषकीर्त्तनं । जम्बूद्वीपस्थवर्ष-जनपद-नदीप्रभृतिकथनञ्च ।

१४, १५ अ०,—दशाङ्गधर्म्मकथनं । ब्रह्मचर्य्यलक्षणादिः । सदाचारलक्षणं । प्रातःकृत्यादिनिरूपणं । स्वधर्म्मपरित्यागनिष्ठुरसत्यहीनवचनादिप्रयोगनिषेधः । चौरादिनियमः । शशकमत्स्यकच्छपादीनां भोज्यताकथनं । मणिमुक्तावस-नादिद्रव्यशुद्धिः । षण्ढमार्ज्जारप्रभृतीनां लक्षणं निरूप्य तद्गृहे भोजनादि-

विषयः। प्रतिषेधः। अशौचादिनिरूपणं। वानप्रस्थादिधर्म्मकथनं। शूद्रस्य केवलं गार्हस्थ्यधर्म्माधिकारकथनं।

१६, १७ अ०,—निशायां शून्यमार्गे निशाचरनगरीं निभाल्य सूर्य्यभ्रमेण लोकानां चेष्टादिवर्णनं। तत्पुरीपातनापराधात् पुरारिणा निपातितस्य दिनपतेरसीवरुणयोः सलिलमध्ये भ्रमणादिविवरणं। उत्तरायणसङ्क्रान्त्यादिनिरूपणं। प्रतिपदादिक्रमेण देवानां शयनादिकालकथनं। चातुर्मास्यविधिः। सर्व्वाक्षयकरव्रतविधानञ्च।

१८, १९, २०, २१ अ०,—गिरिशगणेशादीनां प्रियपुष्पकथनं। शरदागमे विष्णुपूजा विधानं। वैष्णवपञ्जरस्तोत्रं। रम्भ-करम्भयोरुपाख्यानं। रम्भात् महिषीगर्भे महिषासुरजन्मविवरणं। रक्तवीजोत्पत्तिः। कात्यायन्या जन्म। अगस्त्य-विन्ध्यगिरिवृत्तान्तवर्णनं। देव्या सह चण्डमुण्डप्रभृतीनां संवादः। महिषासुरबधकथनञ्च।

२२, २३ अ०,—सोमवंशीयर्क्षराजोपाख्यानं। तपनतनयाया ऋक्षकुमारेण संवरणेन समं विवाहः। तस्या गर्भे कुरोर्जन्म। कुरुक्षेत्रोत्पत्तिश्च।

२४, २५, २६ अ०,—मेनकागर्भे कन्यात्रयजन्मविवरणं। तत्र ब्रह्मणः शापेन ज्येष्ठा जलरूपतां प्राप्य सुरनदी संवृत्ता, मध्यमा तु सन्ध्यारागवती बभूवेति कथनं। कनिष्ठाया महादेवप्राप्त्यर्थं तपस्या। तया सह भिक्षोः संलापः। सप्तर्षीणां हिमालयसमीपे उमाप्रार्थनादिवृत्तान्तः। शिवविवाहवर्णनं।

२७, २८, २९, ३०, ३१ अ०,—पितामहप्रसादात् काल्याः काञ्चनवर्णत्वप्राप्तिः। देवान् प्रति देव्याः शापदानं। गजाननजननं। इन्द्रस्य नमुचिनिसूदनं। देव्याश्चण्डमुण्डनिशुम्भहननं। कुमारस्य जन्म। सैनापत्ये अभिषेचनं। तारकासुरनाशनं। महिषक्रौञ्चगिरिभेदनञ्च।

३२, ३३ अ०,—मदालसोपाख्यानं। अन्धकासुरभयेन पार्व्वत्याः शतरूपग्रहणं। केदारतीर्थोत्पत्तिः। सुरदानवोपाख्यानं। तेन सह वशिष्ठयमादीनां संवादः। सनत्कुमार-सनक-सनातन-सनन्दप्रभृतिधर्म्मपुत्रकथनं।

३४ अ०,—पुन्नाम्नो नरकस्य प्रपञ्चं प्रदर्श्य तत्स्वरूपकथनं। शेषाख्यपापनिरूपणं। क्रमेण पुत्रशिष्ययोः पुन्नामनरकशेषपापहन्तृत्वकीर्त्तनं। औरसक्षेत्रजादिपुत्रलक्षणं। अहिंसाधर्म्मयोः ब्रह्मणे पुत्रत्वेन सनत्कुमारस्य सम्प्रदानं। द्वादशारचक्रलक्षणादिकथनं। विष्णोः सुरनाशनं।

३५ अ०,—शिवदर्शनवञ्चितानां देवानां पुरतः केशवस्य तप्तकृच्छ्रलक्षणादिकथनं। तेषां तदनुष्ठानञ्च। जलमध्ये शिवस्य स्थाणुनामकरणं। तस्य शुक्राय सञ्जीवनीविद्यादानं। प्रह्लादान्धकसंवादः।

विषयः। ३६, ३७, ३८ अ०,—पाणिग्रहं याचमानस्य दण्डस्य पुरतः शुक्रसुताया विरजायाः चित्राङ्गदोपाख्यानकीर्त्तनं। अञ्जनसुताया उपाख्यानं। गन्धर्व्वकन्यकाभ्यां सार्द्धं अवगाहमानस्य गालवमुनेर्मत्स्येन सह संवादः। वेदवत्या उपाख्यानं। गद्येन हाटकेश्वरशिवस्तोत्रं। ऋतध्वजवानरयोः संवादः। वेदवतीचित्राङ्गदाप्रभृतिभिः सह इन्द्रद्युम्नसुरथप्रभृतीनां विवाहवर्णनं।

३९, ४०, ४१ अ०,—तव शिष्येण दण्डेन बलाद् वचनीयतां नीतास्मीति स्वदुहितुर्वचनमाकर्ण्य शुक्रस्य दण्डं प्रति शापदानवृत्तान्तकीर्त्तनं। दण्डकारण्यविवरणं। देवसैन्यानामन्धकसेनाभिः सह युद्धवर्णनं।

४२ अ०,—दैत्यगुरुकृतपशुपतिस्तुतिः। कवलितस्य तस्य शिवशरीरात् शुक्ररूपेण निर्गमनात् शुक्रेतिसञ्ज्ञाकीर्त्तनं। महादेवस्य अष्टादशभुजधारणं। शिवरूपपरिग्रहेण अन्धकस्य पार्व्वतीगृहप्रवेशविवरणं। तद्भयेन पार्व्वत्याः श्वेतार्ककुसुमप्रवेशकथनं। इन्द्रस्य जम्भबलप्रभृतिदानवनाशनं।

४३, ४४ अ०,—पुरारिणा सममन्धकस्य युद्धवर्णनादिः। सोमधार-सोमराज-कामराजप्रभृतिभैरवोत्पत्तिः। अन्धककृतशिवस्तोत्रं। अन्धकस्य गणेश्वरत्वं प्राप्य भृङ्गी बभूवेतिकथनञ्च। इन्द्रस्य मलयपर्व्वते दानवैः सह युद्धवर्णनं। पाकशासन-पुरन्दरेतिनाम्नोर्निरुक्तिः। एकोनपञ्चाशन्मारुतजन्मविवरणं। इन्द्रस्य गोत्रभिन्नामनिरुक्तिः।

४५ अ०,—स्वायम्भुवमन्वन्तरीयसवनराजोपाख्यानं। तत्र सप्तर्षिपत्नीनां पीयूषबुद्ध्या पुष्करस्थशुक्रपानेन गर्भसञ्चारविवरणं। तासां पुत्रीणां सप्तमारुतत्वकथनञ्च। एवं स्वारोचिषादिमन्वन्तरेषु सप्तसप्तमारुतसम्भवकीर्त्तनं।

४६, ४७, ४८ अ०,—बलिकालनेमिप्रभृतिभिः सह इन्द्रादीनां युद्धवर्णनं। विष्णोः कालनेमिनिपातनं। दैत्यजितानां देवानां पलायनादिवर्णनं। त्रिलोकाधिपतिं बलिं प्रति शुक्रस्य उपदेशदानं। विष्णोः सरस्वतीचतुष्टयसृष्टिविवरणं।

४९, ५०, ५१, ५२ अ०,—वामनप्रादुर्भावकथनं। प्रह्लादस्य तीर्थयात्राविवरणं। धुन्धुदैत्यस्य अश्वमेधयज्ञानुष्ठानं। बलिनिग्रहात् पूर्व्वमपि त्रिविक्रमरूपपरिग्रहेण भगवतो वालुकार्णवे धुन्धुनिक्षेपणं। दस्युना हृतसर्व्वस्वस्य सुधर्म्माख्यस्य वणिजउपाख्यानं। सोमशर्म्मोपाख्यानं। श्रवणद्वादशीकथनं।

५३, ५४, ५५ अ०,—नक्षत्रपुरुषव्रतविधानं। शिवस्य सुदर्शनचक्रधारणं। विष्णोरपि त्रिशूलाकलनमित्यादिवृत्तान्तकथनं। जलोद्भवासुरनाशकीर्त्तनं। वीतमन्युद्विजोपाख्यानं। श्रीदामनरपतेरुपाख्यानं। चक्रिक्षिप्तेन सुदर्शनेन त्रिधाभिन्नस्य शिवस्य अंशत्रयेण हिरण्याक्षसुवर्णाक्ष-विरूपाक्षाख्यरुद्राविर्भावविवरणं।

५६, ५७, ५८, ५९, ६० अ०,—शिवस्य रुद्रकोटीतिनामनिर्व्वचनं। गजेन्द्रमोक्ष-विवरणं। विष्णुपञ्जरकीर्त्तनं। रावमम्प्रति ब्रह्मचारिणः सारस्वतस्तोत्रोपदेशः। पापप्रशमनाभिधस्तोत्रं। अन्यविधपापप्रशमनस्तुतिः।

६१, ६२, ६३, ६४, ६५ अ०,—विधातृकृतवामनस्तोत्रं। वामनस्य रूपविशेषेण स्वकीयस्थानकथनं। शुक्रसमीपे बलेः कोषकारपुत्रोपाख्यानकथनं। त्रिविक्रम-रूपवर्णनं। बलिबन्धनपातालगमनादिवृत्तान्तकथनं। त्रिविक्रमस्य ब्रह्मणे लघु-रूपप्रदर्शनं। गद्येन ब्रह्मणा वामनस्तुतिकीर्त्तनं।

६६, ६७ अ०,—बलिकृतसुदर्शनस्तोत्रकथनं। बलिं प्रति प्रह्लादस्य भगवत्तत्त्वोप-देशदानं। एतत्पुराणपठनादिफलश्रुतिकीर्त्तनञ्च।

---

## No. 1265. पदार्थतत्त्वावलोकः।

Substance, country-made yellow paper, 10 × 6 inches. Folia, 50. Lines, 32 on a page. Extent, 1,800 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, new. Prose. Generally correct.

*Padártha-tattváraloka.* A commentary on the *Padártha-khándana* of Raghunátha S'iromaṇi. By Siddhántapanchánana.

The full name of the commentator cannot be ascertained. The work of S'iromani is commonly called *Padártha-tattra* and also *Padártha-tattra-virechana ;* it is a criticism of the Vaiseshika categories.

Beginning. इन्द्रादिवृन्दारकवृन्दवन्द्यं प्रणम्य पादाम्बुरुहं मुरारेः।

शिरोमणिस्वीकृत + × + + + + + + + + ॥

अथ द्रव्यादयस्तावत् प्राचीनपरिगृहीताः पदार्थाः सप्त, तत्र विचारपुरःसरं केषाञ्चिदाधिक्यं निराकरिष्यन् आधिक्यमपि केषाञ्चिद् व्यवस्थापयिष्यन् व + व्यवस्थापकं सिद्धान्तप्रवादमात्रमनभिधिकृत्य प्रतिजानीते। अथेति। ईश्वरा-दिति। इत्यादिः।

End. परे तु दशरथपदवाच्यत्वादिनैव तत्र बोधः। न तु दशरथत्वादिना—इति कृतं परिभावनेन। श्रीरस्तु।

निर्म्मासे कठिनेऽस्मिन्, अकौटिल्येनापि सूक्ष्मतरबुद्ध्या।

दत्ता दोषेऽपि मुदे, स्तन इव रचितोदरा + तः॥

विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य।

विदुषामतिसूक्ष्मधियामसत्वराणां मुदे भविता॥



तच्चिन्ताहरितेन तावकमहामायाविमूढात्मना
संसारार्णवदुर्निवारलहरीजालेषु मोमुह्यता ।
विद्योज्झितमदसद्विवेकरहितेनेदं मया वर्णितं
तेनानेन मदर्पितेन भगवन् प्रीणातु नारायणः ॥

Colophon. इति सिद्धान्तपञ्चाननकृतः पदार्थतत्त्वावलोकः समाप्तः ।

विषयः । शिरोमणिकृतपदार्थखण्डनस्य व्याख्या ।

---

## No. 1266. कूर्म्मपुराणपूर्व्वभागः ।

Substance, country-made yellow paper, 14 × 10 inches. Folia, 135. Lines, 23 on a page. Extent, 3,121 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Verse. Incorrect.

*Kúrma Puráṇa, Púrva-bhága.* The Kúrma is the fifteenth of the eighteen great Puráṇas attributed to Vyása and the MS. under notice comprises only the first half of that work. The following is Professor Wilson's account of this Puráṇa:

"That in which Janárdana, in the form of a tortoise, in the regions under the earth, explained the objects of life—duty, wealth, pleasure, and liberation—in communication with Indradyumna and the R'ishis in the proximity of S'akra, which refers to the Lakshmí Kalpa, and contains seventeen thousand stanzas, is the Kúrma Puráṇa."

In the first chapter of the Kúrma Purána, it gives an account of itself, which does not exactly agree with this description. Súta, who is repeating the narration, is made to say to the R'ishis: "This most excellent Kaurma Puráṇa is the fifteenth. Samhitás are fourfold, from the variety of the collections. The Bráhmí, Bhágavatí, Saurí, and Vaishnaví are well known as the four Samhitás which confer virtue, wealth, pleasure, and liberation. This is the Bráhmí Samhitá conformable to the four Vedas; in which there are six thousand s'lokas; and, by it, the importance of the four objects of life, O great sages, holy knowledge and Parames'wara is known." There is an irreconcilable difference in this specification of the number of stanzas and that given above. It is not very clear what is meant by a Samhitá, as here used. A Samhitá, so observed above (p. XIX.), is something different from a Puráṇa. It may be an assemblage of prayers and legends, extracted, professedly, from a Puráṇa, but is not, usually, applicable to the origi-

nal. The four Samhitás here specified refer rather to their religious character than to their connexion with any specific work; and, in fact, the same terms are applied to what are called Samhitás of the Skanda. In this sense, a Puráṇa might be also a Samhitá; that is, it might be anassemblage of formulæ and legends belonging to a division of the Hindu system; and the work in question, like the Vishṇu Puráṇa, does adopt both titles. It says: "This is the excellent Kaurma Puráṇa, the fifteenth (of the series)." And again: "This is the Bráhmí Samhitá." At any rate, no other work has been met with pretending to be the Kúrma Puráṇa.

"With regard to the other particulars specified by the Matsya, traces of them are to be found. Although, in two accounts of the traditional communication of the Puráṇa no mention is made of Vishṇu as one of the teachers, yet Súta repeats, at the outset, a dialogue between Vishṇu, as the Kúrma, and Indradyumna, at the time of the churning of the ocean; and much of the subsequent narrative is put into the mouth of the former.

"The name, being that of an Avatára of Vishnu, might lead us to expect a Vaishṇava work: but it is always, and correctly, classed with the S'aiva Puráṇas; the greater portion of it inculcating the worship of S'iva and Durgá. It is divided into two parts, of nearly equal length. In the first part, accounts of the creation, of the Avatáras of Vishṇu, of the solar and lunar dynasties of the kings to the time of Krishṇa, of the universe, and of the Manwantaras, are given, in general in a summary manner, but, not unfrequently, in the words employed in the Vishṇu Puráṇa. With these are blended hymns addressed to Mahes'wara by Brahmá and others; the defeat of Andhakásura by Bhairava; the origin of four S'aktis, Mahes'warí, S'ivá, Satí, and Haimavatí, from S'iva; and other S'aiva legends. One chapter gives a more distinct and connected account of the incarnations of S'iva, in the present age, than the Linga; and it wears, still more, the appearance of an attempt to identify the teachers of the Yoga school with personations of their preferential deity. Several chapters from a Kás'í Máhátmya, a legend of Benares. In the second part there are no legends. It is divided into two parts, the I's'wara Gítá and Vyása Gitá. In the former, the knowledge of god, that is, of S'iva, through contemplative devotion, is taught. In the latter, the same object is enjoined through works, or observance of the ceremonies and precepts of the Vedas.

Beginning. नमस्कृत्याप्रमेयाय विष्णवे कूर्म्मरूपिणे ।
पुराणं सम्प्रवक्ष्यामि यदुक्तं विश्वयोनिना ॥
सत्रान्ते सूतमनघं नैमिषे च महर्षयः ।
पुराणसंहितां पुण्यां पप्रच्छ रोमहर्षणं ॥
त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः ।
इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥
तस्य ते सर्व्वरोमाणि वचसा हर्षितानि यत् ।
द्वैपायनस्तु भगवान् ततो वै रोमहर्षणः ।
भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः ॥
मुनीनां संहितां वक्तुं स्वांशेन पुरुषोत्तमः ।
त्वं हि स्वायम्भुवे यज्ञे सत्याहे वितते सति ॥
सम्भूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ।
तस्माद् भवन्तं पृच्छामः पुराणं कौर्म्ममुत्तमं ॥ इत्यादिः ।

End. द्वादशे रुद्रसावर्णी रोचमानस्त्रयोदशः ।
भौत्यश्चतुर्द्दशः प्रोक्तो भविष्या मनवः क्रमात् ॥
अयं वः कथितो ह्यंशः पूर्व्वो नारायणेरितः ।
भूतैर्भव्यैर्वर्त्तमानैराख्यानैरुपबृंहितः ॥
पाठयेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ।
नमो देवाधिदेवाय देवानां परमात्मने ।
पुरुषाय पुराणाय विष्णवे प्रभविष्णवे ॥

Colophon. इति कूर्म्मपुराणे पूर्व्वभागः समाप्तः । त्रिपञ्चाशत्तमोऽध्यायः ॥

विषयः । १ अध्याये,—सूतेन सह ऋषीणां संवादः । रोमहर्षणनामनिरुक्तिः । महापुराणोपपुराणनामसङ्ख्यादिः । पुराणलक्षणं । समुद्रमन्थनकाले भगवतः कूर्म्मरूपधारणं । नारदादिभ्यो भगवतो लक्ष्मीपरिचयदानं । इन्द्रद्युम्नचरित्रकीर्त्तनं । लक्ष्मीसकाशात् तस्य तत्त्वज्ञानलाभः । तत्कृतविष्णुस्तुतिः । तस्मै कूर्म्मरूपस्य विष्णोः सदाश्रया, अव्यक्ताश्रया, ब्राह्मी चेति त्रिविधभावनाद्युपदेशदानं ।

२, ३ अ॰,—महामायामाहात्म्यं । मरीच्यादीनां ब्राह्मणादीनाञ्च सृष्टिः । ब्राह्मणस्य यजन-याजन-दानप्रभृतिषट्कर्म्माणि । दानाध्ययनादिरूपक्षत्रियकर्म्माणि । दानाध्ययनकृष्यादिरूपवैश्यकर्म्माणि । द्विजशुश्रूषारूपशूद्रकर्म्म । गृहस्थ-वनस्थ-भिक्षुक-ब्रह्मचारिणां धर्म्मकथनादिः । गार्हस्थ्याश्रमकर्म्मयोगप्रशंसा । क्षमादयादानादिचातुर्वर्ण्यधर्म्मः । गृहस्थसन्न्यासिप्रभृतीनामवान्तरभेदः । ब्रह्मविष्णुशि-

विषयः। वानां वस्तुतोऽभेदः। वैष्णव-ब्राह्म-शैवाश्रमकथनं। त्रिपुण्ड्रधारणावश्यकता। आश्रमग्रहणक्रमकथनञ्च।

४, ५ अ०,—आदिसृष्टिविवरणं। तत्र चतुर्व्यूहकथनं। ब्रह्मस्वरूपं। प्रकृतिक्षोभेण महदादिसृष्टिः। ब्रह्मविष्णुशिवानां रजःसत्त्वादिगुणाश्रयत्वेन स्रष्टृत्वादिः। अजप्रजापतिमहादेवप्रभृतिनामनिरुक्तिः। कालसङ्ख्या। युगसन्धिपरिमाणादिः। भगवतः कालात्मकत्वकथनञ्च।

६, ७, ८ अ०,—नारायणाख्यब्रह्मस्वरूपं। ततस्तुतिः। तमोमोह-महामोहादि-पञ्चविधाविद्याकीर्त्तनं। महद्-भूतवैकारिकैन्द्रियक-मुख्य-तिर्य्यक्स्रोतःप्रभृतिनवविधसृष्टिः। सनक-सनातन-सनन्दनादयः पञ्चयोगिनः। महादेवोत्पत्तिः। जगत्सृष्टिः। ब्रह्मणो देहार्द्धभागाभ्यां स्त्रीपुरुषोत्पत्तिः। मन्वादीनां सन्ततिः। दक्षकन्यकाः। पितरः। धर्म्मादीनां यशःकीर्त्तिप्रभृतिपुत्रकथनञ्च।

९ अ०,—पद्मनाभनाभिपद्मे हिरण्यगर्भस्य जन्मवृत्तान्तः। अन्योन्यं संलपतोः कमलेशकमलजयोः समीपे महादेवस्याविर्भावः रूपवर्णनञ्च। प्रीतस्य तस्य ब्रह्महरिभ्यां वरदानं। ब्रह्मपुत्रत्वकथनञ्च।

१० अ०,—मधुकैटभौ निहत्य प्रवेश्य च स्रष्टारं निजशरीरे नारायणाख्यब्रह्मणो-योगनिद्रा। कोपाविष्टस्य ब्रह्मणः अश्रुविन्दुभ्यः प्रेतोत्पत्तिः। प्राणमयरुद्रोत्पत्तिश्च। रुद्रनामनिरुक्तिः। अष्टमूर्त्तयः। तत्पत्नीपुत्रादिकथनं। ब्रह्मकृतरुद्रस्तवनं। हरस्यान्तर्द्धानं। मरीच्यादीनां सृष्टिः।

११, १२ अ०,—तपस्यतो पितामहस्य समीपे अर्द्धनारीश्वररूपस्य रुद्रस्य प्रादुर्भावः। एकादशरुद्रोत्पत्तिः। दाक्षायण्या जन्मादिः। शिवशक्तिमाहात्म्यं। शक्तिशक्तिमतोरभेदः। मेनकागर्भे शिवशक्तेर्जन्म। चतुर्मुखाष्टभुजचन्द्ररेखादिलक्षणां तां विलोक्य भीतस्य हिमालयस्य अष्टोत्तरसहस्रनामभिस्ततस्तुतिः। पुनर्नीलोत्पलदलश्यामां द्विभुजां सौम्यरूपाञ्च तां निरूप्य गिरिराजस्य तन्माहात्म्यवर्णनं। तस्मै देव्या उपदेशदानं। तत्र श्रुतिस्मृतिविरुद्धशास्त्राणां तामसत्वं। कापालभैरवयामलादीनां मोहनत्वं। चतुर्द्दशविद्याः। उपासनाफलं। देव्युपासनावश्यकत्वं। ज्ञानमाहात्म्यं। ब्रह्मस्वरूपं। कर्म्मज्ञान-भक्तियोगान्यतमेन ब्रह्मशरणावश्यकता। देवीमाहात्म्यफलश्रुतिः।

१३, १४, १५ अ०,—भृगु-मरीचि-वसिष्ठादीनां प्रियव्रतोत्तानपादादीनाञ्च सन्ततिकीर्त्तनं। पुराणवक्तुः सूतस्योत्पत्तिः। शिखण्डितनयस्य कुशलिनो महादेवार्च्चनवेदाध्ययनादिवृत्तान्तः। सप्तप्राचेतसानामुत्पत्तिः। दक्षोदितां शिवनिन्दामाकर्ण्य अपर्णाया देहत्यागः, हिमालयालये जननञ्च। दक्षाय शिवस्य शापदानं।

विषयः। जन्मान्तरेऽपि पूर्व्ववैरमनुस्मृत्य दक्षस्य विरूपाक्षभागरहितयज्ञानुष्ठानं। दक्ष-दधीचिसंवादः। वृत्तान्तमिममुपश्रुत्य देवीमुखाद् देवदेवस्य वीरभद्रसर्ज्जनं गणाधिपं पुरस्कृत्य वीरभद्रादीनां यज्ञनाशनं। भर्गनेत्रवह्निजिह्वादिनाशः। तैः सह विष्णोर्युद्धं। महादेवागमनं। दक्षमुपदिश्य सपरिवारस्य तस्य प्रस्थानं। ब्रह्मणः शिवमाहात्म्यकथनञ्च।

१६ अ०,—दक्षकन्यानां विवाहः। अष्टौ वसवः। धर्म्म-ध्रुव-पवन-चन्द्र-विश्व-कर्म्मादीनां पुत्रकथनं। दितिसन्तानकथनं। पितामहं पुरस्कृत्य हिरण्यकशिपु-विप्रकृतानामिन्द्रादीनामुपेन्द्रसमीपे स्वावस्थाकथनं। समरसमये हिरण्यकशिपु-पादताड़ितस्य सगरुड़स्य वैष्णवपुरुषस्य अन्तर्द्धानं। हिरण्याक्षाक्षिप्तपाशुपतास्त्रेणापि अक्षतदेहं नृसिंहरूपं भगवन्तं निभाल्य नूनं वासुदेवोऽयमिति विमृश्य विसृज्य च शस्त्राणि प्रह्लादस्य तच्चरणावनमनं। हिरण्यकशिपुबधः। हिरण्याक्षस्य पाताले पलायनं। भगवतो वराहरूपेण तन्निधनं। प्रह्लादं प्रति ब्राह्मणशापः। तेन सार्द्धं भगवतो युद्धं। पुनः पूर्व्वसंस्काराद् भगवज्ज्ञानेन तन्मुक्तिः। गोबध-वृत्तान्तकथनपूर्व्वकं गोतमनामनिरुक्तिः। ऋषीन् प्रति गोतमस्य शापदानं। लोकानां मोहनाय कापाल-पाञ्चरात्र-पाशुपतादिशास्त्ररचना। अन्धकासुरस्य गिरिजाहरणोद्योगः। अन्धकसमीपाद्देवानां पराजयः। शूलिना शूलेन ताड़ित-हृदयस्य अन्धकस्य तत्स्तवनादिः। तस्य नन्दीश्वरानुचरत्वकथनञ्च।

१७, १८ अ०,—सनत्कुमार-विरोचनसंवादः। बलेर्देवानां पराजयः। अदितेस्तपस्या. विष्णुस्तवनञ्च। प्रह्लादबलिसंवादः। अदितिगर्भे भगवतो जन्मग्रहणादिः। वामनरूपेण बलिसमीपे त्रिपादभूमिप्रार्थनादिः। गङ्गोत्पत्तिः। बलेः पातालप्रवेशः। बाणोपद्रुतेन वृन्दारकवृन्देन संस्तुतस्य आशुतोषस्य बाणपुरदाहनादिः। कद्रुविनतादीनां सन्ततिकीर्त्तनं।

१९, २०, २१ अ०,—नैध्रुव-रैभ्य-शाण्डिल्य-पुलस्त्य-मरीचिप्रभृतीनामृषीणां वंशकीर्त्तनं। सञ्ज्ञा-रात्रिप्रभादिसूर्य्यपत्नीकथनं। तासां गर्भे मनु-यम-यमुनादीनां जन्म। इक्ष्वाकुवंशकथनं। सावस्तेः गौड़देशे सावस्तिनामपुरनिर्म्माणं। धुन्धुमारादीनां वंशः। तत्र विशेषेण त्रिधन्वराजोपाख्यानं। सङ्क्षेपेण रामपरिणयन-वनगमन-सीताहरण-सेतुबन्धन-रामेश्वरलिङ्गस्थापन-रावणनिधनादिकथनं।

२२, २३ अ०,—चन्द्रवंशकीर्त्तनं। तत्र विशेषेण शूर-शूरसेन-जयध्वजादीनां वृत्तान्तः। तेषां समीपे सप्तर्षीणां सुरनरकिन्नरप्रभृतीनामाराध्यदेवताकथनं। सार्द्धञ्च तैः समरसमये सुदर्शनेन भगवतो विदेहनामदानवघातनादिः। ततो जयध्वजवंशजस्य दुर्ज्जयस्य उर्व्वशीगमनरागादिकथनं। तस्य पुनः स्वपत्न्याः पतिव्रताया

विषयः। उपदेशेन कण्वाश्रमगमनं। ततो गन्धर्व्वहननपूर्व्वकविचित्रमालाग्रहण-सुरसुन्दरी-परित्याग-वाराणसीगमनादिवृत्तान्तकथनञ्च।

२४, २५ अ०,—क्रोष्टुवंशकथनं। तत्र मृगयागतस्य नवरथस्य राज्ञो राक्षसदर्शनादिवृत्तान्तः। यदुवंशकीर्त्तनं। तत्र पुत्रलाभार्थं श्रीकृष्णस्य तपश्चरणादिः। तस्य पुनः मुनीश्वरसमीपे शिवाराधनादिस्थानजिज्ञासा। ततस्तदुपदेशेन सङ्कीर्णा कृत्तिवासोगुणगानं। तद्दर्शनसञ्जातानन्दस्य नन्दनन्दनस्य नन्दीशवन्दनञ्च।

२६, २७ अ०,—गिरिशेन सह गिरिधरस्य कैलासगमनपूर्व्वकं विविधविलासकीर्त्तनं। पुनस्तस्य विशेषेण द्वारवतीप्रवेशवृत्तान्तादिवर्णनं। मार्कण्डेयसमीपे हरिहरयोरैक्यकथनं। लिङ्गोत्पत्तिविवरणकीर्त्तनञ्च। कलियुगे भगवद्भजनावश्यकता।

२८, २९ अ०,—गतवति कीर्त्तिशेषं शेषशयने द्वैपायनेन समम् अर्ज्जुनस्य संवादः। काशीवासप्रशंसा। युगधर्म्मकथनं। तत्र वेदभेदकारणकीर्त्तनञ्च।

३०, ३१, ३२, ३३, ३४, ३५ अ०,—अत्र षडध्यायाः पतिताः।

३६, ३७, ३८, ३९ अ०,—मार्कण्डेययुधिष्ठिरसंवादः। प्रयागमाहात्म्यं। तत्र यात्राविधिः। बलिवर्द्दारोहणेन तत्र गमने दोषः। कन्यादानफलं। प्राणत्यागफलं। माघमासे तत्र स्नानफलं। वटेश्वरमाहात्म्यादिकीर्त्तनञ्च।

४०, ४१, ४२ अ०,—प्रियव्रतपुत्राणां अग्नीध्रमेधातिथिप्रभृतीनां जम्बूप्लक्षादि-सप्तद्वीपाधिपत्यकीर्त्तनं। तेषां पुत्रादिनाम्ना तत्र तत्र वर्षसञ्ज्ञाकथनञ्च। चन्द्र-बुध-वृहस्पतिप्रभृतीनामुच्चनीचत्वादिकथनं। छन्दोनामानि। यमलोकादिकथनं। अहोरात्रकारणनिरूपणं। द्वादशादित्याः। ब्रह्मवादिनो मुनयः। भूर्लोकादिसंस्थानकथनं। सप्तसञ्ज्ञकवायुनेमिकीर्त्तनं। भूर्लोकात् सूर्य्यादीनां दूरत्वपरिमाणं। तेषां विष्कम्भविस्तारादिकीर्त्तनञ्च।

४३, ४४, ४५ अ०,—सूर्य्यस्य सप्तविधरश्मिनिरूपणादिः। तत्सहस्रसञ्ज्ञककिरणानां विभागशो वर्षणादिकारणत्वकीर्त्तनं। वसन्तादौ सूर्य्यवर्णकथनं। बुधादिग्रहाणां सूर्य्यमभितो भ्रमणकथनं। चन्द्रादीनां त्रिचक्ररथादिकथनं। महर्लोक-सत्यलोकविष्णुलोकादिकथनं। सप्तपातालकथनं। जम्बूद्वीपसुमेरुप्रभृतीनां संस्थानपरिमाणादिकथनं। तत्र वर्षपर्व्वतादिकीर्त्तनञ्च।

४६, ४७, ४८ अ०,—महादेव-देवेन्द्र-यमादीनां पुरीकथनं। केतुमाल-भद्राश्वादिषु स्थितानां स्त्रीपुरुषादीनां वर्णादिकथनं। कुलपर्व्वताः। नागद्वीपादिविवरणं। नदीनामानि। पौण्ड्र-कलिङ्ग-मागधादिदेशाः। हेमकूटशिखरे महादेवपुरी। जैगीषव्याश्रमः। लक्ष्म्यादीनां वासस्थानं। अञ्जन-सुगन्धादिगिरिषु अप्सरआदीनां निवासकीर्त्तनञ्च।

४९, ५०, ५१ अ०,—प्लक्षद्वीपवर्णनं। तत्र कुलपर्व्वतनदीवर्षादयः। कुशद्वीपवर्णनं। क्रौञ्चद्वीपादिकथनं। विशेषेण श्वेतद्वीपवर्णनं। पुष्करद्वीपस्थवटवृक्षे ब्रह्मावस्थानवृत्तान्तकथनं। गतागतमन्वन्तरवृत्तान्तकीर्त्तनञ्च।

५२, ५३ अ०,—अष्टोत्तरविंशतिव्यासाः। विभागपूर्व्वकं द्वैपायनव्यासस्य वैशम्पायनादिभ्यो वेदसम्प्रदानविवरणं। वेदानां शाखासङ्ख्याः। कलियुगे शिवावतारकथनं। योगिनः। एतत्पाठनादिफलश्रुतिः॥ इति पूर्व्वभागः।

---

## No. 1267. कूर्म्मपुराणोत्तरभागः।

Substance, country-made yellow paper, 14 × 10 inches. Folia 122. Lines, 25 on a page. Extent, 3,050 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Verse. Incorrect.

*Kúrma Puráṇa, uttarabhága.* The second part of the work described in the last preceding number. It comprises the I'svara Gítá and the Vyása Gítá.

Beginning. ऋषय ऊचुः। भवता कथितः सम्यक् सर्गः स्वायम्भुवः शुभः।
ब्रह्माण्डस्यास्य विस्तारो मन्वन्तरविनिश्चयः॥
अत्रेश्वरेश्वरो देवो वर्णिभिर्धर्म्मतत्परैः।
ज्ञानयोगरतैर्नित्यमाराध्यः कथितश्च यत्॥
तद्वदाशेषसंसारदुःखनाशनमुत्तमं।
ज्ञानं ब्रह्मैकविषयं येन पश्येम तत्परं॥
त्वं हि नारायणः साक्षात् कृष्णद्वैपायनात् प्रभोः।
अवाप्ताखिलविज्ञानस्तत् त्वां पृच्छामहे पुनः। इत्यादिः।

End. अवाप्तवान् पञ्चशिखो देवलादिदमुत्तमं।
सनत्कुमाराद् भगवान् मुनिः सत्यवतीसुतः॥
एतत्पुराणं परमं व्यासः सर्व्वार्थसञ्चयं।
तस्माद् व्यासादहं श्रुत्वा भवतां पापनाशनं॥
ऊचिवान् वै भवद्भिश्च दातव्यं धार्म्मिके जने।
तस्मै व्यासाय मुनये सर्व्वज्ञाय महर्षये॥
पाराशर्य्याय शान्ताय नमो नारायणात्मने।
यस्मात् सञ्जायते कृत्स्नं यत्र चैव प्रलीयते॥
नमस्तस्मै परेशाय विष्णवे कूर्म्मरूपिणे॥

Colophon. इति श्रीकूर्म्मपुराणे उपरिभागे षट्साहस्र्यां संहितायां व्यासगीतासु सप्तचत्वारिंशोऽध्यायः ॥०॥ ४७॥ समाप्तञ्चेदं कूर्म्मपुराणं ॥

---

अतः परं पुराणस्यास्यैका अनुक्रमणिका वर्त्तते। सा तु पृष्ठैकमितेति शं।

विषयः। १, २ अ०,—सत्यवतीतनयेन सह ऋषीणां संवादः। सनत्कुमार-सनन्दन-सनकप्रभृतीनां नरनारायणस्वरूपदर्शनक्षणे चणदेशभूषणस्य प्रादुर्भाव प्रेक्ष्य तत्स्तवनं। तेषां निर्व्वन्धातिशयेन अन्धकरिपोरात्मतत्त्वज्ञानकथनं। तत्र ब्रह्मणो निर्व्विशेषत्वं। संसारस्याज्ञानमूलत्वं। आत्मस्वरूपं। साङ्ख्ययोगमाहात्म्यञ्च।

३, ४, ५ अ०,—प्रधानपुरुषकालानामनादित्वं। सर्व्वेभ्यः शर्व्वस्य परमत्वं। तस्य परममाहात्म्यादिकीर्त्तनञ्च। ब्रह्मविष्णुरुद्राणां तदात्मकत्वं। व्यासकृतशशिशेखरपरमरूपवर्णनं। तद्गुणगानं। तस्य जगदात्मकत्वकीर्त्तनञ्च।

६ ७, ८, ९ अ०,—ईश्वरगीता। तत्र महादेवमाहात्म्यं। विभूतियोगः। चतुर्व्विंशतितत्त्वानि। पाशनिरूपणं। अविद्यादिपञ्चविधक्लेशकथनं। मूलप्रकृतिस्वरूपं। पुनरीश्वरमाहात्म्यं। नित्य-निरञ्जन-निष्कामस्य कामरिपोः कथं विश्वरूपत्वमिति प्रपञ्चः। तद्दर्शनोपायः। कैवल्यस्वरूपकीर्त्तनञ्च।

१०, ११ अ०,—ईश्वरयोगप्रशंसा। अपरयोग-महायोगयोर्लक्षणं। अन्यविधयोगनिन्दा। प्राणायामादियोगाङ्गानि। चित्तशुद्ध्युपायः। अहिंसालक्षणं। वैधहिंसाया अहिंसात्वं। सत्यलक्षणं। स्तेयास्तेयब्रह्मचर्य्य-परिग्रहाणां लक्षणं। योगसिद्ध्युपायः। तपस्या-स्वाध्याययोर्लक्षणं। वाचिकोपांशुमानसानां स्वाध्यायभेदानां लक्षणं। सन्तोष-शौच-शौचभेदानां लक्षणं। उत्तमादिभेदेन प्राणायामत्रैविध्यं। पुनस्तस्य सगर्भ-गर्भभेदात् द्वैविध्यलक्षणादिः। तत्सञ्ज्ञानिरुक्तिः। रेचक-पूरकादीनां लक्षणं। आसनादीनां विभागकथनं लक्षणञ्च। योगसाधनप्रकारः। एतत्फलश्रुतिकीर्त्तनञ्च। ईश्वरगीता समाप्तिः।

१२, १३ अ०,—ब्रह्मयोगकथनं। तत्र उपनयनकालः। उपवीतलक्षणभेदाः। तद्धारणप्रकारादिः। मेखला। प्रातःकृत्यादिकथनं। गुर्व्वादीनामभिवादनप्रकारः। ब्राह्मणक्षत्रियादिषु कुशलादिजिज्ञासानियमः। गुरवः। तेषां पत्न्यः। एतैः सार्द्धमुपवेशनादिनियमः। सर्व्वत्र मातुः श्रेष्ठत्वं। अग्रजस्यावमाननायां दोषः। पितृव्य-मातुलादीनां पुरतः प्रत्युत्थाय 'असावहमिति' कथनौचित्यं। भिक्षादीनां नियमकथनञ्च। उच्छिष्टादिविवेचनं। विण्मूत्रादित्यागस्थाननियमादिकथनं।

१४ अ०,—गुरुशुश्रूषणप्रकारः। ब्रह्मचारिणो नृत्यगीतद्यूतादिवर्ज्जनावश्यकता। उत्पथादिप्रतिपन्नगुरुपरित्यागकर्त्तव्यता। गुरुपत्नीकृत्यं। तरुण्या गुरुपत्न्याः पाद-

विषयः। स्पर्शपूर्व्वकं प्रणामादिनिषेधः। पितृस्वस्रादिषु मातृवत्सम्मानादिकर्त्तव्यता। वेदाध्ययननियमः। गायत्रीजपप्रकारः। अनध्यायकालादिनिरूपणञ्च।

१५, १६ अ०,—दारपरिग्रहनियमादिः। गार्हस्थ्यधर्म्माः। ब्राह्मणलक्षणं। शमदमादीनां लक्षणं। हिंसामिथ्याऽप्रियवचनादिपरित्याज्यता। प्रतिग्रहनियमः। ब्रह्मस्वापहरणादिनिषेधः। पाषण्डि-वामाचार-पाञ्चरात्राणां वाङ्मात्रेणापि अर्चनप्रतिषेधः। निवासयोग्यदेशनिरूपणादिः। पङ्क्तिभोजनादिनियमः। आत्मप्रशंसापरनिन्दादिवर्ज्जनं। नग्नस्त्रीदर्शन-सस्त्रीकभोजन-मान-मोहादिपरिवर्ज्जनीयता। पादप्रक्षालनशयनस्पर्शनादिनियमः।

१७ अ,—अनापदि शूद्रनटगणिकाद्यन्नभोजने दोषः। मूल्यदानेन शूद्रगृहजातपायसस्नेहपक्वादिद्रव्याणां भोज्यता। पलाण्डु-लसुनादिभक्षणनिषेधः। भावदुष्टान्नादिनिन्दा। आविकादिक्षीरपाननिषेधः। बक-हंसदात्यूहादिमांसाभोज्यता। सशल्कमत्स्यभोजनादिविधिः।

१८ अ०,—ब्राह्मणानां प्रातःकृत्यविधिः। सन्ध्योपासनादीनां कर्त्तव्यता। सूर्य्यहृदयस्तोत्रं। दर्भसूत्राभ्यां विना कर्म्मानुष्ठाने दोषः। मध्याह्नकृत्यं। जपनियमाः। तर्पणविधिः। हरिहरादीनां पूजनविधानं। देवयज्ञपितृयज्ञप्रभृतिपञ्चयज्ञकथनं। हन्तकारलक्षणं। अतिथिपूजावश्यकता।

१९ अ०,—भोजने दिगादिनियमः। सूर्य्यग्रहणादिकाले भोजनकालादिनिरूपणं। भोजनादीनामात्माद्यर्थे निष्फलत्वं। अन्धकारादौ तन्निषेधः। सायाह्नकृत्यं। शयननियमः।

२०, २१, २२ अ०,—नित्यनैमित्तिककाम्यभेदात् त्रिविधश्राद्धकथनं। नक्षत्रवारतिथिविशेषे श्राद्धकरणे फलविशेषकथनं। गयागङ्गाप्रयागादौ तदनुष्ठानफलं। श्राद्धे दानयोग्यफलमूलमत्स्यमांसादिनिरूपणं। पिण्डान्वाहार्य्यकश्राद्धविधानं। पङ्क्तिपावनलक्षणं। पात्रयोग्यब्राह्मणनिर्व्वचनं। पङ्क्तिदूषकलक्षणं। वर्ज्जनीयब्राह्मणनिरूपणं। निमन्त्रणादिविधिः। श्राद्धयोग्यदेशः। तदनुष्ठानप्रकारः। श्राद्धदिने स्त्रीसंसर्गादौ दोषः। आमान्नश्राद्धविधिः। एकोद्दिष्टनान्दीमुखश्राद्धादिकालकथनञ्च।

२३, अ०,—ब्राह्मणादीनां जननमरणशवानुगमनाद्यशौचकथनं। सापिण्ड्यादिनिरूपणं। नैष्ठिक-वनस्थादीनामशौचप्रतिषेधः। अशौचिगृहदानयोग्यद्रव्याणि। पर्णदाहविधिः। आद्यश्राद्धमासिकसपिण्डदानादिविधानञ्च।

२४, २५ अ०,—अग्निहोत्रादिविधानं। श्रुतिस्मृत्योरभावे शिष्टाचारस्य प्रामाण्यं। शिष्टलक्षणं। साधकाऽसाधकभेदेन द्विविधगृहस्थकथनं। आपत्काले ब्राह्मणस्य क्षत्रियवृत्तिराश्रय एवं क्षत्रियस्य वैश्यवृत्त्यवलम्बनमित्यादिकथनं।

विषयः। २६, २७ अ०,—दानधर्म्मकीर्त्तनं। दानलक्षणं। नित्यनैमित्तिकादिभेदेन तत्-त्रैविध्यं। तत्र तिथ्यादिविशेषे अन्नजलभूमिदानादिफलश्रुतिः। पात्रविवेचनं। दानादाननियमाः। वानप्रस्थाश्रमकर्म्मनिरूपणं। तपश्चरणप्रकारः।

२८, २९ अ०,—सन्न्यासग्रहणसमयः। ज्ञानसन्न्यासि-वेदसन्न्यासिप्रभृतिकथनं। सन्न्यासधर्म्मनिरूपणं। तत्र भोजनादिनियमः। अलाबुपात्रादिपरिग्रहः। ध्यान-प्रकारः। स्त्रीसंसर्गादिनिषेधश्च।

३०, ३१, ३२, ३३, ३४ अ०,—महापातकादिप्रायश्चित्तकीर्त्तनं। ब्रह्महत्याप्राय-श्चित्तं। शिवकृतब्रह्मशिरश्छेदनवृत्तान्तकथनपूर्व्वकं कपालमोचनतीर्थमाहात्म्य-कीर्त्तनं। सुरापान-सुवर्णापहरणमातृस्वस्रादिगमनप्रभृतीनां प्रायश्चित्तकथनं। जीवहिंसावृक्षादिच्छेदनाभक्ष्यभक्षणादीनां प्रायश्चित्तकथनं। पतिव्रताप्रशंसा। अत्र सीताया वह्निशुद्धिवृत्तान्तकीर्त्तनञ्च।

३५, ३६ अ०,—गया-प्रयाग-त्रियम्बक-सोमेश्वर-विजय-पुरुषोत्तम-गोकर्ण-कुब्जाम्र-कोकामुख-शालग्राम-हयतीर्थ-पुष्कर-सप्तसारस्वतप्रभृतिनानाविधतीर्थविवरणं। तत्र महादेवेन सह कङ्कणकमुनेः संवादकथनं। पुना रुद्रकोटि-मधुवन-कालञ्जर-प्रभृतितीर्थवृत्तान्तः। तत्र कालञ्जरतीर्थकथनप्रसङ्गेन कालेन समं श्वेतराजसंवाद-कीर्त्तनञ्च।

३७ अ०,—केदार-ब्रह्मावतरण-मगधारण्य-महातीर्थ-श्रीपर्व्वत-गोदावरी-कावेरी-प्रभृतितीर्थकथनं। पुनश्चन्द्र-पुण्डरीक-ब्रह्म-ब्रह्मप्रस्रवण-व्यास-यमुनाप्रभ-कुबेरतुङ्गो-त्तमाङ्ग-कालसर्पिर्द्दशार्ण-कनकनन्दा-वदरिकाश्रमप्रभृतितीर्थानि।

३८, ३९, ४० अ०,—स्त्रीरूपधारिणं गिरिधरं पार्श्वतो निधाय आकलित-जातरूप-रूपस्य विरूपाक्षस्य देवदारुवनप्रवेशपूर्व्वकं मोहितमुनिकुमारीकुमारवृन्दस्य च वशिष्ठाश्रमप्रवेशः। अरुन्धत्या कृतातिथ्यस्य च तस्य ततो विनिष्क्रम्य लिङ्गोत्पा-टनादिपुरःसरं मुनिसमाजादपसरणं। ब्रह्मोपदेशेन मुनीनां शिवलिङ्गोपासना। गिरिजया सह गिरिशस्य तत्र आविर्भावः। स्तवनेन प्रीतस्य तस्य मरीच्यादि-समीपे तत्त्वज्ञानकीर्त्तनञ्च।

४१, ४२, ४३, ४४, ४५ अ०,—नर्म्मदामाहात्म्यं। माहेश्वर-पुष्करिणी-शक्र-ऋषि-ऋण-दीप्तेश्वर-व्यास-मातृ-सोम-काम-शुक्ल-गणेश्वर-भृगु-गौतमेश्वर-हंसप्रभृतिनर्म्म-दास्थतीर्थमाहात्म्यं। नैमिषारण्यमाहात्म्यं। नैमिषेतिसञ्ज्ञाविवरणं। जप्येश्वरमा-हात्म्यकथनावसरे शिवानुग्रहेण शिलादस्य भूमिकर्षणकाले पुत्रलाभवृत्तान्तकी-र्त्तनं। स तु कुमारः शिवाराधनेन नन्दीशत्वं प्रापेति कथनञ्च। जप्येश्वरसमीपस्थ-पञ्चनदमहाकालप्रभृतितीर्थमाहात्म्यकथनं।

४६, ४७ अ०,—नित्यनैमित्तिकप्राकृतात्यन्तिकभेदेन चतुर्व्विधप्रलयस्वरूपकीर्त्तनं। प्रलयकालवर्णनं। वराहकल्पादिकथनं। प्रतिसर्गप्रक्रियाकीर्त्तनं। ब्रह्मादिसर्व्वदेवान् परित्यज्य शिवाराधनकर्त्तव्यता। जगतो ब्रह्ममयत्वं। ऋषीणां कूर्म्मरूपभगवत्स्तुतिः। एतत्पुराणसङ्क्षिप्तकथा। एतत्पठनपाठनश्रवणादिफलकीर्त्तनञ्च।

---

## No. 1268. रामायणतत्त्वदीपिका।

Substance, country-made paper, 14 × 7 inches. Folia, 163. Lines, 6 on a page. Extent, 4,063 s'lokas. Character, Nágara. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Correct.

*Rámáyaṇá-tattva-dípiká.* A commentary on the Rámáyaṇa of Válmíki. By Mahes'vara Tírtha, disciple of Náráyaṇa Tírtha. The MS. comprises only the Yuddha Káṇḍa of the text.

Beginning. अथ श्रीमद्युद्धकाण्डे व्याख्येयानि व्याक्रियन्ते। एवमपारं पारावारं गोवत्सपदवत्समुत्तीर्य्य निरातङ्कं लङ्कां प्रविष्टेन सीतान्वेषणपूर्व्वकमशोकवनभङ्गादिकमतिमानुषं पौरुषं कृत्वा प्रतिनिवृत्तेन हनूमता प्रत्यभिज्ञानप्रदानपूर्व्वकमभिभाषितं सीतावृत्तान्तं श्रुत्वा रामस्तदाकर्णनमुदितमनाः, "कृतकार्य्ये भृत्यजने स्वामिना एवं भवितव्यम्" इति सदाचारमुपदेष्टुं सुग्रीवादिहरिवीराणामुत्साहमुत्पादयितुञ्च समाहृतप्रेयसीवृत्तान्तं हनूमन्तमस्तौषीदित्याह,—श्रुत्वेति। इत्यादिः।

End. शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा॥ इति वचनात्।

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीनारायणतीर्थस्वामिशिष्य-श्रीमहेश्वरतीर्थविरचिते श्रीमद्रामायणतत्त्वदीपिकायां युद्धकाण्डे एकत्रिंशोत्तरशततमः सर्गः॥ ॥१३१॥
महेशतीर्थरचिता रामपादसमर्पिता।
टीका श्रीयुद्धकाण्डस्य समाप्ता तत्त्वदीपिका॥

विषयः। वाल्मीकिरामायणयुद्धकाण्डव्याख्यानं।

---

## No. 1269. रामायणतत्त्वदीपिका ।

Substance, country-made paper, 14 × 7 inches. Folia, 138. Lines, 5 on a page. Extent, 3,050 s'lokas. Character, Nágara. Date, S. M. 1852. Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Correct.

*Rámáyaṇa-tattva-dípiká.* The last volume of the work described in the last preceding No. It comprises the Uttarakáṇḍa of the text.

Beginning. श्रीदुत्तरकाण्ड + + बहवः प्रक्षिप्तसर्गा इति
व्याख्याकर्तृभिरेव निपुणैस्तेषां न टीका कृता ।
तेषां भावमशेषमत्र महतां ज्ञाते मया + + +
सर्गाणां न कृता सदीक्षणवशात् टीकेति विज्ञायतां ॥
एवं श्रीरामचन्द्रहितावतारोद्योगप्रभृतिश्रीरामाभिषेकपर्य्यन्तां कथां षड्भिः काण्डैरुपवर्ण्य अतः परं सीतारामयोर्यथार्थं प्रका + + + रावणेन्द्रजिद्बालिप्रभावकथनेन रामलक्ष्मणयोः प्रशंसाञ्च कर्त्तुं प्रथमं मुनीनामागमनमाह,—
प्राप्तेति । इत्यादिः ।

End. तद्रामायणकाव्यं ब्रह्मा अन्वमन्यत सकलपुरुषार्थसाधकत्वेन अङ्गीकरोतिस्म इत्यर्थः ।

Colophon. इति परमहंसपरिव्राजकाचार्य्यश्रीनारायणतीर्थशिष्यमहेश्वरतीर्थविरचितश्रीरामायणतत्त्वदीपिकायां दशोत्तरशततमः (सर्गः) ॥ ११० ॥
महेशतीर्थरचिता रामपादसमर्पिता ।
टीका तूत्तरकाण्डस्य समाप्ता तत्त्वदीपिका ॥
श्रीरामायणसिन्धुमध्यमसकृत्संविश्य तत्रोद्भवा-
न्युत्कृष्टानि पदार्थरत्ननिकराण्युद्धृत्य सद्भिः पुरा ।
टीकासम्पुटसञ्चितानि निपुणैस्तान्येव लब्ध्वा मया
श्रीनारायणतीर्थरामगुरुसत्पादार्पितान्यादरात् ॥
श्रीरामायणटीकेयं महेशयतिना कृता ।
शिवरामेण यतिना + + + + + कारिता ॥
यादृशी पुस्तिका दृष्टा तादृशी लिखिता मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥
शुभमस्तु सं(वत्) १८५२ ।

विषयः । वाल्मीकिरामायणोत्तरकाण्डव्याख्यानं ।

## No. 1270. वराहपुराणं ।

Substance, country-made yellow paper, 12¼ × 9¼ inches. Folia, 277. Lines, 31 on a page. Extent, 9,123 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Verse. Incorrect.

*Varáha Puráṇa.* The twelfth of the eighteen great Puráṇas attributed to Vyása. The following is Professor Wilson's account of this work:

"It is narrated by Vishṇu as Varáha, or in the boar incarnation, to the personified Earth. Its extent, however, is not half that specified; little exceeding ten thousand stanzas. It furnishes, also, itself, evidence of the prior currency of some other work, similarly denominated; as, in the description of Mathurá contained in it, Sumantu, a Muni, is made to observe: "The divine Varáha in former times expounded a Puráṇa, for the purpose of solving the perplexity of Earth."

"Nor can the Varáha Puráṇa be regarded as a Puráṇa agreeably to the common definition; as it contains but a few scattered and brief allusions to the creation of the world and the reign of kings: it has no detailed genealogies, either of the patriarchal or regal families, and no account of the reigns of the Manus. Like the Linga Puráṇa, it is a religious manual, almost wholly occupied with forms of prayer and rules for devotional observances, addressed to Vishṇu; interspersed with legendary illustrations, most of which are peculiar to itself, though some are taken from the common and ancient stock. Many of them, rather incompatibly with the general scope of the compilation, relate to the history of S'iva and Durgá. A considerable portion of the work is devoted to descriptions of various Tírthas, places of Vaishṇava pilgrimage; and one of Mathurá enters into a variety of particulars relating to the shrines of that city, constituting the Mathurá Máhátmya.

"In the sectarianism of the Varáha Puráṇa there is no leaning to the particular adoration of Kṛishṇa; nor are the Rathayátrá and Janmáshṭamí included amongst the observances enjoined. There are other indications of its belonging to an earlier stage of Vaishṇava worship; and it may, perhaps, be referred to the age of Rámáṇuja, the early part of the twelfth century." *Vishṇu Puráṇa*, p. LXX.

The guess about the date, as already elsewhere noticed, is wide of the mark. The MS. comprises 165 chapters numbered irregularly, and sometimes incorrectly. The subjects of these chapters have been detailed below in Sanskrit.

Beginning. नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
नमस्तस्मै वराहाय लीलयोद्धरते महीं ।
खुरमध्यगतो यस्य मेरुः खणखणायते ॥
दंष्ट्राग्रेणोद्धृता गौरुदधिपरिवृता पर्व्वतैर्निम्नगाभिः
साकं मृत्पिण्डवत् प्राग्बृहदुरुवपुषानन्तरूपेण येन ।
सोऽयं कंसासुरारिर्मधुनरकदशास्यान्तकृत्सर्व्वसंस्थः
कृष्णो विष्णुः सुरेशोनुदतु मम रिपूनादिदेवो वराहः ॥
यः संसारार्णवे नौरिव मरणजराव्याधिनक्रोर्म्मिभीमे
भक्तानां व्याधिहर्त्तासुरनरकदशास्यान्तकृत्कोलरूपी ।
विष्णुः सर्व्वेश्वरोऽयं यमिह कृतधियो लीलया प्र स्रुवन्ति
मुक्तात्मानोऽनपायं भवति प्रणुदितारातिपक्षः क्षितीशः ॥
यस्मिन् काले क्षितिः पूर्व्वं कल्पे वराहरूपिणा ।
उद्धृतार्थकृथो भक्त्या पप्रच्छ परमेश्वरं ॥
धरण्युवाच । कल्पे कल्पे भवानेवं मां समुद्धरति प्रभो । इत्यादिः ।

End. एषा चेयं वराहाख्या वराहस्य सदा प्रिया ।
य एतां द्विजमुख्याय वाचकाय ददाति च ॥
स राज्यमतुलं भुक्त्वा कुलैः सार्द्धं व्रजेच्च मां ।
लिखितं तिष्ठते गेहे यस्य तस्य स्वयं हरिः ।
तिष्ठति स भवान् रुद्रो ब्रह्मा चैवात्र तिष्ठति ॥

Colophon. इति (श्रीवराहपुराणे) भगवच्छास्त्रे वराहपुराणं समाप्तं ॥

विषयः । १ प्रथमे अध्याये,—धरणीवराहसंवादः । धरणीकर्त्तृकवराहस्तुतिः ।
२ अ०,—पुराणलक्षणकथनं । आदिसृष्टिकथनं । तत्र प्रकृतिपरिणामेन बुद्ध्यादिसृष्टिकथनं । रुद्रादीनामुत्पत्तिकथनादिः । दक्षादीनामुत्पत्तिकथनं । नारायणनामनिरुक्तिः । विस्तरेण सृष्टिप्रक्रियाकथनं । नवविधसृष्टिकथनं । ब्रह्मणो रुद्रादिसृष्टिः । स्वायम्भवमनुवंशकीर्त्तनं । प्रियव्रतसमीपे नारदस्य सरसि सावित्रीदर्शनादिवृत्तान्तवर्णनं । सावित्र्यङ्गे वेददर्शनादिविवरणकथनञ्च ।
३ अ०,—नारदस्य नामव्युत्पत्तिः पूर्व्वजन्मवृत्तान्तस्य च वर्णनं ।
४ अ०,—दशावतारकथनं । ईश्वरः पञ्चभूतमय इत्यादिकीर्त्तनं । अश्वशिरसो राज्ञ उपाख्यानं । तत्र ब्राह्मणवेशेन उपस्थितयोः केशवकेशववाहनयोः स्वरूपप्रदर्शनपूर्व्वकं ब्रह्मादीनां सर्व्वेषां विष्ण्वात्मकत्वप्रकाशः ।

विषयः। ५ अ०,—किं कर्म्मशीलो मोक्षभागी उत ज्ञानी इत्यादिनिरूपणं। रैभ्यवृहस्पतिसंवादः। लुब्धकसंयमनवृत्तान्तः। योगकथनं। योगेन अश्वशिरसः कृष्णप्राप्तिः।

६ अ०,—काश्मीराधिपतिर्वसुरेव लुब्धक इत्यादिवृत्तान्तवर्णनं। पुण्डरीकाक्षपारस्तोत्रकथनं। व्याधवाक्यात् वसोः पूर्व्वजन्मवृत्तान्तस्मरणं।

७ अ०,—वसोः स्वर्गारोहणं श्रुत्वा रैभ्यस्य तपस्याचरणं। तत्र तेन सह सनत्कुमारसंवादः। विशालाधिपतेर्विशालन्दपतेरुपाख्यानं। विष्णुप्रसादाद् विशालस्य मोक्षप्राप्तिः।

८ अ०,—रैभ्ये विमुक्ते तद्देहस्थः पापपुरुषः धर्म्मव्याधो बभूवेत्यादिवृत्तान्तकथनं। पशुहिंसादोषकथनं। धर्म्मव्याधो विष्णुस्तवनेन तन्मयोऽभूदित्यादिकीर्त्तनं।

९ अ०,—प्रणवमाहात्म्य। ओँकाररूपो हरिरितिकथनं। ततो लोकस्य सृष्टिः। वेदाविर्भावः। मत्स्यरूपेण भगवता वेदोद्धारः। तस्य स्तवनकीर्त्तनञ्च।

१० अ०,—आदिवराहसमीपे देवानां वरग्रहणं। सुप्रतीकोपाख्यानं। दुर्ज्जयकर्तृकस्वर्गपराजयः। तेन सह विद्युत्सुविद्युन्नामकासुरयोः संवादः। हेतिप्रहेतिभ्यां दुर्ज्जयसमीपे पराजितानां देवानां विष्णुसमीपगमनादिवृत्तान्तकथनं। दुर्ज्जयाय हेतिप्रहेतिभ्यां कन्यायुगलसम्प्रदानं। सुकेशीमिश्रकेश्योर्गर्भे तस्य पुत्रयुगजननादिकथनं।

११ अ०,—दुर्ज्जयस्य गौरमुखमुनेराश्रमप्रवेशः। भोजनं सर्व्वेषां कारयिष्यामीति मुनिवचनं श्रुत्वा तस्य कोपः। गौरमुखः विष्णुस्तवनेन चिन्तामणिं प्राप्य तत्प्रभावाद् दिव्यपुरीं निर्म्माय सबलस्य राज्ञः परमातिथ्यं कृतवान्। ततो बलात्कारेण मणिग्रहणोद्यते तस्मिन् गौरमुखस्य मन्यूद्भूतेन सैन्येन राजसेना हतेति वर्णनं। नारायणस्तु गौरमुखकृतस्तवेन तत्रागत्य निमिषेण सुदर्शनेन दुर्ज्जयं जघान, तेन च तत्स्थानं नैमिषेतिसञ्ज्ञया विख्यातमित्यादिकथनञ्च।

१२ अ०,—दुर्ज्जयनिधनं निशम्य सुप्रतीकस्य श्रीरामस्तवनं। तस्य श्रीरामदर्शनादिविवरणं।

१३ अ०,—गौरमुखस्य भगवदाराधनार्थं प्रभासतीर्थगमनं। तेन सह मार्कण्डेयस्य संवादः। पितृलोकसृष्टिकथनं। तेषां नाम कथनं। तिलोदकादिदानं। पितृगीतादिकथनञ्च।

१४ अ०,—श्राद्धे ब्राह्मणनिरूपणं। श्राद्धे पात्रकरणायोग्यनिरूपणञ्च। तत्र निमन्त्रणप्रकारकथनादिः। श्राद्धकथनं। तत्र मांसनिरूपणादिः। विहिताविहितद्रव्यकथनं। श्राद्धकालकथनादिकञ्च।

१५ अ०,—गौरमुखः श्राद्धैः पितृलोकान् सन्तर्प्य भगवन्तं स्तुत्वा च परमां गतिं प्रापेत्यादिकथनं।

विषयः । १६ अ०,—विद्युत्सुविद्युतोर्बधार्थं देवानां यज्ञकरणोद्योगः। गवां रक्षार्थं सरमानियोगः। गवामसुरसान्निध्यगमनादिकथनं। सरमाश्वासनं। देवानां यागकरणं। असुराणां पराजयकथनं।

१७ अ०,—प्रजापालोपाख्यानं। आश्रमागतेन तेन सार्द्धं महातपसो मुनेः संवादः। अहं प्रधानोऽहं प्रधान इति विवदमानानां देवानां वृत्तान्तकीर्त्तनं। विष्णोः प्राधान्यकथनादिः।

१८ अ०,—अग्न्यादीनामुत्पत्तिकथनादिः। अग्नेर्गार्हपत्यादिनामनिरुक्तिः।

१९ अ०,—ब्रह्मणः कोपात् प्रतिपदि तिथावग्नेरुत्पत्तिकथनं। तत्र हवने सर्व्वेषां देवानां प्रीतिरिति कथनादिः।

२० अ०,—अश्विनीकुमारयोर्जन्मविवरणं। तयोः पितामहस्तुतिः।

२१ अ०,—रुद्रोत्पत्तिकथनं। रुद्रनामनिर्व्वचनं। ब्रह्मणो रुद्राय गौरीसम्प्रदानं। रुद्रे जलप्रविष्टे गौरीमन्तःशरीरगां कृत्वा ब्रह्मणः पुनर्दक्षादिसृष्टिकरणकथनं। दाक्षायणीजन्मविवरणं। दक्षयज्ञवर्णनं। रुद्रपार्षदैः सह सुराणां युद्धकथनं। हरिहरयोर्युद्धवर्णनं। शिवभागदानपूर्व्वकं देवानां तत्स्तुतिः। दक्षस्य रुद्राय गौरीसम्प्रदानं।

२२ अ०,—दक्षस्य वैरमनुस्मृत्य गौर्य्या हिमालये जन्मग्रहणं। गौर्य्यास्तपश्चरणं। महादेवेन सह तस्या विवाहवर्णनं। तृतीयायां तिथौ गौर्य्या जन्मकथनं। तत्तिथिमाहात्म्यकथनादिः।

२३ अ०,—गणेशोत्पत्तिविवरणं। तस्य गजवक्त्रत्वादिकारणकथनं। विनायकानामुत्पत्तिकथनं। तेषामाधिपत्ये गणेशस्याभिषेकविवरणं। देवगणकृतगणपतिस्तोत्रं।

२४ अ०,—नागोत्पत्तिविवरणं। ब्रह्मकर्त्तृकं तेषां निवासस्थानादिकथनं।

२५ अ०,—कार्त्तिकेयोत्पत्तिविवरणकथनादिः। देवगणकृतमहेशस्तुतिः। स्कन्दोत्पत्तिः। एतत्फलश्रुतिः।

२६ अ०,—सूर्य्योत्पत्तिविवरणकथनादिः। देववृन्दकृतसूर्य्यस्तुतिः।

२७ अ०,—अन्धकविप्रकृतानां देवानां दैन्यवर्णनं। गिरिशं निहत्य गिरिजां हरिष्यामीति अन्धकस्य तम्प्रति युद्धयाचा। विष्ण्वादीनामन्धकेन सार्द्धमायोधनं। शूलेन विद्धस्यान्धकस्य भूमिस्पृष्टशोणिताद् बहूनामन्धकानामुत्पत्तिः। मातृगणकर्त्तृकं तेषां शोणितपानं। कामादिगुणानामुत्पत्तिकथनादिः।

२८ अ०,—सिन्धुद्वीपराजविवरणं। तस्य पूर्व्वजन्मनि वृत्तत्वकथनं। तपस्यतः सिन्धुद्वीपस्य वेत्रवतीनद्या मनुष्यरूपायाः पाणिग्रहणं। तस्यां वृत्रासुरस्य जन्म।

विषयः। तेन सह देवानां युद्धकीर्त्तनं। कात्यायन्या उत्पत्तिकथनं। महादेवकृतदेवीस्तव-
नादिकथनं।

२९ अ०,—दिशामुत्पत्तिकथनं। तासां लोकपालैः सह विवाहकथनादिः।

३० अ०,—धनदोत्पत्तिविवरणं। तन्नामनिर्व्वचनं। तत्सेवार्थं तिथिनिरूपणं।

३१ अ०,—ईश्वरस्य विष्णुरूपेण प्रादुर्भावकथनं। तस्य नाभिदेशात् कमलरूपायाः पृथिव्या उत्पत्तिकथनादिः। कर्णिकारूपसुमेरुमध्ये ब्रह्मणो जन्मकथनादिः। तत्कृत-विष्णुस्तुतिः।

३२ अ०,—धर्म्मोत्पत्तिविवरणकथनादिः। युगविशेषे तस्य पादनिरूपणं। चन्द्रेण कृते ताराहरणे धर्म्मस्य वनप्रवेशः। तत्र देवानां स्तुतिकथनादिः।

३३ अ०,—रुद्राणामुत्पत्तिकथनादिः। पशुपतिरूपशिवस्तोत्रं।

३४ अ०,—पितृसर्गकथनादिः। तत्र तर्पणादितिथिकथनं।

३५ अ०,—चन्द्रम्प्रति दक्षशापविवरणं। समुद्रमन्थने तस्योत्पत्तिकथनादिः।

३६ अ०,—सुप्रभादिनृपाणां चरितकथनादिः। गोविन्दनामकहरिस्तुतिः।

३७ अ०,—भगवतो भावसाध्यताकथनादिः। ब्रह्मपुत्रस्य अवनेर्व्याधेन सह संवादः।

३८ अ०,—व्याधस्य तपस्यावर्णनादिः। तस्य दिव्यदेहप्राप्तिकथनादिः।

३९ अ०,—भगवत्साधनोपायवर्णनं।

४० अ०,—धरणीव्रतकथनादिः। तस्य फलश्रुतिकथनादिः। अत्र मार्गशीर्षे मासि महामीनरूपस्य भगवतः पूजाविधानं।

४१ अ०,—पौषशुक्लद्वादश्यां कूर्म्मरूपस्य तस्य पूजनं।

४२ अ०,—माघशुक्लद्वादश्यां वराहरूपस्य तस्य पूजनकथनादिः।

४३ अ०,—फाल्गुनशुक्लद्वादश्यां नृसिंहरूपस्य तस्य पूजाकथनादिः। अत्र पार-सत्यराजोपाख्यानं।

४४ अ०,—एवं चैत्रमासे वामनरूपस्य तस्य पूजनकथनं। अत्र हयाश्वराजोपाख्यानं।

४५ अ०,—वैशाखमासे परशुरामरूपस्य तस्य पूजनं। अत्र वीरसेनराजोपाख्यानं।

४६ अ०,—ज्यैष्ठमासे रामलक्ष्मणपूजा। अत्र दशरथोपाख्यानं।

४७ अ०,—आषाढ़मासे श्रीकृष्णपूजनं। अत्र वसुदेवोपाख्यानं।

४८ अ०,—श्रावणमासे बुद्धपूजनं। अत्र नृगराजोपाख्यानं।

४९ अ०,—भाद्रमासे कल्किपूजनं। अत्र विशालराजोपाख्यानं।

५० अ०,—आश्विनमासे पद्मनाभपूजा। अत्र भद्राश्वराजोपाख्यानं।

५१ अ०,—कार्त्तिकमासे द्वादशीव्रतमाहात्म्यकथनं। इति धरणीव्रतं।

५२ अ०,—भद्राश्वागस्त्यसंवादः। दशादशस्य विभागकथनं। योगकथनं। अगस्त्यगीता।

विषयः। ७४ अ०,—ब्रह्मविष्णुरुद्राणामभेदकथनादिः।
७५ अ०,—रुद्रस्य जलमज्जनविवरणकथनादिः। तत्र रुद्रकृतविष्णुस्तुतिकथनादिः।
७६ अ०,—सङ्क्षेपेण मनुवंशकथनादिः। सप्तद्वीपाधिपादिकथनं। नववर्षाधिपकथनादिः। भरतवंशकीर्त्तनं।
७७ अ०,—जम्बूद्वीपवर्णनं। तत्र पर्व्वतपरिमाणादिकथनं। नद्यादिकथनञ्च।
७८ अ०,—मेरोः पूर्व्वादिदिक्षु देवादीनामालयवर्णनं।
७९ अ०,—सुमेरुपरिमाणादिकथनं। कदम्बजम्बूप्रभृतिवृक्षविवरणं।
८० अ०,—विष्कम्भपर्व्वतचतुष्टयानां परिमाणादिकथनं। चैत्ररथादिवर्णनं। अरुणोदयादिसरोवरवर्णनं। तच्चतुर्द्दिक्षु स्थितानां पर्व्वतानां नामकथनादिः।
८१ अ०,—लक्ष्म्यावासमहापद्मकथनं। विल्ववनकथनादिः। भद्रवनादिवर्णनञ्च।
८२ अ०,—मेरोर्द्दक्षिणप्रदेशे उदुम्बरवनवर्णनं। तत्र कर्द्दमाश्रमकथनं। महावनवर्णनं। किंशुकवनवर्णनादिः। एकशिलोद्देशकथनादिः। तत्र नीलवाससो देवस्य वासस्थानकीर्त्तनादिः। पुरस्थलीवर्णनादिकञ्च।
८३ अ०,—शीताख्यपर्व्वते पारिजातवनवर्णनं। कुञ्जरनामपर्व्वते दानवपुरकथनं। वज्रकपर्व्वते राक्षसानां पुरीकथनादिः। अन्यान्यपर्व्वतेषु अन्येषां पुरादिवर्णनं।
८४ अ०,—रुद्रक्षेत्रादिवर्णनं।
८५ अ०,—कैलासपर्व्वतवर्णनं। पुष्पकविमानकथनं। निधिकथनं। इन्द्रादिलोकपालानां निवासकथनं। गन्धर्व्वनगरादिवर्णनं। उमावने भगवता अर्द्धनारीश्वरत्वमाकलितमित्यादिवर्णनं।
८६ अ०,—नदीनामवतारकथनं। तत्र सोमाख्याकाशसमुद्रकथनादिः।
८७ अ०,—वरगण्डिकावर्णनं। तत्र पुरुषाः श्वेताः पद्मगन्धिनः स्त्रियश्च कुमुदवर्णा इत्यादिकथनं।
८८ अ०,—कुलपर्व्वतकथनादिः। तत्र जनपदनामकीर्त्तनादिः। प्रधानानां नदीनां नामकथनञ्च।
८९ अ०,—वायव्यरम्यकवर्णनं। तत्र महान्यग्रोधकथनं। हिरण्मयवर्षवर्णनादिः। तत्र वृक्षवर्णनादिः। चन्द्रद्वीपकथनं। तत्र चन्द्र(वज्र)कान्तपर्व्वतवर्णनादिः।
९० अ०,—भारतवर्षवर्णनादिः। तत्र कुलपर्व्वतकथनं। नदीकथनं। नदीनामुत्पत्तिस्थानकथनं। शाकद्वीपवर्णनं। ततो जलधाराम्बिकेयप्रभृतिगिरिकथनं।
९१ अ०,—कुशद्वीपवर्णनं। तत्र पर्व्वतवर्षनदीप्रभृतिवर्णनं।
९२ अ०,—क्रौञ्चद्वीपवर्णनं।
९३ अ०,—शाल्मलद्वीपवर्णनं।

विषयः। ९४ अ०,—गोमेदशाकद्वीपवर्णनं।

९५ अ०,—ब्रह्मरुद्रादिदेवानां मध्ये विष्णोः परत्वकथनादिः। प्रमथैः परिवृतस्य पिनाकपाणेः समीपे ब्रह्मणो महिषासुरचेष्टितकीर्त्तनं। त्रिकलादेव्या उत्पत्तिवर्णनं। त्रितनुधारणकथनादिः। सृष्ट्यादिदेवीनां तपस्यादिकथनं।

९६ अ०,—सृष्ट्यादिदेवीनां माहात्म्यादिकथनं। तासां ब्रह्मकृतस्तुतिः।

९७ अ०,—तपस्यन्त्या वैष्णव्याः कोपात् कुमारीणामुत्पत्तिकथनादिः। कुमारीभिः सेव्यमानां तां विलोक्य महिषासुरसमीपे नारदस्य तद्वृत्तान्तकथनादिः।

९८ अ०,—देव्याः समीपे महिषासुरस्य दूतप्रेरणादिः। महिषासुरस्य युद्धयात्रा-वर्णनादिः।

९९ अ०,—महिषासुरस्य सुरलोकाक्रमणवर्णनं।

१०० अ०,—देवीसमीपे दूतस्य महिषासुरजन्मवृत्तान्तकथनं। तेन सह देव्याः परिणयप्रस्तावना। कुपितया देव्या सार्द्धमसुराणां युद्धवर्णनं। महिषासुरबध-कथनं। देव्याः स्तुतिः।

१०१ अ०,—समुद्रजलवासिनो रुरुनामकासुरस्य शक्रादिभिः सह युद्धवर्णनं। देवीहास्योद्भवानां योगिनीनां समीपे असुराणां पराजयः। देवीकर्तृकरुरुबधः। रुद्रस्य देवीस्तोत्रकथनादिः। योगिनीनां तृप्त्यर्थं स्थाननिरूपणादिः। प्रयोजन-वशाद्देकायाः शक्तेस्त्रैविध्यं। त्रिशक्तिमाहात्म्यकथनं।

१०२ अ०,—रुद्रसृष्टिकथनं। तृतीये जन्मनि रुद्रस्य पिङ्गाचलादिकथनं। रुद्रस्य ब्रह्मस्कन्धारोहणं। रुद्रस्य ब्रह्मशिरश्छेदनं। ब्रह्मशापेन कपाललग्नहस्तस्य कपा-लमालिनो महेन्द्रपर्व्वतं गत्वा कापालिकव्रताचरणं। द्विधाभिन्नस्य शिरसः खण्ड-मेकं गृहीत्वा रुद्रस्य विविधतीर्थपर्य्यटनं। कपालमोचनतीर्थकथनादिः। महा-व्रतभग्नकापालादिव्रतकथनं। रुद्रमाहात्म्यकथनं।

१०३ अ०,—सत्यतपोनामकलुब्धकोपाख्यानं। तत्र कदाचित् छिन्नायां तर्ज्जन्यां तस्य भस्मदर्शनादिवृत्तान्तकथनं। वृत्तान्तमिमं निशम्य इन्द्रोपेन्द्रयोः किरात-वराहरूपाभ्यां तत्र प्रवेशादिकथनं। तयोः सत्यतपसे वरदानं। स्वगुरोरारुणे-स्तत्त्वज्ञानमुपलभ्य सत्यतपसो मोक्षप्राप्तिकथनादिः।

१०४ अ०,—वैष्णव्याः शक्तेर्माहात्म्यकथनं। विष्णुपूजाविधिकथनं। दीक्षाकीर्त्तनं।

१०५ अ०,—येन येन द्रव्येण नवग्रहपूजनं कृत्वा यद् यत् फलं भवति तत्प्रकार-कथनादिः।

१०६ अ०,—द्वादशीव्रतमाहात्म्यकथनं। अत्र श्वेतराजोपाख्यानं। श्वेतराज-समीपे वसिष्ठस्य विनीताश्वराजविवरणकीर्त्तनं। दानमाहात्म्यकथनादिः।

विषयः । १०७ अ०,—नष्टचन्द्रसूर्य्यतारकादिसमये पृथिव्या विष्णुस्तुतिः ।

१०८ अ०,—स्तवेन वशीभूतस्य विष्णोर्वराहरूपेण तदुद्धारकथनादिः । विष्णु-सन्निधौ पृथिव्या नानाविषयकप्रश्नकीर्त्तनादिः ।

१०९ अ०,—नाहं यज्ञादिना तुष्यामि किन्तु केवलया भक्त्येति विष्णोः कथनादिः । विष्णुभक्तिमाहात्म्यकथनं । विष्णुपूजाविधानादिकथनं । कर्म्माध्यायकथनं ।

११० अ०,—कर्म्मानुष्ठानविधिकथनादिः । कथं कर्म्म कर्त्तव्यं तत्कथनादिः । दुःख-जनककर्म्मप्रदर्शनं ।

१११ अ०,—द्वात्रिंशद्विधापराधकथनादिः । यथा यथा विष्णुः प्रपद्यते तत्कथनञ्च ।

११२ अ०,—येन प्रकारेण विष्णवे उपचारादिकं दातव्यं, मन्त्रकथनपूर्व्वकं तत्-प्रकारथनं ।

११३ अ०,—विष्णवे दानयोग्यानां फलमूलमांसादीनां नामादिकथनं ।

११४ अ०,—स्नात्वा जलाञ्जलिदानेन विष्णुतर्पणकर्त्तव्यता, तन्मन्त्रकथनञ्च ।

११५, अ०,—विष्णुभक्तानां प्रकृतिकथनादिः । येन येन कर्म्मणा गर्भवासो न भवति तत्कथनं ।

११६ अ०,—येन कर्म्मणा जनः तिर्य्यग्योनित्वं नाधिगच्छति तत्कथनं । कोकामुख-तीर्थमाहात्म्यादिकथनं । अत्र श्येनमत्स्ययोर्वृत्तान्तकथनं । आमिषलोलुपाया-श्चिल्ल्या राजकन्यारूपेण जन्मग्रहणादिविवरणकथनं ।

११७ अ०,—येन कर्म्मणा लोकः परं पदं पश्यति, तत्कथनादिः । माधवादिमास-विशेषे केशवार्च्चनफलकथनं । तत्र द्रव्यविशेषदानफलकथनञ्च ।

११८ अ०,—षट्सु ऋतुषु विष्णोराराधनार्थे कर्म्मविशेषविधानं ।

११९ अ०,—मायावैचित्र्यकीर्त्तनादिः । अत्र सोमशर्म्मोपाख्यानं । विष्णुभक्तदर्शन-वन्दनादिकर्त्तव्यता । मायाचक्रमाहात्म्यादिकथनं ।

१२० अ०,—कुब्जाम्रकतीर्थवर्णनं । एतत्तीर्थोत्पत्तिविवरणं । तत्र मानसतीर्थक-थनं । मायातीर्थकथनं । सर्व्वात्मकतीर्थकथनं । पूर्णमुखतीर्थकथनं । अशोकतीर्थ-कथनं । पुण्डरीकतीर्थकथनं । अग्नितीर्थकथनं । वायव्यतीर्थकथनं । शक्रादि-तीर्थकथनञ्च । एषां माहात्म्यकथनादिः । व्यालीनकुलसंवादकथनं । तयो राजा-पत्यरूपेण जन्मग्रहणवृत्तान्तादिकथनं । कुमारीकुमारयोः तयोः परस्परं विवा-हादिकथनं । एतत्फलश्रुतिकीर्त्तनं ।

१२१ अ०,—गुर्व्वभिगमनप्रकारः । तत्र नियमकथनादिः । दीक्षाविधिः ।

१२२ अ०,—क्षत्रियादीनां दीक्षायां विशेषकथनं । दीक्षितस्य कर्त्तव्यकथनादिः । गलन्तिकाग्रहणकथनं । कङ्कणादिदानमन्त्रकथनं ।

विषयः। १२३ अ०,—यज्ञसूत्रलक्षणतद्दानमन्त्रादिकथनं। सन्ध्याविधानं। दीपदानविधिः। ताम्रभाजनेन विष्णवे द्रव्यादिदानप्रशंसा। ताम्राश्रमे ताम्रोत्पत्तिकथनं। विष्णुभक्तस्य गुडाकेशस्य विष्णुसन्निधौ तच्चक्रोत्कृत्तानां स्वमांसानां ताम्रजननप्रार्थना। तन्मांसानां ताम्रत्वकथनं। रक्तानाञ्च पद्मरागत्वकीर्त्तनं। एवञ्च तस्य अस्थीनि रूप्याणि, मलञ्च कांस्यमभूदिति कथनं।

१२४ अ०,—विष्णुभक्तस्य राजान्नभक्षणे दोषकथनं। तत्र प्रायश्चित्तकथनञ्च।

१२५ अ०,—दन्तकाष्ठाग्रहणे प्रायश्चित्तकथनं।

१२६ अ०,—निधुवनं कृत्वा अकृतस्नानस्य विष्णुपूजने दोषकथनपूर्व्वकं प्रायश्चित्तकथनं।

१२७, १२८ अ०,—शवं स्पृष्ट्वा विष्णुपूजने प्रायश्चित्तकथनं। एवं रजस्वलास्पर्शनप्रायश्चित्तकथनं। मेहनापराधप्रायश्चित्तं। पुरीषोत्सर्गप्रायश्चित्तं। अन्यभाषणप्रायश्चित्तं। नीलवस्त्रपरिधानप्रायश्चित्तं। उपस्पर्शनापराधप्रायश्चित्तं।

१२९ अ०,—क्रोधापराधप्रायश्चित्तकथनं। अकर्म्मण्यपुष्पापराधप्रायश्चित्तं। रक्तवस्त्रपरिधानापराधप्रायश्चित्तं। अन्धकारे भगवत्स्पर्शनापराधप्रायश्चित्तं। कृष्णवस्त्रपरिधानापराधप्रायश्चित्तं। कुक्कुरोच्छिष्टापराधप्रायश्चित्तं। एवं वराहमांसभक्षणप्रायश्चित्तं। जालपादभक्षणप्रायश्चित्तं। प्रदीपस्पर्शनापराधप्रायश्चित्तं। श्मशानगमनापराधप्रायश्चित्तं। पिन्याकभक्षणापराधप्रायश्चित्तं। वराहमांसेन विष्णुतर्पणापराधप्रायश्चित्तं। सुरापानप्रायश्चित्तं। कुसुम्भशाकदानापराधप्रायश्चित्तं। परकीयवस्त्रप्रावरणप्रायश्चित्तं। नवान्नादानापराधप्रायश्चित्तं। गन्धादिकमदत्त्वा धूपदानप्रायश्चित्तं। उपानहापराधप्रायश्चित्तं। भेरीताडनापराधप्रायश्चित्तं। इति द्वात्रिंशद्विधापराधकथनपूर्व्वकं तत्प्रायश्चित्तकथनं।

१३० अ०,—शौकरतीर्थमाहात्म्यादिकथनं। तत्र चक्रतीर्थ-रूपतीर्थ-योगतीर्थप्रभृतीनां माहात्म्यकथनादिः। ब्रह्मदत्तराजोपाख्यानं। तत्पुत्रस्य सोमदत्तस्य मृगयाकथनादिः। शृगालीगृध्रयोर्मानुषजन्मवृत्तान्तादिकीर्त्तनं।

१३१ अ०,—शौकरके तीर्थे खञ्जरीटस्य मृतशरीरं सङ्गृह्य बालानां कलहकथनादिः। खञ्जरीटस्य मानुषजन्मग्रहणादिवृत्तान्तकथनं। एतद्वृत्तान्तफलश्रुतिः।

१३२ अ०,—विष्णुगृहे गोमयलेपनफलश्रुतिः। तत्र गीतकरणफलश्रुतिः। अत्र चण्डालब्रह्मराक्षसयोः संवादकथनं। ब्रह्मराक्षसस्य यज्ञकर्म्मसु मन्त्रपरिभ्रष्टतया स्वावस्थाकथनं। एतत्फलश्रुतिः।

१३३ अ०,—कोकामुख-बदरिकाश्रम-स्वेच्छराजाश्रितलोहाकुलतीर्थेषु विष्णोः सर्व्वदा सान्निध्यकीर्त्तनं। तत्र कोकामुखस्य प्राधान्यकथनं। तत्र जलबिन्दुनामक-

विषयः। तीर्थकथनादिः। विष्णुधारातीर्थकथनं। विन्दुसरस्तीर्थकथनं। सोमतीर्थकथनं तुङ्गकोटतीर्थकथनं। आदित्यन्दाश्रमतीर्थकथनं। पञ्चशिखतीर्थकथनं। गुह्यप्रभतीर्थकथनं। सप्तसामुद्रिकतीर्थकथनं। को+बलतीर्थकथनं। धर्म्मपुरतीर्थकथनं। गङ्गाधारातीर्थकथनं। पञ्चसरतीर्थकथनं। शक्रकुण्डतीर्थकथनं। दंष्ट्राकुण्डतीर्थकथनं। विष्णुतीर्थकथनं। सर्व्वकामिकतीर्थकथनं। मत्स्यशिलातीर्थकथनं। कोकामुखतीर्थे वराहरूपस्य विष्णोरवस्थितिकीर्त्तनं।

१३४ अ०,—वदरिकाश्रमवर्णनं। तत्र ब्रह्मकुण्डाग्निकुण्ड-गरुड़पदेन्द्रलोक-पञ्चसरस्रतुःस्रोत्र-देवाधार-द्वादशादित्यकुण्ड-लोकपाल-वरुण-मानसोद्भेदप्रभृतितीर्थवर्णनं। उर्व्वशीकुण्डतीर्थप्रस्तावे उर्व्वशीवृत्तान्तकथनं।

१३५ अ०,—सान्तःकरणशारीरविज्ञानकथनादिः। अध्यात्मयोगकथनं।

१३६ अ०,—नामसङ्कीर्त्तनादिमाहात्म्यं। चित्तन्यासकथनपूर्व्वकं तत्फलश्रुतिः। योगप्रशंसा। स्त्रीपुंधर्म्मकथनं। ऋतुमत्यभिगमननियममन्त्रादियथनं। ज्ञानयोगमाहात्म्यं। सन्न्यासप्रशंसा।

१३७ अ०,—गुह्यमण्डलवृत्तान्तकथनादिः। वटमूलतीर्थविवरणं। कुम्भीरकनाममहाह्रदविवरणं। कापिलकाननकथनं। महाश्रोत्रादिमहाह्रदकथनं। मन्दारकुण्डादितीर्थकीर्त्तनं।

१३८ अ०,—विस्तरेण मन्दारकुण्डतीर्थवर्णनं। तत्र मन्दारद्रुमवृत्तान्तकथनं। कोटरतीर्थकथनं।

१३९ अ०,—शालग्रामतीर्थवर्णनं। तत्र ब्रह्मर्षेः शालङ्कायनस्य वृत्तान्तकथनादिः। भगवतः शालग्रामेतिनामवृत्तान्तकथनं। तत्र विल्वप्रिय-गुह्यप्रभ-कालह्रदप्रभृतिपञ्चदशतीर्थकथनं। तत्र तत्र फलकीर्त्तनञ्च।

१४० अ०,—महादेवस्य और्व्वाश्रमभस्मीकरणवृत्तान्तवर्ननं। और्व्वाभिशापेन शिवस्य अन्तर्दाहकथनं। विष्णुवचनप्रीतस्य और्व्वस्य उपदेशेन गोनिष्क्रमतीर्थमासाद्य शिवस्य सुरभिदुग्धादिना तापशान्तिवृत्तान्तकथनं। तत्तीर्थमाहात्म्यं। रूपकुण्डतीर्थकथनं। पञ्चवटतीर्थकथनं। पञ्चाननतीर्थकथनं। रुद्रपदब्रह्मशिरःप्रभृतितीर्थकथनं। वराहस्य वासुदेवसञ्ज्ञो भविष्यामीति भाविवृत्तान्तकथनं। मात्सर्य्यस्य दोषाकरत्वकथनादिः। कोटवनतीर्थकथनं। विष्णुसरोनामतीर्थकथनं। एतेषां क्षेत्राणां माहात्म्यकथनं।

१४१ अ०,—गोनिष्क्रमक्षेत्रे अयोमयी भगवत्प्रतिमा वर्त्तते इत्यादिवृत्तान्तकथनं। तत्र पञ्चकुण्डतीर्थमाहात्म्यकथनं। मणिकुण्डध्रुवकुण्डप्रभृतितीर्थवर्णनं। पञ्चाश्वकतीर्थकथनं।

विषयः। १४२ अ०,—द्वापरयुगे यादवोऽहं भविष्यामीति वराहवचनं। दुर्व्वाससः शापेन यदुकुलक्षयो भविष्यतीतिवृत्तान्तकथनञ्च। जाम्बवतीनन्दनस्य शाम्बस्य वृत्तान्तकथनादिः। द्वारकायां पञ्चसरो नामतीर्थमस्तीति तद्विवरणकथनादिः। प्रभासतीर्थविवरणं। पञ्चकुण्डतीर्थकथनं। हंसकुण्डतीर्थविवरणं। ब्रह्मसङ्गमनतीर्थविवरणं। कदम्बकुण्डक्षेत्रविवरणं। प्रद्युम्नभेदनक्षेत्रविवरणं। नारायणसङ्गमक्षेत्रविवरणं। रैवतक्षेत्रकथनं। तत्र ऊर्द्धविल्वादिवृक्षविवरणं। विष्णुचङ्क्रमणक्षेत्रकथनं। तत्र अश्वत्थवृक्षविवरणं। द्वारकामाहात्म्यं। ब्रह्मसरोनामकतीर्थकथनं। सङ्गमनक्षेत्रवर्णनं। रामसरोनामकतीर्थकीर्त्तनं।

१४३ अ०,—समुद्रमलययोर्मध्ये दूरं नाम स्थानं मे प्रियमस्ति। तत्र सूर्पारकं नाम क्षेत्रं परशुरामस्य आश्रमो भविष्यतीति वराहवचनं। जयकुण्डतीर्थकथनं। तत्र तत्र फलश्रुत्यादिकथनं।

१४४ अ०,—म्लेच्छमध्ये लोहाकुलतीर्थवर्णनं। तत्र भगवन्मूर्त्तिकथनं। तत्र च भगवदस्त्रादिकथनं। नारदकुण्डकथनं। पर्व्वतकुण्डकथनं। पञ्चशूलक्षेत्रकथनं। सप्तर्षिकुण्डकथनं। शरभङ्गकुण्डकथनं। आङ्गिरसकुण्डकथनं। बृहस्पतिकुण्डकथनं। वैश्वानरकुण्डकथनं। उमाकुण्डकथनं। माहेश्वरकुण्डकथनं। ब्राह्मणकुण्डकथनं। तत्र ऋग्वेदादिधाराकथनं। एतेषां माहात्म्यकथनं।

१४५ अ०,—मथुराक्षेत्रकथनं। यमुनायां कुण्डावर्त्ततीर्थकथनं। वृन्दावनकथनं। तत्र शिलोच्चयतीर्थवर्णनं। अमितप्रभाशोकवृक्षकथनं। भाण्डीरवनकथनं। तत्रस्थवटवृक्षकथनं। रक्तशिलापट्टविवरणं। यमलार्ज्जुनकुण्डकथनं। अर्कस्थलकथनं। वीरस्थलकथनं। कनकक्षेत्रकथनं। क्रीड़नकक्षेत्रकथनं। सोमकुण्डकथनं। तालकुण्डकथनं। पिण्डारकक्षेत्रकथनं। जम्बीरवटुकक्षेत्रकथनं। कुन्दारोहणकक्षेत्रकथनं। बल्लकनक्षेत्रकथनं। नागजालोम्भककुण्डकथनं। परकुण्डकथनं। विन्दुप्रभकुण्डकथनं। शान्तरसतीर्थकथनं। ताम्रवनककनं। शक्रक्रीड़नकतीर्थकथनं। वारुण-कौवेरप्रभृतितीर्थकथनं। कालीयह्रदकथनं। तत्र कदम्बवृक्षकथनं। स्नावनकक्षेत्रकथनं। सप्तसामुद्रकतीर्थकथनं। मथुरामाहात्म्यकथनादिः।

१४६ अ०—मधुकाष्ठमयभगवत्प्रतिमानिर्म्माणविधिकथनादिः। तत्र नक्षत्रविशेषे वृक्षच्छेदनादिकथनं। तत्र अधिवासप्रतिष्ठादिविधानं।

१४७ अ०,—शिलामयप्रतिमानिर्म्माणविधिः। तत्र मन्त्रकथनपूर्व्वकमभिषेकद्रव्यप्रदानादिकथनं। पूजाविशेषविधानादिकञ्च।

१४८ अ०,—मृण्मयप्रतिमानिर्म्माणविधिः। तत्र प्रतिष्ठाविधानादिकथनं।

१४९ अ०,—ताम्रप्रतिमानिर्म्माणविधिः। तत्र प्रतिष्ठादिविधानकथनं। शान्तिकथनं।

विषयः। १५० अ०,—कांस्यप्रतिमास्थापनविधिः। तत्र प्रतिष्ठाविधानादिकथनं।
१५१ अ०,—राजतप्रतिमास्थापनादिविधिः। एवं सुवर्णप्रतिमाया इति कथनं।
१५२ अ०,—सर्व्वतोजलमये मायया बालरूपस्य भगवतो वटवृक्षाश्रयकथनादिः। ब्रह्मणो मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिकथनादिः। नेमिनामकतपोधनस्य उपाख्यानं। श्राद्धस्य उत्पत्तिकथनं। दानमन्त्रादिकथनं।
१५३ अ०,—अशौचकाले विहिताविहितनिरूपणं। त्रिषु वर्णेषु कर्त्तव्यं पाकभोजनमेव चेत्यादिकथनं। अस्थिसञ्चयनं। एकोद्दिष्टादिकथनं। प्रेतभूमिनिर्द्देशः। प्रेतकार्य्ये कुक्कुरादिध्वनिश्रवणनिषेधः। प्रेतोद्दिष्टभोजनप्रायश्चित्तकथनं। प्रेतश्राद्धविधानं। तत्र छत्रादिदाने फलश्रुतिकथनं। वृषपुच्छगलितोदकेन तर्पणविधानं। पितृयज्ञनामनिरुक्तिः। पितृयज्ञविधिः।
१५४ अ०,—प्रेतभोज्यभोजने पुनः प्रायश्चित्तकथनं। गोहस्त्यश्वादिदानग्रहणे प्रायश्चित्तं।
१५५ अ०,—पञ्चयज्ञविधानकथनादिः। पितृयज्ञे पात्रयोग्यभोक्तृनिरूपणादिः। नीलकण्ठपुच्छतर्पणं। सर्व्वेषां गार्हस्थ्याश्रममूलत्वकथनं। पितॄणामजीर्णनिवारणं। श्राद्धे निषिद्धदर्शनादौ प्रायश्चित्तकथनं।
१५६ अ०,—मधुपर्कोत्पत्तिकथनादिः।
१५७ अ०,—शान्तिकथनं। मधुपर्कदानकथनञ्च।
१५८ अ०,—जनमेजयसमीपे वैशम्पायनस्य यमालयवर्णनं। तत्र उद्दालकोपाख्यानं। सत्यप्रशंसाकथनं।
१५९, १६० अ०,—यमालयात् प्रत्यागतस्य नचिकेतसः समीपे ऋषीणां तद्वृत्तान्तशुश्रूषावर्णनं।
१६१ अ०,—यमालयवर्णनं।
१६२, १६३ अ०,—यातनास्वरूपवर्णनं।
१६४ अ०,—राक्षसैः सह यमकिङ्कराणां युद्धवर्णनं।
१६५ अ०,—पापविशेषे नरकविशेषकथनं। फलश्रुतिः अत्र अध्यायसङ्ख्यावैषम्यमस्ति।

---

No. 1271. गे॰ानं।

Substance, country-made yello paper, 10 × 6 inches. Folia, 124. Lines, 24 on a page. Extent, 2,0 s'lokas. Character, Nágara. Date, ? Prose. Incorrect. Appearance, fresh. Place of deposit, S'ríámpur C lege.

*Geyagána.* One of the Sañhitás of the Sáma Veda. It is now in course of publication in the Asiatic Society's edition of the Sáma Veda Sañhitá.

Beginning. जन् ऊ व स्वः । तत्सवितुः वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् । तत्सवितुं नुरणियोत् । भेर्गो देवस्य धीमाहि २ । धियो यो नः प्रचो ५१५२१५२ । चेम् । ओ २ । दायो ओ २४५ ॥ १ ॥

उगायि आयाही २ वीयितायो २ यि । तैया २ यि । इत्यादिः ।

End. अपामिवा अ२हो वा । हो ५इ । डा । ढ २४ । रायस्य भाय रयासुता । अयो वारायि । भिः पवतो २२ यि । मदितमाः क्रीड़नूमिरपो वा २२१४ वा । आ ५ यिवो ६ हायि । फे २५ । सप्तदशः प्रपाठकः ।

Colophon. इति गेयगानं समाप्तं ।

विषयः । सामवेदीयसंहिताविशेषः ।

---

## No. 1272. आर्षेयब्राह्मणं ।

Substance, country-made yellow paper, 10 × 6 inches. Folia, 11. Lines, 26 on a page. Extent, 295 s'lokas. Character, Nágara. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Incorrect.

*Ársheya Bráhmaṇa.* One of the eight Bráhmaṇas of the Sáma Veda. It contains notices of the Ṛishis or original "seers," *i. e.* the author's of the Sáma Veda hymns. It has been lately printed in the *Pratna-kamra-nandiní*, a Sanskrit periodical of Calcutta. Dr. Burnell of Madras has an edition of it now in the press.

Beginning. अथ खल्वयमार्षेयप्रभवत् ऋषाणां नामधेयगोत्रोपधारणात् स्वर्ग्यं यशस्यं धन्यं पुण्यं पुत्र्यं पशव्यं ब्रह्मवर्चस्यं स्मार्त्तमायुष्यं प्रा+तराशिकमित्याचक्षते, तदप्येवमाऊर्ये इदं उपधारत एकैकस्य ऋषि+र्यं वर्षसहस्रमतिथिर्भवत्यनन्दितं प्रतिनन्दितो मानितः पूजितस्तपः स्वाध्यायफलमुपजीवतीत्ययापि ब्राह्मणं भवति । यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति । इत्यादिः ।

End. आदित्यस्तोत्रयं सदादित्यात्मेत्याचक्षते ++ सहानाम्न्यः प्रजापते +++र्वा विश्वामित्रस्य वा सिमा वा मह्ना वा शक्वर्यो वा शक्वर्यौ वा ।

Colophon. इत्यार्षेयब्राह्मणे तृतीयप्रपाठकः समाप्तः ।

विषयः । फलकथनपूर्व्वकं साम्नां ऋषिनिरूपणं ।

---

## No. 1273. शिशुपालबधः ।

Substance, palm-leaf, 14¼ × 1¾ inches. Folia, 153. Lines, 4 on a page. Extent, 2,294 s'lokas. Character Bengali. Date, Sk. 1436. Place of deposit, Calcutta, Government of India. Appearance, very old. Prose. Correct.

*S'isupála-badha.* An epic poem by Mágha, on an episode of the Mahábhárata, the subject being the destruction of Sis'upála, a sovereign inimical to the Pándu brothers. The work has been printed several times and is well known, but the MS. under notice is a very old one, being dated S'aka 1436 = A. C. 1512, and contains many readings not to be met with in the printed editions. Its style of writing is shown on plate V.

Beginning. श्रियः पतिः श्रीमति शासितु जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥

End. सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ।
यश्च द्वितीयं ++++तीयो मुख्यः सतां गौणमवाप नाम ॥
श्रीशब्दनस्य कृतशब्दसमाप्तिलक्ष्म लक्ष्मीपतेश्चरितकीर्त्तनमात्र++ ।
तस्यात्मजः सुकविकीर्त्तिदुराशयोऽदः काव्यं व्यधत्त शिशुपालबधाभिधानं ॥

Colophon. इति श्रीदत्तसूनोः श्रीमाघकवेः कृतौ श्रीलक्ष्मणि शिशुपालबधे महाकाव्ये ++
++++: सर्गः समाप्तः ॥

विषयः । शिशुपालबधविवरणं ।

---

## No. 1274. अभिज्ञानशकुन्तला ।

Substance, palm-leaf, 13¾ × 1½ inches. Folia, 82. Lines, 4 on a page. Extent, 1,271 s'lokas. Character, Bengali. Date, Sk. 1494. Place of deposit, Calcutta, Government of India. Appearance, very old. Correct.

*Abhijñána S'akuntalá.* This is the oldest codex of the Bengali recension of the S'akuntalá that has yet been met with; it is dated S'aka 1494 = A. C. 1570. It corresponds with the North-West recension much more closely than the printed texts. It has been obtained from the library of a Paṇḍit of S'ántipur, whose ancestors have been Paṇḍits for many generations: the MS. was a heirloom. As it is written on palm-leaf and is in a very decayed condition, the Paṇḍit thought he made a good bargain by selling it for several printed books. It is remarkably correct, and written in a clear but crabbed old hand. See plate IV.

Beginning. या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वं।
या मातुः सर्व्ववीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतुवस्ताभिरष्टाभिरीशः॥

End. वत्स एवमस्तु इति निष्क्रान्ताः सर्वे। सप्तमोऽङ्कः। समाप्ता चेयमभिज्ञान-
शकुन्तला॥

विषयः। शकुन्तलावृत्तान्तवर्णनं।

---

## No. 1275. दैवतब्राह्मणं।

Substance, country-made yellow paper, 10 × 6 inches. Folia, 2. Lines, 24 on a page. Extent, 45 s'lokas. Character, Nágara. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Incorrect.

*Daivata Bráhmaṇa,* alias *Devatá-adhyáya-Bráhmaṇa.* One of the Bráhmaṇas of the Sáma Veda. Max Müller's Sanskrit Literature, p. 348.

Beginning. अग्निरिन्द्रः प्रजापतिः सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी इड़ा-
निधनानि धनानि——इत्यादिः।

End. देवर्षिभ्यश्च ब्रह्मा सत्यञ्च ++ मामिति ब्रह्म सत्यञ्च पातु मामिति।

Colophon. इति दैवतब्राह्मणं। इति देवताध्यायः समाप्तः।

विषयः। साम्नां देवताच्छन्दआदिनिरूपणं। गायत्रीनिर्व्वचनं। गायत्र्यङ्गानि च।

---

## No. 1276. वंशब्राह्मणं ।

Substance, country-made yellow paper, 12 × 7 inches. Folia, 12. Lines, 24 on a page. Extent 39 s'lokas. Character, Nágara. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Generally correct.

*Vaṅs'a Bráhmaṇa.* One of the Bráhmaṇas of the Sáma Veda; it contains a genealogy of the Ṛishis of the Sáma Veda and of some of their descendants. A carefully edited text of this work with an interesting introduction has lately been published by the learned Dr. Burnell of Madras.

Beginning. नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्य्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाया चोपजयाय च । शर्व्वदत्ताद् गार्ग्याच्छार्व्वदत्तो गार्ग्यो रुद्रभूतिर्द्राह्यायणिरित्यादिः ।

End. बृहद्वसुर्गोभिलो गोभिलाद्देव गोभिलो राधाच्च गौतमात् समानं परं॥ समानं परं ।

Colophon. इति वंशब्राह्मणं समाप्तं ।

विषयः । गार्ग्यादारभ्य गोभिलपर्य्यन्तऋषीणां वंशविस्तारकथनं ।

---

## No. 1277. साङ्ख्यचन्द्रिका ।

Substance, country-made yellow paper, 10 × 6 inches. Folia, 48. Lines, 18 on a page. Extent, 1,404 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Generally correct.

*Sáṅkhya-chandriká.* A commentary on the Sáṅkhya Káriká of Ís'varakṛishṇa. By Náráyana Tírtha, a disciple of Rámagovinda Tírtha. Hall's *Contributions*, p. 7.

Beginning. श्रीरामगोविन्दसुतीर्थपादकृपाविशेषादुपलभ्य बोधं ।
श्रीवासुदेवादधिगम्य सर्व्वशास्त्राणि वक्तुं किमपि स्पृहा नः ॥
प्रकृतिं पुरुषञ्चैव नत्वाचार्य्यान् गुरूंस्तथा ।
नारायणः साङ्ख्यमूले तनुते साङ्ख्यचन्द्रिकां ॥

तदिदं शास्त्रं चतुर्व्यूहं । हेयं हेयसाधनं हानं हानसाधनञ्चेति मुमुक्षुजिज्ञासितत्वात् । इत्यादिः ।

End. इति षष्टिपदार्थानामष्टभिः सह सिद्धिभिः । इति ।

तथा च अचैतत् षष्टिपदार्थविवेचनान्नेदं प्रकरणं, किन्तु तन्त्रमेवेति सिद्धं ।

Colophon. इति रामगोविन्दतीर्थशिष्यनारायणतीर्थकृता साङ्ख्यचन्द्रिका समाप्ता ।

समाप्ता चेयं साङ्ख्यचन्द्रिका ।

विषयः । ईश्वरकृष्णकृतसाङ्ख्यकारिकाया व्याख्यानं ।

---

## No. 1278. साङ्ख्यभाष्यं वा आर्यभाष्यं ।

Substance, country-made yellow paper, 10 × 6 inches. Folia, 27. Lines, 34 on a page. Extent, 1,916 s'lokas. Character, Bengali. Date, ? Place of deposit, S'rírámpur College. Appearance, fresh. Prose. Generally correct.

*Sáńkhya-bháshya* alias *A'ryabháshya.* A commentary on the Sáńkhya-káriká of Is'varakṛishṇa. By Vijñána Bhikshu. The text of Is'varakṛishṇa and the commentary of Gaurapáda, together with an English translation of the text by Colebrooke, and of the comment by H. H. Wilson, were printed some time ago by the Oriental Translation Fund, London. The commentary which forms the subject of this notice, as also that noticed under the last preceding No. have never been printed.

Beginning. कपिलाय नमस्तस्मै येनाविद्योदधौ जगति मग्ने ।

कारुण्यात् साङ्ख्यमयी नौरिव विहिता प्रतारणाय ॥

अल्पग्रन्थं स्पष्टं प्रमाणसिद्धान्तहेतुभिर्युक्तं ।

शास्त्रं शिष्यहिताय समासतोऽहं प्रवक्ष्यामि ॥

दुःखत्रयाभिघातादित्यादिः ।

End. साङ्ख्यं कपिलमुनिना प्रोक्तं संसारविमुक्तिकारणं हि ।

यत्रैताः सप्ततिरार्य्या भाष्यञ्चात्र गौड़पादकृतं ॥

Colophon. इति विज्ञानभिक्षुविरचितं साङ्ख्यभाष्यं सम्पूर्णं ।

विषयः । ईश्वरकृतसाङ्ख्यकारिकाया व्याख्यानं ।

---

## No. 1279. वराहपुराणान्तर्गतव्यङ्कटगिरिमाहात्म्यम् ।

Substance, country-made yellow paper, 11 × 4¾ inches. Folia, 46. Lines, 11 on a page. Extent, 828 slokas. Character, Nágara. Date, Sk. 1544. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Correct.

*Vyañkatagiri Máhátmya.* An episode of the Varáha Puráṇa; it treats of the religious merits of a famous place of pilgrimage called Vyañkaṭagiri in the Madras Presidency.

Beginning. ऋषय ऊचुः । रोमहर्षणसर्व्वज्ञ पुराणार्थविशारद ।
माहात्म्यं श्रोतुमिच्छामो गिरीन्द्राणां महीतले ॥

End. यः पठन् प्रयतो भक्त्या शृणुयाद्वा लिखेदपि ।
सर्व्वान् कामानवाप्नोति सम्प्राप्नोति च मङ्गलं ॥

Colophon. इति श्रीचतुर्व्विंशतिसाहस्रिकायां संहितायां श्रीवराहपुराणे श्रीव्यङ्कटगिरिमाहात्म्ये द्विषष्टितमोऽध्यायः ।

विषयः । व्यङ्कटगिरिमाहात्म्यवर्णनं ।

---

## No. 1280. मृगारेष्टिहोत्रप्रयोगः ।

Substance, country-made yellow paper, 9¼ × 4¼ inches. Folia, 2. Lines, 23. Extent, 48 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

*Mrigáreshṭihotra-prayoga.* A manual for the performance of the Vedic rite called *Mrigáreshṭi.*

Beginning. नमः प्रवक्त्र इत्यादिसप्तदशसामिधेन्यः ।

End. देवा आज्यपा इत्यादिः । शेषं प्रकृतिवत् ॥

Colophon. इति मृगारेष्टिहोत्रं समाप्तं ।

विषयः । मृगारेष्टिहोत्रकथनं ।

---

## No. 1281. बोधायनसूत्रं ।

Substance, country-made yellow paper, 9¾ × 4¼ inches. Folia, 3. Lines, 14—15 on a page. Extent, 189 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

*Bodháyana Sútra.* This is a mere fragment of the aphorisms of Bodháyana, on the Sautra rites of the Black Yajur Veda. It treats of the new and the full moon sacrifices.

Beginning. अथोपय्याचरणं विज्ञायते क्रत्वादौ क्रतुकामं कामयीत ।

End. स्योनमाविशन्तु न इति सिकताः सम्भृत्य । (खण्डितं) ।

विषयः । दर्शपौर्णमासादियज्ञविधिकथनं ।

---

## No. 1282. उक्थप्रयोगः ।

Substance, country-made yellow paper, 9½ × 4¼ inches. Folia, 101. Lines, 9 on a page. Extent, 2,137 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

*Ukthaprayoga.* A manual for the performance of the Vedic rite called *Uktha.* It is described in full in Haug's Aitareya Bráhmaṇa, p. 251.

Beginning. तस्यैन्द्राग्नः पशुः । आवाहनकाले । आज्यभागानन्तरमिन्द्राग्नी आवह । वनस्पतिमावह इन्द्रं न सुमन्तमित्यादिः ।

End. एवमेतदहः कृत्वा एतां रात्रिं वसन्ति । सन्तिष्ठते दशममहः ।

Colophon. इति दशरात्रः समाप्तः ।

विषयः । उक्थप्रयोगकथनं । उक्थशब्देन सामवेदीयकर्मविशेष उच्यते ।

---

## No. 1283. वायवीयसंहिता ।

Substance, country-made yellow paper, 14 × 5½ inches. Folia, 116. Lines, 10 on a page. Extent, 2,310 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Váyavíya Sañhitá.* A treatise on the worship of S'iva. It professes to be a portion of the Váyu Purána, but it is not included in the Index of that work given in the Náradíya Purána.

Beginning. नमः शिवाय सोमाय सगणाय ससूनवे ।
प्रधानपुरुषेशाय सर्गस्थित्यन्तहेतवे ॥

End. ददृशे तत्क्षणे तस्मिन् विमानं भानुसन्निभं ।
गणेश्वरैरसङ्ख्येयैः संवृतञ्च समन्ततः ॥ खण्डितं ।

विषयः । अत्र पाशुपतज्ञानस्य मोक्षदातृत्वं पाशुपतविभूतयश्च । यत्तत्तज्ञं प्रति उपमन्युना पुरा उक्तं, तस्य ऋषीन् प्रति वायोः पुनः कथनं ।

---

## No. 1284. अपरोक्षानुभूतिः । अपरोक्षानुभूतिदीपिकासहिता ।

Substance, country-made yellow paper, 12½ × 6½ inches. Folia, 16. Lines, 10—15—16 on a page. Extent, 704 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Text, verse; Commentary, prose. Correct.

*Aparokshánubhuti* with a commentary called *Aparokshánubhutidípiká.* A treatise on the Vedánta doctrine. By S'añkara A'chárya. The commentary is anonymous. *Hall's Contributions*, p. 104.

Beginning. मू०। श्रीहरिं परमानन्दमुपदेष्टारमीश्वरं ।
व्यापकं सर्व्वलोकानां कारणं तं नमाम्यहं ॥ १ ॥
अपरोक्षानुभूतिर्वै प्रोच्यते मोक्षसिद्धये ।
सद्भिरेव प्रयत्नेन वीक्षणीया मुहुर्मुहुः ॥ २ ॥
टी०। स्वप्रकाशत्वहेतुर्यः परमात्मा चिदात्मकः ।
अपरोक्षानुभूत्याख्यः सोऽहमस्मि परं सुखं ॥ १ ॥
श्रीशगुर्व्वात्मभेदाद्यः सकलव्यवहारभूः ।
औपाधिकः स चिन्मात्रः सोऽपरोक्षानुभूतिकः ॥ २ ॥
तदेवमनुसन्धाय निर्व्विघ्नां स्वेष्टदेवतां ।
अपरोक्षानुभूत्याख्यामाचार्य्योक्तिं प्रकाशये ॥ ३ ॥

End. मू०। परिपक्वं मनो येषां केवलोऽयञ्च सिद्धिदः ।
गुरुदैवतभक्तानां सर्व्वेषां सुलभो भवेत् ॥

Colophon. इति श्रीशङ्कराचार्य्यविरचिता अपरोक्षानुभूतिः समाप्ता ।

टी०। परिपक्वमनस्त्वाद् यतिदुःसाध्यान्यपि साधनानि सुसाध्यानि भवन्तीति हेतो-र्गुरुदैवतभजनमेव स्वधर्म्माविरोधेन सर्व्वैः कार्य्यमिति परममङ्गलं ।

इति अपरोक्षानुभूतिप्रदीपिका समाप्ता ॥

विषयः । अत्र प्रथमं विवेककथनं । ततः शमदम उपरतिसमाधानमुमुक्षुत्वादिकथनं । तत आत्मज्ञानविचारकथनं । तत आत्मपदार्थनिरूपणं । ततः जीवब्रह्मैक्य-प्रतिपादनं । ततो ब्रह्मसाक्षात्कारोपायनानाविधयोगकथनं ।

---

## No. 1285. विन्ध्यमाहात्म्यं, टीकासहितं ।

Substance, country-made yellow paper, 13¾ × 7¼ inches. Folia, 157. Lines, 9—10 on a page. Extent, 3,927 s'lokas. Character, Nágara. Date, Sм. 1924. Place of deposit, Calcutta, Government of India. Appearance, old. Text, verse; Commentary, prose. Incorrect.

*Vindhya-máhátmya.* Topography of certain sacred places on the Vindhya Hills, and the religious merit to be acquired by pilgrimage to them. The work professes to be an extract from the Vrihadus'anas Upapuráṇa and has a commentary attached to it. Contents 1—2. S'aunaka's enquiry about the Vindhya Hills. 3—4. The Puráṇas and the Upapuráṇas described. 5. The praise of a form of Deví dwelling on the Vindhya Hills. 6. Do. of Tárakes'vara. 7—8. Story of Táraka Asura. 9. Enumeration of the sacred places on the Hills. 10. Story of Hari's blessing the sacred places. 11—12. The pool of Lakshmí. 13—14. Story of the two giants, Tuhuṇḍa and Huṇḍa. 15, 16. The pool of Brahmá. 17. The pools of Saunaka and others. 18. Do. of Maríchi, &c. 19. Praise of the River Ganges. 20. The pool of Dharma. 21. Do. of Gokarṇa. 22. Do. of Navayogís'vara. 23. Expiation meet at these sacred pools. 24. Praise of the confluence of the Ganges and the Yomuná at Allahabad. 25. Pool called Nága-kúpa. 26. The majesty of Vindhyavásiní, the Deví dwelling on the Vindhya Hills. 27. Mystic emblems for her worship explained. 28. Purification of the elements before worshipping her. 29. Mode of worshipping her. 30. Adoration to her through a triangular diagram. 31. Her wars with Nisumbha and Sumbha. 32—33. Description of Rámagayá. 34.

Wanting in the MS. 35. Praise of Karnávatí. 36. Do. of S'iva. 37. The different abodes of Víndhyavásiní. 38. Merit of circumambulating the sacred pools. 39. Do. of a circuit of five kros'as round those pools. 40. Praise of the Purána. 41. The mode of circumambulating the pools.

Beginning. मू०। यो विघ्नभित्तीव्र जगताञ्च गुप्तये स्वःसद्मभिर्वा मनुजैश्च पूजितः ।
यो विघ्नतूलैकहुताशनरूपकस्तं ढुण्ढिराजं शरणं गतोऽस्मि ॥ १ ॥
यच्चिन्तनं विघ्नजनीनमुच्यते छित्त्वान्तरायं विनयेत् सतीं मतिं ।
यो विघ्नताशिश्वविवस्वरूपको द्वैमातुरं तं सततं नमाम्यहं ॥ २ ॥
टी०। श्रीमद्विष्णुप्रजाभिवन्द्यचरणं गोपादिकाराधितं
वन्दे पूर्णं विकुस्वसौम्यवदनं संसारतापापहं ।
सत्यं ज्ञानमनन्तमाद्यविधुरं गोभारसंहारकं
सर्व्वात्मानमपास्तसर्व्वममलं विघ्नेश्वरं शर्म्मदं ॥ १ ॥
व्याख्यानरहितस्यास्य व्याख्यानं सज्जनप्रियं ।
क्रियते स्वीयबोधाय प्रमादः क्षम्यतां बुधैः ॥ २ ॥

End. मू०। विन्ध्यक्षेत्रस्य माहात्म्यं यः शृणोति सुचेतसा ।
सर्व्वान् पापान् विधूयात्र लभते सद्गतिं परां ॥

Colophon. इति श्रीबृहद्रैशनसोपपुराणे विन्ध्यमाहात्म्यवर्णनं नामैकचत्वारिंशोऽध्यायः ।
टी०। एतच्छ्रवणमाहात्म्यमाह, विन्ध्यक्षेत्रस्येति ।
इति विन्ध्यमाहात्म्यव्याख्यानं समाप्तं ।

विषयः। अत्र एकचत्वारिंशाध्यायाः सन्ति । तत्र १ प्रथमे, २ ये, च—शौनकप्रश्नकथनं । ३ये,—पुराणनामसङ्ख्याकथनं । ४र्थे,—उपपुराणकथनं । ५मे,—विन्ध्यक्षेत्रनिवासिन्या भगवत्या माहात्म्यवर्णनं । ६ष्ठे,—तारकेश्वरमाहात्म्यवर्णनं । ७मे,—शिवं प्रति तारकासुरस्तुतिकथनं । ८मे,—तारकेशस्योत्पत्तिकथनं । ९मे,—नानाविधपुण्यक्षेत्रकथनं । १०मे,—हरिवरप्रदानकथनं । ११शे,—लक्ष्मीकुण्डोत्पत्तिवर्णनं । १२शे,—लक्ष्मीकुण्डमाहात्म्यवर्णनं । १३,१४शे,—तुङ्गकुण्डाख्यासुरद्वयवर्णनं । १५शे,—ब्रह्मकुण्डोत्पत्तिकथनं । १६शे,—ब्रह्मकुण्डवर्णनं । १७शे,—सनकादिकुण्डनिरूपणं । १८शे,—मरीच्यादिकुण्डवर्णनं । १९शे,—गङ्गामाहात्म्यवर्णनं । २०शे,—धर्म्मकुण्डवर्णनं । २१शे,—गोकर्णकुण्डवर्णनं । २२शे,—नवयोगीश्वरकुण्डवर्णनं । २३शे,—प्रायश्चित्तवर्णनं । २४शे,—गङ्गासङ्गमाहात्म्यवर्णनं । २५शे,—पुण्यजलाशयनागकूपाख्यानवर्णनं । २६शे,—

End. मद्यसवे कृतानामृत्विजामन्ययजमानस्यार्त्विज्यं निषिद्धं। एवं चातुर्मास्यादि-सर्व्वकर्म्मसु इति प्रदीपः ॥ ६ ॥

Colophon. समाप्तिसूचकवाक्यं नास्ति।

विषयः। नक्षत्रेष्ट्यादिनानाविधेष्टिप्रकरणं ॥

---

## No. 1571. बौधायनीयद्वैधकाण्डं।

Substance, country-made paper, 9¾ × 4 inches. Folia, 47. Lines, 12 on a page. Extent, 1,241 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Baudhayaníya Draidhakáṇḍa.* Directions for the performance of various Vedic rites according to the rules of Bodháyana. Anonymous.

Beginning. (तृतीयप्रश्नस्य प्रा०) अग्नीन् पुनराधास्यमानो भवति। तदाहुः। कृतयजुः-सम्भृतसम्भारो भवति।

End. हिरण्यं चमसं ददाति। राशीकृतं धान्यं ददाति। मरायुकृतं (?) धान्यं ददाति।+त्येतानि च नित्यानि दद्यात्। यो एतान्येवेति शालीकिः।

Colophon. इति बौधायनीये द्वैधकाण्डे पञ्चमः प्रश्नः।

विषयः। अत्र प्रथमद्वितीयप्रश्नौ न स्तः। तृतीये प्रश्ने, अग्न्याधानाग्निहोत्रादिकथनं। पिण्डपितृयज्ञकथनं। आग्रयणहोमादिः। उपवसथीयदिवसकृत्यं। अग्निहोत्र-कथनं। अनुयाजेष्टिकथनं। ब्रह्मकर्म्मादिकथनं। पशुबधकर्त्तव्यसङ्क्षेपः। ४, मन्त्रगणाम्नातप्रायश्चित्तानि। ५, वाजपेयकर्त्तव्यतादिः। यजमानविषय-कर्म। राजसूयकर्त्तव्यकर्मादिः। इष्टिकल्पकथनादिः। द्वादशाहकर्त्तव्यादिः।

---

## No. 1572. मित्रविन्देष्टिः।

Substance, country-made paper, 9¾ × 4 inches. Folia, 2. Lines, 12 on a page. Extent, 128 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Mitravindeshṭi.* Directions for the performance of the Vedic rite called Mitravindeshṭi. Anonymous.

Beginning. अथ मित्रविन्देष्टिः । श्रीकामो वायुःकामो वा मित्रप्राप्तिकामो वा श्रीपरमेश्वर-
प्रीतिकामो वैतामिष्टिं कुर्य्यात् ।

End. उत्क्राती वाचश्छनं(?) यथा दैवतं ब्राह्मणतर्पणान्तं समानं । न पुनरालम्भः ।
सन्तिष्ठते मित्रविन्दा महावैराजीष्टिः ॥

विषयः । मित्रविन्देष्टिकथनं ।

---

## No. 1573. शास्त्रसिद्धान्तलेशसङ्ग्रहः ।

Substance, country-made paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 126. Lines, 7—11 on a page. Extent, 1,606 s'lokas. Character, Nágara. Date, Sm. 1719. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*S'ástrasiddhánta-les'a-sańgraha* alias *Siddhántales'a*. An elaborate dissertation on the principal topics of the Vedánta doctrine, in course of which the theories of all the different Vedánta schools, are noticed, and strictures passed on the other schools of Hindu philosophy. By Apya Díkshita, son of Rańgarája Díkshita. A commentary on this work has been noticed under No. 60 (ante Vol. I, p. 35,) Hall's *Contributions*, p. 153.

Beginning. अधिगतभिदा पूर्व्वाचार्य्यानुपेत्य सहस्रधा
सरिदिव महीभेदान् सम्प्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥
प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैकसिद्धौ परं
सन्नह्यद्भिरनादरात् सरणयो नानाविधा दर्शिताः ।
तन्मूलानिह सङ्ग्रहेण कतिचित् सिद्धान्तभेदान् धियः
शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान् ॥
तेषूपपादनापेक्षान् पक्षान् प्रायो यथामति ।
युक्त्योपपादयन्नेव लिखाम्यनतिविस्तरं ॥
तत्र तावदात्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यधीतसाङ्गस्वाध्यायस्य वेदान्तैरापात+
प्रतिपन्ने ब्रह्मणि समुदितजिज्ञासस्य इत्यादि ।

End. निरतिशयानन्दस्फुरणसम्वद्धनिसं + ब्रह्मपरमेश्वरभावापत्तिराद्‌र्त्तव्येति सिद्ध-
मिति ।
विद्वद्‌गुरोर्विहितविश्वजिदध्वरस्य श्रीमर्व्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौलेरप्पय्यदीक्षित इति प्रथितस्तनूजः ॥
तन्त्राण्यधीत्य सकलानि सदावदातव्याख्यानकौशलकलाविशदीकृतानि ।
आम्नायमूलमनुरुध्य च सम्प्रदायसिद्धान्तभेदलवसङ्ग्रहमित्यकार्षीत् ॥

Colophon. इति शास्त्रसिद्धान्तलेशसङ्ग्रहे चतुर्थः परिच्छेदः । संवत् १७१९ । चैत्रशुदिः ।
( मध्ये खण्डितमिदं )

विषयः । निखिलवेदान्तप्रकरणानां सिद्धान्तसारं सङ्कलय्य निर्म्मितोऽयं ग्रन्थः । तत्र १ प्रथमपरिच्छेदे ।—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यत्र प्रतीयमानो विधिः किं विध इति विवेचनं । अपूर्व्वविधिलक्षणं । नियमविधिलक्षणं । परिसङ्ख्या-लक्षणं । आत्मा वा अरे इत्यत्र अयमपूर्व्वविधिरिति भाष्यानुसारिणां मतकथनं । नियमविधिरयमिति सङ्क्षेपशारीरकानुसारिण इति तन्मतोपपादनं । परिसङ्ख्याविधिरयमिति वार्त्तिकानुसारिणां नयप्रदर्शनं । नात्र त्रिविधस्यापि विधेः सम्भवः किन्तु कर्म्मकाण्डविचारवद् ब्रह्मकाण्डविचारोऽपि अध्ययनविधिमूल इति वाचस्पतिमिश्रानुयायिनां मतकथनं । जगज्जन्मस्थितिलयकारणत्वरूपं ब्रह्मणो लक्षणत्रयमिति कौमुदीकारमतकीर्त्तनं । एकमेव लक्षणमिदमभिन्ननिमित्तोपादानतया अद्वितीयं ब्रह्म उपलक्षयतीत्यन्यमतप्रदर्शनं । परिणामस्वरूपकथनं । विवर्त्तस्वरूपकथनं । शुद्धं ब्रह्मैव जगदुपादानमिति सङ्क्षेपशारीरकमतानुयायिनां नयप्रदर्शनं । सर्व्वज्ञत्वादिविशिष्टं मायांशबलमीश्वररूपमेव ब्रह्म उपादानमिति विवरणानुसारिणां मतकथनं । मायाऽविद्ययोर्भेदवादिमतनिरूपणं । तयोरभेदवादिनां नयकथनं । जीवोपादानवादकथनं । पदार्थतत्त्वनिर्णयकारमतानुसारेण मायोपादानत्ववादखण्डनं । विवर्त्तपरिणामोपादानद्वयसाधारणमन्यद् ब्रह्मलक्षणमिति केषाञ्चिन्मतकथनं । उपादानत्वलक्षणं । जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्त्तमानतया उपादानमिति वाचस्पतिमिश्रमतकीर्त्तनं । मायाशक्तिरेव उपादानं न ब्रह्मेति मुक्तावलीकारमतकथनं । ईश्वरलक्षणं । जीवलक्षणं । अत्र प्रकटार्थविवरणकारमतं । तत्त्वविवेककारमतं । सङ्क्षेपशारीरकमतकथनं । विद्यारण्यादीनां मतकीर्त्तनं । विश्वतैजसप्राज्ञादीनां लक्षणकथनं । शङ्करमतेन जीवेश्वरलक्षणनिरूपणं । प्रतिबिम्बेश्वरवादिनां मतेन पारमार्थिक-व्यावहारिक-प्रातिभासिकभेदात् जीवस्य त्रैविध्यमुक्त्वा तत्तल्लक्षणकथनं । बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभाग इति विवरणानु-

विषयः । सारिणां सिद्धान्तनिरूपणं । अन्येषां मतेन विम्बादिवादखण्डनपूर्व्वकमवच्छेदवादसं-स्थापनं । न प्रतिविम्बो नाप्यवच्छेदो जीवः, किन्तु कौन्तेयस्यैव राधेयत्ववदविकृतस्य ब्रह्मण एव अविद्यया जीवभाव इति केषाञ्चिन्मतकथनं। एकजीववादकथनं। अत्र वाचस्पतिमिश्रतत्त्वकारादीनां मतकथनं। नानाजीववादकथनं। कर्तृत्व-स्वरूपनिरूपणं। ईश्वरस्य सर्व्वज्ञत्वसंस्थापनं। अन्तःकरणोपाधिकत्वेन जीवस्य परिच्छिन्नत्वमिति केषाञ्चिन्मतकथनं। जीवस्य किञ्चिज्ज्ञत्वोपपादनं। आव-रणविक्षेपशक्तिनिरूपणं। अज्ञानस्वरूपकथनं। अत्र न्यायचन्द्रिकाकारादीनां मतकथनं। जीवात्मपरमात्मनोः साक्षित्वविवेचनं। अन्तःकरणवृत्तिनिरूपणं। अध्यासादिस्वरूपविमर्शनं। द्रव्यादिप्रत्यक्षे कारणकथनं। अपरोक्षज्ञानस्वरूपनिरू-पणं। अत्र नानाविधमतकथनं। जीवब्रह्मणोरभेदकथनं।

२–ये परिच्छेदे।—अद्वितीये ब्रह्मणि वेदान्तानां समन्वयकथनं। प्रपञ्चस्य सत्या-सत्यत्वनिरूपणप्रसङ्गेन विविधवादकीर्त्तनं। (यजमानः प्रस्तरः) इत्यादौ शास्त्रदीपि-कान्यायरत्नमालादीनां सिद्धान्तकथनं। घटादिप्रत्यक्षे न्यायसुधाकारादीनां नय-कथनं। आकाशे नीलिमभ्रान्तिकारणकथनं। प्रत्यक्षात् श्रुतेः प्राधान्ये भामती-विवरण-वार्त्तिकादीनां मतोपन्यासः। प्रपञ्चस्य असत्त्वस्थापनपुरःसरमसत्त्वलक्षण-कथनं। ब्रह्मणि पारमार्थिकसत्यत्वं प्रपञ्चे तु व्यावहारिकसत्यत्वमित्यादि केषाञ्चिन्मतं तत्कथनं। प्रतिविम्बमिथ्यात्वमभ्युपगच्छतां त्रिविधजीववादिनां विद्यारण्यगुरुप्रभृ-तीनां मतकीर्त्तनं। प्रतिविम्बस्वरूपच्छायाया द्रव्यान्तरत्वशङ्कानिरसनं। अज्ञान-विक्षेपशक्तिं विहाय आवरणशक्त्यंशमात्रनिवर्त्तकत्वं ज्ञानस्य न स्वाभाविकमित्यन्य-मतकथनं। स्वप्ने ज्ञानस्य सूक्ष्मशरीरावयवभूतसूक्ष्मेन्द्रियसन्निकर्षजन्यत्वमिति केषाञ्चिन्मतकथनपूर्व्वकं तत्खण्डनं। सृष्टिदृष्टिवादत्वमिति केषाञ्चिदाचार्य्याणां मतकथनं। दृष्टिसृष्टिवादे सृष्टिदृष्टिवादे च चित्सुखाचार्य्य–रामाद्वयाचार्य्य-प्रभृतीनां मतकथनं। अद्वैतदीपिकानुसारेण मिथ्यात्वलक्षणकीर्त्तनं। उपाधि-स्वरूपकथनं। आत्मनोऽणुपरिमाणवत्त्ववादखण्डनपूर्व्वकं विभुत्वसंस्थापनं।

३–ये परिच्छेदे।—कर्म्मणां ब्रह्मप्राप्तिहेतुत्ववादखण्डनपूर्व्वकं विद्यायास्तत्प्राप्तिहेतु त्वसंस्थापनं। अत्र भामतीकारविवरणकारादीनां मतकथनं। कर्म्मणां चित्तशुद्धि-द्वारा विद्योपयोगित्वकथनं। शूद्रस्यापि विद्यार्थं कर्म्माधिकारनिरूपणं। केषा-ञ्चिन्मतेन क्षत्रियवैश्ययोरपि ब्राह्मणवत् सन्न्यासाधिकारनिरूपणं। ब्रह्मसंस्थस्यैव श्रवणादिषु मुख्यः अधिकार इति केषाञ्चिन्मतकथनं। अत्र नानाविधमतोपन्यासः। निर्गुणस्य ब्रह्मण उपासना नास्तीति शङ्कानिरसनं। ब्रह्मसाक्षात्कारे नानाविध-मतकथनं। जीवन्मुक्तिनिरूपणं। अत्र नानाविधमतकथनं।

४-र्थे परिच्छेदे ।—अविद्यालेशानुवृत्त्या जीवन्मुक्तिरिति सति सिद्धान्ते तदविद्यालेशस्वरूपनिरूपणं । अत्र विविधवादकथनं । अपवर्गकारणादिनिरूपणप्रसङ्गेन नानामतकथनं । मुक्तस्य ईश्वरभावापत्तिकथनं । अत्र नानाविधमतकीर्त्तनं ।

---

## No. 1574. बौधायनचातुर्मास्यसूत्रं ।

Substance, country-made paper, $8\frac{3}{4} \times 4\frac{1}{4}$ inches. Folia, 14. Lines, 12 on a page. Extent, 300 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Baudháyana-cháturmásya Sútra.* The aphorisms of Bodháyana on the Quadrimensial rite, being a part of the author's Kalpa Sútra.

Beginning. ॐ वैश्वदेवहविर्भिर्यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां नक्षत्रप्रयोग इत्येक आङ्गुदगयन आपर्य्यमानपक्षस्य पुण्याह्ने प्रयुञ्जीतेति ।

End. हवीꣳष्यनुवत्सरीणाꣳ स्वस्तिमाशस्त इत्याशस्ते ।

Colophon. इति बौधायनीयचातुर्मास्यसूत्रं सम्पूर्णं ।

विषयः । चातुर्मास्ययागप्रकरणं ।

---

## No. 1575. निविद्प्रउगाध्यायौ ।

Substance, country-made paper, $10 \times 4\frac{1}{2}$ inches. Folia, 8. Lines, 10 on a page. Extent, 135 s'lokas. Character, Nágara. Date, Sm. 1814. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Nivid* and *Prayüga.* The initials of the Nivid and Prayüga mantras.

Beginning. निविदाध्यायः । अग्निर्देवेद्धः । अग्निः सुसमित् । होता देववृतः । होता मनुवृतः (?) । प्रणीर्यज्ञानां ।

End. विश्व आसोमपीतयः । वाचमद्दं देवीं वाचास्मिन् यज्ञे सुपेशसा । सरती हवामहे ।

Colophon. इति प्रउगाध्यायः ॥

विषयः । निविद्प्रउगकर्मकथनम् ।

---

## No. 1576. आश्वलायनीयं प्रायश्चित्तं ।

Substance, country-made paper, 9¼ × 4¼ inches. Folia, 10. Lines, 12 on a page. Extent, 285 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*A's'valáyaníya Práyas'chitta.* An exposition of As'valáyana's chapter on expiations for errors and accidents occurring in course of performing Vedic rites. The codex is incomplete and the author's name cannot be made out.

Beginning. अथाश्वलायनीयं । आहवनीये विद्यमाने यदि गार्हपत्योनुगच्छेत् । अवद्यामेभ्यो मन्थनं कृत्वा हवनीयोऽनुगमयितव्यः ।

End. इति सिद्धान्तभाष्ये । ऋत्विजामेक इति सूत्रात् । प्रपञ्चितमिति दिक् ।

Colophon. (परिसमाप्तिवाक्याभावात् खण्डितमिति भाति ।)

विषयः । वैदिककर्मणामङ्गवैकल्ये तत्र कर्त्तव्यप्रायश्चित्तविशेषाः ।

---

## No. 1577. मीमांसावार्त्तिकं ।

Substance, country-made paper, 10½ × 4½ inches. Folia, 113. Lines, 6—9—10 on a page. Extent, 2,475 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Mímáñs'á-vártika.* A commentary on the Mímáñs'á aphorisms of Jaimini. By Kumárila Bhaṭṭa. The MS. is incomplete; the work is in course of publication in the Bibliotheca Indica. Hall's *Contributions*, p. 170.

Beginning. द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः । अपायस्तोकार्थिन उपायमन्विच्छतः पर्णमयीत्वमुपायत्वेन विधीयते ।

End. अपि च गुणवचनोऽयं स यदा द्रव्ये उपसर्जनीभूतः तदा द्रव्यस्य यल्लिङ्गसङ्ख्यं तल्लभते । इह (खण्डितं)

विषयः । मीमांसासूत्रव्याख्यानं । अत्र चतुर्थाध्यायद्वतीयपादावधि दशमाध्यायकतिपयपर्य्यन्तं वर्त्तते ।

---

## No. 1578. नाममाला, वा शीघ्रबोधिनी।

Substance, country-made paper, 10 × 5 inches. Folia, 19. Lines, 12 on a page. Extent, 472 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old, decayed. Verse. Correct.

*Námamálá* alias *S'íghrabodhiní.* A metrical Lexicon in four parts. By Puṇḍaríka Viṭṭhala, of the Kármáṭha (?) caste. The first part gives the names of the different parts of the body, and also of all things and attributes of women; the second, inanimate objects, mountains, trees, &c.; the third is devoted to celestial objects; and the fourth to words of several meanings, synonyms, prepositions, names of arts, sciences, &c.

Beginning. गणेशं भारतीं नत्वा श्रीमद्विट्ठलसूरिणा।
शीघ्रबोधिनिका नाम क्रियते नाममालिका॥
चतुःकाण्डमिता रम्या षट्या सह चतुःशती।
कवेः शीघ्रकवित्वाय श्रोतुर्बुद्धिसम्बृद्धये॥
देहं तत्सकलाङ्गानि नारीणां जातिभेदकाः।
सौन्दर्य्यं वस्त्रमाकल्पहावभावरसादिकाः॥

End. इत्येवं बालबोधार्थं किञ्चित् किञ्चित् प्रकाशितं।
किन्त्वचादृष्टमन्यत्र दृश्यतां सादनोत्तमैः॥
यावद्धरिकथावाणी सिन्धुरिन्दुरवी दिशः।
भूमौ तिष्ठतु तावत्तु नाममालापि वैट्ठली॥

Colophon. इति श्रीकार्म्माटजातीयपुण्डरीकविट्ठलकृतौ शीघ्रबोधिनीनाममालायामनेकार्थ-काण्डश्चतुर्थः। समाप्तेयं शीघ्रबोधिनी नाममाला।

विषयः। १ प्रथमे शृङ्गारकाण्डे,—नारीनां देहसौन्दर्य्यवेशहावभावादीनां नामकथनं।
२–ये राजकाण्डे,—भू–गिरि–वृक्षसङ्ग्रामादीनां नामकथनं।
३–ये दैवकाण्डे,—आकाशपूर्णिमादिनरात्रिस्वर्गसुरादीनां नामकीर्त्तनं।
४–र्थे नानार्थकाण्डे,—नानार्थशब्दकथनं। अव्ययानामर्थकथनं। चतुर्द्दशवि-द्याचतुःषष्टिकलादीनां नामकथनञ्च।

## No. 1579. लेशसङ्ग्रहः, वा मीमांसालेशसङ्ग्रहः ।

Substance, country-made paper, 10½ × 3½ inches. Folia, 40. Lines, 9 on a page. Extent, 1,175 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, very decayed. Prose. Correct.

*Mímáṅsá-les'a-saṅgraha* alias *Les'a-saṅgraha.* A commentary on the *S'ástra-siddhánta-les'a* of Apya Díkshita. By Dharmaya Díkshita, a disciple of the author. Mr. Hall notices a commentary on the text by Achyuta Kṛishṇánanda Tírtha, disciple of Svayamprakás'a Sarasvati, (*Contributions*, p. 153,) and a third has been described under No. 60 (vol. I, p 35). The text occurs under No. 1573.

Beginning. उपासकानामचिराद् वाञ्छितार्थप्रदायिने ।
हृष्टये वाङ्मनःकायैर्नमः साम्बशिवाय च ॥
गुरुमप्पययज्वानं नत्वा धर्म्मयदीक्षितः ।
तद्वचःख्यापितार्थेषु तनुते लेशसङ्ग्रहं ॥
यज्ञादिकर्म्मभिर्नित्यैः शुद्धान्तःकरणो द्विजः ।
जिज्ञासते त्वां विश्वेशत्वत्पदाम्भोजचिन्तकः ॥
ननु यज्ञादिकर्म्मणां स्वर्गादिसाधनानां ।

End. सूत्रार्थः सर्व्वोऽपि विषयवाक्येऽस्मिन् निबद्ध एव । तथा हि,——

Colophon. इतः परं लिप्यभावात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । अप्पयदीक्षितकृतशास्त्रसिद्धान्तलेशसङ्ग्रहाभिधानग्रन्थस्य व्याख्यानं ।

---

## No. 1580. प्रायश्चित्तसङ्क्षेपः ।

Substance, palm-leaf, 14½ × 1½ inches. Folia, 36. Lines, 4 on a page. Extent, 522 s'lokas. Character, Bengali. Date, Sk. 1611. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

*Práyas'chitta-saṅkshepa.* A summary of the rules on expiations for sins of all kinds. By Chintámaṇi Nyáyálaṅkára Bhaṭṭáchárya.

Beginning. अथ प्रायश्चित्तव्यवस्था । तत्रादौ प्रायश्चित्तलक्षणं । तथा च हारीतः,——
प्रयतत्वाद्वापचितमशुभं नाशयतीति प्रायश्चित्तं ।

End. बालाङ्गोजनविषयं आमान्नविषयं वा—इति शूलपाणिः।

Colophon. इति गौड़देशनिवासिश्रीचिन्तामणिन्यायालङ्कारभट्टाचार्य्यकृतौ प्रायश्चित्तसङ्क्षेपः समाप्तः। शकाब्दाः १६११।

विषयः। प्रायश्चित्तलक्षणं। अतिपातकमहापातकानुपातकोपपातकनिरूपणं। एषां प्रायश्चित्तकथनञ्च। पतितसंसर्गप्रायश्चित्तं। गोबधप्रायश्चित्तं। बाल्यादिभेदेन प्रायश्चित्तव्यवस्थानिरूपणं। ज्ञानकृतादिनिरूपणं। ब्राह्मणस्वामिकादिगोबधप्रायश्चित्तं। एकहायन्यादिगोबधप्रायश्चित्तं। रोधादिनिमित्तकगोबधप्रायश्चित्तं। अस्थिभङ्गादिप्रायश्चित्तं। अपालनादिनिमित्तगोबधप्रायश्चित्तं। गोबधापवादः। क्षत्रियादिबधप्रायश्चित्तं। स्त्रीबधप्रायश्चित्तं। गर्भबधप्रायश्चित्तं। मार्ज्जारबधप्रायश्चित्तं। मत्स्यादिबधप्रायश्चित्तं। मण्डपोद्यानादिभङ्गप्रायश्चित्तं। देवागारादिभेदनप्रायश्चित्तं। अभिचारप्रायश्चित्तं। अभक्ष्यभक्षणप्रायश्चित्तं। शूद्रान्नभक्षणप्रायश्चित्तं। चर्व्वितताम्बूलादिभक्षणप्रायश्चित्तम्।

---

## No. 1581. विश्वप्रकाशः।

Substance, country-made paper, 9 × $3\frac{1}{2}$ inches. Folia, 133. Lines, 8 on a page. Extent, 2,112 s'lokas. Character, Nágara. Date, Sk. 1619. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

*Vis'vaprakás'a.* A dictionary of the Sanskrit language. By Mahes'vara. The author is best known by his title of Rájas'ekhara. Vide Wilson's Miscellaneous Essays, III.

Beginning. स्तवीमहि महत्क्लेशमोहान्तकभिषग्वरं।
त्रैधातुकनिदानज्ञं सर्व्वज्ञं दुःखहायने॥
कलाविलासान्मकरन्दविन्दुमुद्राविनिद्रे हृदयारविन्दे।
या कल्पयन्ती रमते कवीनां देवीं नमस्यामि सरस्वतीं तां॥
कवीन्द्रकुमुदानन्दकन्दो + सत्सुधाकरं।
वाचस्पतिमतिस्पर्द्धिशेमुषीचन्द्रकोज्ज्वलं॥
क्षुभ्यत्क्षीराब्धिकल्लोलमालोल्लासियशःश्रियं।
गुरुं वन्दे जगद्वन्द्यं गुणरत्नैकरोहणं॥
श्रीसारसाकन्दपतेरनवद्यविद्यवि + तरङ्गपदमव्ययमेव विभ्रत्।
यश्चन्द्रचारुचरितो हरिचन्द्रनामा स्वव्याख्यया चरकतन्त्रमलञ्चकार॥

आसीदसीमवसुधाधिपवन्दनीये तस्यान्वये सकलवैद्यकुलावतंसः ।
शक्रस्य द(?)+ इव गाधिपुराधिपस्य श्रीकृष्ण इत्यमलकीर्त्तिलतावितानः ॥
सङ्कल्पसङ्ग+++++++जल्पकल्पानलाकुलितवादिसहस्रसिन्धुः ।
तर्कत्रयविनयनस्तनयो यदीयो दामोदरः समभवद्भिषजां वरेण्यः ॥
तस्याभवत् सूनुरुदारवाचो वाचस्पतिश्रीललनाविलासी ।
सद्वन्द्यविद्यानलिनीदिनेशः श्रीमहेशः सत्कुमुदाकरेन्दुः ॥
यज्जात्मजः सकलवैद्यकतत्त्वरत्नरत्नाकरश्रियमवाप्य च केशवोऽभूत् ।
कीर्त्तिनिकेतनमनिन्द्यपदप्रमाणवाक्यप्रपञ्चरचनाचतुराननश्रीः ॥
कृष्णस्य तस्य च सुतः स्मितपुण्डरीक++तपत्रपरभागयशःपताकः ।
श्रीब्रह्म इत्य+++मुखारविन्दसोल्लासलासितरसार्द्रसरस्वतीकः ॥
तस्यात्मजः सरसकैरवकान्तकीर्त्तिः श्रीमन्महेश्वर इति प्रथितः कवीन्द्रः ।
निःशेषवाङ्मयमहार्णवपारदृश्वा शब्दागमाम्बुरुहषण्डरविर्बभूव ॥
यः साहसाङ्कचरितादिमहाप्रबन्धनिर्म्माणनैपुणगुणागतगौरवश्रीः ।
यो वैद्यकत्रयसरोजसरोजबन्धुर्बन्धुः सताञ्च कविकैरवकाननेन्दुः ॥
इयं कृतिस्तस्य महेश्वरस्य वैदग्ध्यसिन्धोः पुरुषोत्तमानां ।
देदीप्यतां हृत्कमलेषु नित्यमाकल्पमाकल्पितकौस्तुभश्रीः ॥
लब्धैः कथञ्चिदभिजातसुवर्णकारैः ++न केशशतरत्नधिशब्दरत्नः ।
विश्वप्रकाश इति काञ्चनबन्धुशोभां बिभ्रन्मयात्र घटितो मुखखण्ड एषः ॥

— — — — — — — — —

भोगीन्द्रकात्यायनसाहसाङ्कवाचस्पतिव्याड़िपुरःसराणां ।
स विश्वरूपामरमङ्गलानां शुभाङ्कवोपालितभाण्डरीणां ॥
कोशावकाशात् प्रकटप्रभावः सम्भावितानर्घगुणः स एषः ।
सम्पादयन्नेष्यति वाञ्छितार्थान् कथं न चिन्तामणितां कवीनां ॥

End. एताह+कृतधियः कृतकृत्यभावमापादयन्तु सदयं मदयन्तु चेतः ।
नित्यं महेश्वरकवेः परिभावयन्तो वाचः परो +निरमाहि(?) भवन्तु लोके ॥

Colophon. इति श्रीकमलवैद्यराजशेखरस्य कविराजपरमेश्वरस्य गद्यपद्यविद्यानिधेः श्रीमन्महेश्वरस्य कृते(तौ) विश्वप्रकाशे अभिधानरत्ने द्वितीयः परिच्छेदः समाप्तः । ग्रन्थसङ्ख्या २२४० । शके १६१९ पौष ।

विषयः । नानार्थशब्दनिरूपणं ।

---

## No. 1582. सूर्य्यार्घ्यदानप्रयोगः ।

Substance, country-made paper, 10 × 4½ inches. Folia, 11. Lines, 7—8 on a page. Extent, 125 s'lokas. Character, Nágara. Date, Sk. 1630. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Súryárghyadána-prayoga.* A manual for performing the rite of offering an arghya to the sun. By Vaidyanátha. A work of this name has been noticed under No. 21 (*ante* I, p. 14), but it is by a different author.

Beginning. अथ तृचार्घ्यदानप्रयोगः । देशकालौ सङ्कीर्त्त्य ममामुकरोगस्य समूलनाशद्वारा क्षिप्रारोग्यप्राप्तये तृचकल्पोक्तप्रकारेण तृचस्य न्यासपूर्वकं (इत्यादिः)

End. त्वारोग्यध्यै(?)विचिकीर्षितस्य सूर्य्यार्घ्यदानस्य शुभं प्रयोगं ।
दैकरिः(?)मूलवचोऽनुरूपं श्रीवैद्यनाथो रचयाञ्चकार ॥
खवह्निषड्भूयुतशाककाले १६३० आषाढमासे नवमीदिने च ।
कनस्वरायां शिवराजधान्यां भागीरथीनीरपविचितायाम् ॥

विषयः । सूर्य्यार्घ्यदानविधिः ।

---

## No. 1583. भाट्टदीपिका ।

Substance, country-made paper, 9¾ × 4¼ inches. Folia, 74. Lines, 9—10—11—12 on a page. Extent, 1,628 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Bháṭṭa-dípiká.* A commentary on the aphorisms of the Mímáṅsá doctrine. By Khaṇḍa Deva. The MS. is limited to the 9th book. According to Mr. Hall, the work begins with the second quarter of the first book. *Contributions*, p. 179.

Beginning. अथातः क्रत्वर्थः । एवं सिद्धे शेषि(?) निरूपिते शेषत्वे प्रयोजनं निरूपितप्रयोज्यत्वमिह निरूप्येत ।

End. आज्यद्रव्यकमनुषक्तपत्नीवद्देवत्यमुपांशुयागप्रकृतिकं । शेषसङ्ख्याशब्दौ तु पूर्व्वस्य कर्मणः समाप्तप्रायतया कथञ्चिदनुवादाविति सिद्धस्त्रिविध ऊहः ।

Colophon. इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां नवमस्य चतुर्थः ।

साक्षाद्द्वद्यं(?) स्विम(?)कृततपसाराध्यनारायणः सन्
योऽसौ सोऽनन्तदेवः स्वयमजनि महारुद्रदेवात्मकः सन् ।
भूत्वा श्रीखण्डदेवः स जगति विदुषां वेदशास्त्रार्थतत्त्वं
व्याख्याय ब्रह्मभावं निरुपधियतिराट् श्रीधरेन्द्रो जगाम ॥
(श्रीदसिंहाश्रमकृतं पद्यमिदं । ग्रन्थकारविषयं )

विषयः । भट्टकृतमीमांसादर्शनस्य नवमाध्यायस्य व्याख्यानं ।

---

## No. 1584. श्रुतिसारसमुद्धरणं ।

Substance, country-made paper, 10 × 4½ inches. Folia, 16. Lines, 9 on a page. Extent, 360 s'lokas. Character, Nágara. Date, Sm. 1931. Place of deposit, Monastery of Dandis at Siüḍi, District Vírubhuma. Appearance, new. Verse. Generally correct.

*S'mitisára-samudharaṇa.* A disquisition on the Vedántic doctrine of aduality, in course of which the Vais'eshika and other doctrines are refuted. By Toṭaka A'chárya.

Beginning. त्रैलोक्यनाथहरिमीश्वमुदारसत्त्वं शक्तेस्तनूजतनयं परमेष्ठिकल्पम् ।
जीमूतमुक्तविमलाम्बरचारुवर्णं वासिष्ठमुग्रतपसं प्रणतोऽस्मि नित्यम् ॥
सकलं मनसा क्रियया जनितं समवेक्ष्य विनाशितया तु जगत् ।
निरविद्यत कश्चिदतो निखिलादविनाशिकृतेन न लभ्यमिति ॥

End. भूः पादौ यस्य खञ्चोदरमसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यै-
श्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नतोऽस्मि ॥

Colophon. इति श्रीमद्भगवत्पूज्यपादशिष्यश्रीतोटकाचार्य्यविरचितं श्रुतिसारसमुद्धरणप्रकरणं समाप्तं । संवत् १९३१ । आषाढशुदि ।

विषयः । निर्व्वेदादनन्तरं गुरूपसदनप्रकारकीर्त्तनं । आत्मनो निर्गुणत्वव्यवस्थापनं । तत्र वैशेषिकादिमतखण्डनं । जगतोऽनित्यत्वव्यवस्थापनं । आत्माकाशयोः संयोगसम्बन्धेन देहघटादौ स्थितिरिति कणभक्षाक्षपादमतखण्डनं । आकाशस्य नित्यत्ववादखण्डनं । जगत्सृष्टिनिरूपणं । तत्त्वमसिवाक्यार्थनिरूपणं । साङ्ख्यमतखण्डनं । जीवात्मस्वरूपनिरूपणं । मनसो नित्यत्ववादखण्डनं । परमात्मजीवात्मनोरभेदनिरूपणं । ब्रह्मस्वरूपादिनिर्णयश्च ।

---

## No. 1585. तत्त्वसारः ।

Substance, country-made paper, 6 × 3 inches. Folia, 32. Lines, 5 on a page. Extent, 193 s'lokas. Character, Nágara. Date, ? Place of deposit, Monastery of Dandis at Siüḍi, District Vírubhuma. Appearance, new. Verse. Generally correct.

*Tattva-sára.* An epitome of the Vedánta doctrine. By Sankara Ácharya. It is different from the work of this name noticed on page 90, of vol. I.

Beginning. ॐ नत्वा दत्तात्रेयनिर्व्वाणं पूर्णानन्दं निरञ्जनं ।
यस्य विज्ञानमात्रेण जीवः शिवत्वमाप्नुयात् ॥
दत्तपादप्रसादेन ज्ञानभानुः प्रकाशितः ।
नाशितं तिमिराज्ञानं स्वात्मज्ञानञ्च दर्शितं ॥
देहाभिमानं निर्मुच्य नामरूपादिवर्ण्णकं ।
ब्रह्मानन्दस्य सम्प्राप्तः सच्चिदानन्दलक्षणः ॥

End. अस्य ग्रन्थस्य व्याख्यानं हृदि यस्य स्थिरं भवेत् ।
बहुजन्मनोऽन्धकारो नश्यते निशि चन्द्रमाः ॥ · हरिः । ॐ तत्सत् ।

Colophon. इति श्रीमच्छङ्कराचार्य्यविरचितं तत्त्वसारवेदान्तप्रकरणं समाप्तं ।

विषयः । मोक्षोपायकथनं । जगतो ब्रह्माकारत्वं । ब्रह्मचर्य्याभ्यर्हितत्वकथनं । कुटीचरकृत्यनिरूपणं । योगाभ्यासफलकथनं । आत्मस्वरूपकथनं । बोधोपायकीर्त्तनं । एकजीववादः । ब्रह्मस्वरूपनिरूपणं । योगिदण्डिप्रभृतिकृत्यं कर्म्मणां हेयत्वनिरूपणं । अभेदज्ञानप्रशंसा । वैराग्यादिसाधनचतुष्टयनिरूपणं । परापश्यन्त्यादिचतुर्व्विधवाक्साधनलक्षणादिकं । मातृकामन्त्रनिरूपणं । साङ्ख्य–पातञ्जल–न्याय–मीमांसा–शैवादिशास्त्रनिन्दा । जीवन्मुक्तिस्वरूपकीर्त्तनं । योगस्य दृढत्वेन निरूपणं । सर्व्वत्र ब्रह्मदृष्टिकर्त्तव्यता ।

---

## No. 1586. तन्त्ररत्नटीका ।

Substance, country-made paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 47. Lines, 4—8 on a page. Extent, 1,344 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Tantraratna-ṭiká.* A Scholia on the Tantraratna, a commentary by Kumárila Bhaṭṭa on a portion of the Mímáñsá aphorisms of Jaimini. The MS. is defective and the author's name is not apparent. The Tantraratna has been noticed under No. 240. Hall's *Contributions,* p. 170.

Beginning. अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा । पूर्वाध्याये शेषपर्यायमेदमर्थमेव चिन्तितमिह ।

End. तस्मात् सम्बन्धेभाव्यमानः । तस्य च भाव्यमानस्य च करणे नि ( इत्यतः खण्डितं )

विषयः । मीमांसात्मकतन्त्ररत्नस्य चतुर्थपादस्य व्याख्यानं ।

---

## No. 1587. अनेकार्थसङ्ग्रहः ।

Substance, country-made paper, 10 × 3¾ inches. Folia, 95. Lines, 10 on a page. Extent, 1,996 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

*Anekártha-saṅgraha.* A dictionary of Sanskrit synonyms. By Hemachandra A'chárya. The words are classed according to the number of vowels in each. Wilson's Essays, III.

Beginning. नत्वा हरिं हतैकार्थशब्दशब्दो ह सङ्ग्रहः ।
एकस्वरादिषट्काण्डा(?) कुर्वेऽनेकार्थसङ्ग्रहं ॥ १ ॥
अकारादिक्रमोऽथादौ ककारादिक्रमोऽन्ततः ।
उद्देशवचनं पूर्वं पश्चादर्थप्रकाशनम् ॥
(अव्ययकाण्डस्य आदौ खण्डितं ।)

End. सुवहस्तु सम्यग्वहे सुवहो मल्लकीद्रुमे ।
रास्नाशेफालिकागोधापटोलीपर्णिकासु च ॥ ८०७ ॥

Colophon. इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसङ्ग्रहे चिस्वरकाण्डः समाप्तः ।

विषयः । अकारादिक्रमेणानेकार्थशब्दकथनं ।

---

## No. 1588. ऋक्सङ्ख्यापरिशिष्टं ।

Substance, country-made paper, 9¼ × 4 inches. Folium, 1. Lines, 14. Extent, 14 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Ṛik-saṅkhyá-paris'ishṭa.* An Index to the verses of the Rik Saṅhitá used by persons belonging to the Kauthumi S'ákhá. Anonymous.

Beginning. शतद्वयं तथैकोनं गायत्रं परिकीर्त्तितं ।
अनुष्टुप् पञ्चपञ्चाशत्यञ्चषष्टितथोष्णिहं ॥

End. नवशतसहस्रैकं त्रिंशत्सहस्राधिकं तथा ।
कौथुमानामृचां सम्यक् सङ्ख्यामाहुर्मनीषिणः ॥

Colophon. इति ऋक्सङ्ख्यापरिशिष्टं समाप्तम् ।

विषयः । कौथुमीशाखीयानामृचां सङ्ख्याकथनं ।

---

## No. 1589. सोमोत्पत्तिः ।

Substance, country-made paper, 9¼ × 4 inches. Folia, 2. Lines, 11 on a page. Extent, 28 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

*Somotpatti.* A legend on the origin of the Soma creeper, related by Gárgya in response to a question of Bháguri. From its style the work appears to be an extract from some Puráṇa or Tantra, but there is nothing in the codex to indicate from which.

Beginning. अग्निहोत्रकृतासीनं गार्ग्यं दृष्ट्वं महामुनिं ।
विनयेनोपसङ्क्रम्य भागुरिः परिपृच्छति ॥ १ ॥
कथं सोमसमुत्पत्तिः कथं वा चीयते पुनः ।
केनायं कः समुत्थानं केन वृद्धिश्च ब्रूहि माम् ॥ २ ॥

End. य इमाञ्च सोमोत्पत्तिं पर्वकाले सदा पठेत् ।
सर्वपापविशुद्धात्मा सोमलोकं स गच्छति ॥ २५ ॥

विषयः । सोमलतोत्पत्तिकथनं ।

---

## No. 1590. महानाम्नीपरिशिष्टं ।

Substance, country-made paper, 9¼ × 4 inches. Folium, 1. Lines, 10. Extent, 11 s'lokas. Character, Nágara. Date, Sm. 1666. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

*Mahánámní-parísishta.* An index to the *Mahánámní*—one of the Sáma Sañhitás. Anonymous.

Beginning. महानाम्न्यास्त्रयोदशपदाश्चतुर्दशोत्तमास्तासां विवेकः ।

End. आकाराण्येव त्रीणि पराणि पदान्यभ्यासो आकारोऽष्टाचरः ॥ १ ॥

Colophon. इति महानाम्नीपरिशिष्टं ।

विषयः । महानाम्नीपदविवेकः ।

---

## No. 1591. धातुलक्षणं ।

Substance, country-made paper, 10 × 4¼ inches. Folia, 2. Lines, 10—11 on a page. Extent, 29 s'lokas. Character, Nágara. Date, Sm. 1692. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Dhátu-lakshaṇa.* A summary of Vedic roots. Anonymous.

Beginning. स्वरश्च । न विशन्ति मत्याः । इत्येवं सर्वत्र । अत एष कोऽधिकारी । ऋचां(?)

End. गृह्लाति सर्वं दृष्ट्वा । ज्यसङ्गाश्रेण । विना प्रयत्नं । सिमाः पवखाढ ।

Colophon. इति धातुलक्षणं समाप्तिमगमत् ।

विषयः । वेदप्रसिद्धकतिपयधातुलक्षणं ।

---

## No. 1592. व्यूहनवरात्रः ।

Substance, country-made paper, 9½ × 4 inches. Folia, 24. Lines, 10 on a page. Extent, 460 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Vyúha-navarátra.* A guide to the performance of the Vedic rite called *Vyúha-navarátra.* Anonymous.

Beginning. अथ स्तोमयोगः। अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्य्यस्य वर्च्चसा वृहस्पतिस्त्वा युनक्तु देवेभ्यः प्राणायाम्यग्निर्युनक्तु तपसा स्तोमं यज्ञाय बोढवे दधात्विन्द्र इन्द्रियꣳ सत्याः कामा यजमानस्य सन्तु।

End. त्रयी विद्या हिंकार इति रहस्यब्राह्मणं। प्राणः प्रस्तावस्येत्यादिः। स्तुतस्येति यजमानवचनं। इत्युक्थानि।

Colophon. इति नवममहः समाप्तं। इति व्यूढनवरात्रः॥

विषयः। व्यूढनवरात्रविधानं। तत्र तत्र स्तोमादियोजनञ्च।

---

## No. 1593. प्रवर्त्तकज्ञाननिरूपणं।

Substance, country-made paper, 11 × 5 inches. Folia, 32. Lines, 9 on a page. Extent, 558 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Pravartaka-jñána-nirúpaṇa.* A Nyáya treatise on the principles of cognition. The MS. is incomplete, and the author's name cannot be made out.

Beginning. कालकूटगलः क्रूरभुजङ्गवलयोऽपि यः।
न पश्यति तमाश्चर्य्यविग्रहं नौमि दुर्ग्रहं॥
उच्छिन्नप्रच्छिन्नवादे वेदे आचारमूलत्वं व्यवस्थापितं, तत्राचारपदस्य प्रवृत्त्यर्थकतया प्रवृत्तिजनकज्ञानजनकत्वरूपप्रवृत्तिप्रयोजकत्वं।— — — — — — — वेदे आचारमूलत्वव्यवस्थापनानन्तरं प्रवर्त्तकज्ञानं निरूप्यते।

End. द्वेतावश्यं निवेशनीयबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधन——
इतः खण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्ति।

विषयः। प्रवर्त्तकज्ञानविचारः। अत्र भट्टादीनां मतनिरूपणादिकं।

---

## No. 1594. प्राकृतपादटीका।

Substance, country-made paper, 13 × 3 inches. Folia, 35. Lines, 9 on a page. Extent, 1,180 s'lokas. Character, Bengali. Date, Sk. 1705. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Correct.

*Prákṛitapáda-ṭíká.* A commentary on the eighth chapter of the Saṅkshipta-sára grammar of Kramadís'vara. The chapter refers to the

Prákṛit vernacular dialects, and is one which, as far as I have hitherto been able to ascertain, Goyíchandra did not include in his elaborate commentary on the *Sankshipta-sára*. By Vidyávinoda, son of Náráyaṇa, grandson of Vánes'vara, and great grandson of Jaṭádhara. This is the only commentary, and only MS. of it, on the Prákṛit portion of Kramadís'vara's work that has come to my notice after many years' search.

Beginning. प्राक् सर्गादेक एतस्मिन् बहुधा योऽवभासते ।
तं वन्दे नित्यमानन्दं नन्दनन्दनमीश्वरं ॥
पूर्व्वग्रामिकुले कलानिधिनिभश्छन्नी सुमेरुस्थितो
भ्राता तस्य जटाधरो द्विजवरो वाणेश्वरस्तत्सुतः ।
तत्पुत्रः प्रथितोऽभवत् कविवरो नारायणो नामत-
स्तेनेदं क्रियते सुखाय विदुषां यत् प्राकृतं लक्षणं ॥
कृतिना यत् कृतं पूर्व्वं तन्निरस्तं दुरात्मना ।
इदानीं तत् समुद्धृत्य सङ्क्षेपेणोच्यते मया ॥
प्राकृतं संस्कृतयोनि । अथाजादेशविधिः । समृद्धादिष्वादेरत आद्वा । आदेरत इत्यधिकारः ।

End. उक्तञ्च । प्राकृतं संस्कृतयोनीति । संस्कृतन्तु पाणिन्यादिमुनिप्रणीतशास्त्रमिदं ।

Colophon. इति विद्याविनोदाचार्य्यकृतौ प्राकृतपादे अष्टमः परिच्छेदः । समाप्तश्चायं ग्रन्थः।
श्रीमत्पादचरणारविन्दयुगलं ध्यात्वा लिखित्वा द्रुतं
श्रीमद्भागवतद्विजेन कृतिना सम्पूरितो यत्नतः ।
श्रीमत्प्राकृतपाद एष सुखदः काव्यार्थसन्दीपकः
श्रीमच्छम्भुमुखाश्वमैत्रविमिते शाके तिथौ माधवे ॥ शकाब्दाः १७०५ ।

विषयः । सङ्क्षिप्तसारीयप्राकृतपादस्य व्याख्यानं ।

---

## No. 1595. शिशुपालबधटीका ।

Substance, country-made paper, 15½ × 3 inches. Folia, 102. Lines, 9 on a page. Extent, 3,422 s'lokas. Character, Bengali. Date, Sk. 1594. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

*S'is'upála-badha-ṭíká.* A commentary on the great epic poem called Mágha. By Vallabhadeva. The MS. is two hundred years old. See Plate I.

Beginning. श्रुतिसमधिकमित्यादि । अनन्तरं भगवते स्तुतिपाठका इति वच्यमाणप्रकारेण राद्मेः परिणतिं ।

End. तस्य दत्तकस्यात्मजः शिशुपालवधाभिधानमदः काव्यं व्यधत्त । किमर्थं सुकवीनां कालिदासभारविवाणमयूरादीनां यशसि दुराशया लिप्सुया । कीदृशं श्रीरित्यं शब्दो मङ्गलवाक्यत्वात् + + कृतं सर्गाणां समाप्तौ लक्ष्म यस्य, तथा लक्ष्मीपतेश्चरितसङ्कीर्त्तनमेव सारं यस्य । इति विंशतिसर्गः समाप्तः ।

Colophon. इति वल्लभदेवविरचिता माघटीका समाप्ता । शकाब्दाः १५६४ ।

विषयः । माघकृतशिशुपालाभिधानकाव्यस्य एकादशावधिविंशतितमसर्गस्य व्याख्यानं ।

---

## No. 1596. आश्रमोपनिषत् ।

Substance, country-made paper, 14 × 3½ inches. Folium, 1. Lines, 9. Extent, 34 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

*A's'ramopanishad.* On the different orders of Brahmachâris—their distinctive characters and their duties. Anonymous. Though called an Upanishad, it does not pretend to be a supplement to any one of the Vedas.

Beginning. अथ चत्वार आश्रमाः । षोड़शभेदा भवन्ति । तत्र ब्रह्मचारिणश्चतुर्व्विधाः ।

End. समलोष्टाश्मकाञ्चना यथोपपन्नचातुर्व्वर्ण्यभिक्षाचर्य्यं चरन्त आत्मानं मोचयन्ते ।

Colophon. इत्याश्रमोपनिषत् समाप्ता ।

विषयः । चतुर्व्विधाश्रमकथनं । गायत्र–ब्राह्म–प्राजापत्य–बृहद्भेदात् ब्रह्मचर्य्यस्य चातुर्व्विध्यकथनपूर्व्वकं तत्तल्लक्षणकथनं । वार्त्ताकवृत्ति–शालीनवृत्ति–यायावर–घोरसन्न्यासिभेदेन गृहस्थानां चतुर्व्विधत्वकथनं । एषां लक्षणकथनं । वानप्रस्थानां चातुर्व्विध्यकथनं । वैखानसलक्षणं । औडुम्बरलक्षणं । बालखिल्यलक्षणं । फेनपलक्षणकीर्त्तनञ्च । कुटीचक–बह्वदक–हंस–परमहंसभेदेन सन्न्यासिनां चातुर्व्विध्यकथनपुरःसरं तत्तल्लक्षणादिनिरूपणं ।

---

## No. 1697. सिद्धान्तलेशगूढार्थप्रकाशः ।

Substance, country-made paper, 10½ × 5 inches. Folia, 29. Lines, 11—12 on a page. Extent, 897 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Siddhántales'a-gúḍhártha-prakás'a.* A commentary on the *S'ástra-siddhánta-les'a* (No. 1496). By Rámachandra Yajvan. Vide ante, p. 91.

Beginning. अप्पय्यदीक्षितं नत्वा रामचन्द्रेण यज्वना ।
सिद्धान्तलेशगूढार्थप्रकाशोऽयं विरच्यते ॥
ननु यज्ञादिकर्म्मणां स्वर्गादिसाधनानां मनःशुद्धिहेतुत्वं न सम्भवति ।

End. न तु व्रीहीणां लोकतः पाक्षिकी प्राप्तिरपि + चिन्तायागे ब्रेहा + यथा सिद्धान्तः ।
इत्यतः खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । अप्पय्यदीक्षितकृतशास्त्रसिद्धान्तलेशसङ्ग्रहस्य व्याख्यानं ।

---

## No. 1598. भूतडामरतन्त्रं ।

Substance, country-made paper, 17½ × 2¾ inches. Folia, 28. Lines, 5—6 on a page. Extent, 532 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India; also another copy at Berhampur, S'rírâma S'iromaṇi. Appearance, old. Prose. Correct.

*Bhútaḍámara Tantra.* One of the sixty-four original Tantras. It has been very largely quoted by Tántric compilers, but complete MSS. of it are exceedingly rare, and its extent is unknown. The one under notice comprises 15 chapters, but it is obviously incomplete. CONTENTS: I. Introduction, giving an account of Bhúta-ḍámara, a goblin attendant of S'iva. II. Maledictory incantations. III. Secret worship of Sundarí, a mystic form of Durgá. IV. Secret worship of Pis'áchís or female imps to bring them under subjugation. V. Secret worship of Kátyáyaní. VI. Secret worship for the attainment of transcendental powers. VII. Secret worship of Kaiṅkarí. VIII. Secret worship of Cheṭikás, the maid-servants of Durgá. IX. Ditto of Bhútinís or female devils. X. Do. of Apsarasis or the courtezans of Indra's heaven. XI. Ditto of Yakshinis or female Yakshas—a form of demi-god. XII. Ditto of the eight Náginis. XIII. Ditto of Kinnaris. XIV. On passions of particular forms. XV. Secret worship of Aparájitá and other goddesses. In Beal's Tripíṭhaka mention is made of a work of this name translated into Chinese by Shi-hu of the Sung dynasty; but there is nothing to show that it is the same with the work under notice.

Beginning. व्योमवक्त्रं महाकायं प्रलयाग्निसमप्रभं ।
अभद्यभेदकं नौमि भूतडामरनायकं॥

त्रैलोक्याधिपतिं रौद्रं सुरसिद्धनमस्कृतं ।
उन्मत्तभैरवं नत्वा पृच्छत्युन्मत्तभैरवी ॥

End. अन्यथा क्रोधराजेन विनाशो भविता तव ।
उन्मत्तभैरवः प्राह भैरवीं सिद्धिपद्धतिं ॥
मन्त्रयुता मणौ दिव्ये अस्मिन् भूतडामरे(?) ॥

Colophon. इति श्रीभूतडामरे महातन्त्रराजे अपराजितप्रमुखसिद्धिसाधनं पञ्चदशः पटलः ।

विषयः । अत्र पञ्चदशपटलाः सन्ति । तत्र १–मे, भूतडामरविवरणं । २–ये, मारणमन्त्रकथनं । ३–ये, सुन्दरीसाधनं । ४–र्थे, पिशाचीसाधनं । ५–मे, कात्यायनीसिद्धसाधनं । ६–ष्ठे, सिद्धिसाधनं । ७–मे, कैङ्करीसाधनं । ८–मे, चेटिकासाधनविधिः । ९–मे, भूतिनीसाधनं । १०–मे, अप्सुरसीसाधनं । ११–शे, यक्षिणीसाधनं । १२–शे, अष्टनागिनीसाधनं । १३–शे, किन्नरीसाधनं । १४–शे, परिषन्मण्डलक्रोधविधिः । १५–शे, अपराजितप्रमुखसिद्धिसाधनं ॥

---

## No. 1599. गयाकृत्यं ।

Substance, country-made yellow paper, 18 × 4 inches. Folia, 27. Lines, 2—8 on a page. Extent, 1,116 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Generally correct.

*Gayá-kritya.* Rituals for performing funeral obsequies at Gayá. By Náráyaṇa Bhaṭṭa, son of Rames'vara Bhaṭṭa Surí.

Beginning. वादीभयुक्तिकुम्भस्थलदलनाकुण्ठमाननखगर्भात् ।
विकिरन् प्रमेयमुक्ता विद्यावनकेशरी गुरुर्जयति ॥
नत्वाखिलोद्धारधुरन्धरं परं गदाधरं बुद्धिविशुद्धिसाधकं ।
सन्देहमुत्सार्य्य विचार्य्य सादरं मया गयाकार्य्यमुदीर्य्यतेऽधुना ॥

End. स्तुत्वा सम्प्रार्थयेद्देवमादिदेवं गदाधरं ।
इत्यग्निपुराणवचनात् । स्तुतिः प्रार्य्यते प्रयोगे वक्ष्यते ।

Colophon. इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ गयाप्रकरणे गयाकृत्यं समाप्तं ।

विषयः । गयातीर्थं गत्वा स्नातपितृकेण कर्त्तव्यस्य कृत्यस्य कथनं ।

---

## No. 1600. प्रार्थनाशतकं ।

Substance, country-made yellow paper, 14 × 3½ inches. Folia, 14. Lines, 6 on a page. Extent, 243 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

*Prárthaná-s'ataka.* A century of verses in the form of prayers addressed to Durgá. By Rámanidhi.

Beginning. नत्वोमां बलरामशर्मतनयः श्रीरामपूर्वो निधिः
शर्मा शास्त्रमवेच्य संवितनुते सत्प्रार्थनाद्यं शतं ।
यद्यप्यत्र मया विरुद्धमपि यत् प्रोक्तं प्रमादात् स्वयं
तच्छोध्यं कृपया बुधैर्गुणनिभैर्ग्राह्यं च्चमासंश्रयात् ॥ १ ॥

End. श्रीदुर्गागुणकीर्त्तने त्विह च यत् प्रोक्तं त्वशुद्धं मया
तच्छोध्यं दयया बुधैर्गुणकणान् ज्ञात्वा मयि स्वेच्छया ।
यस्माद् ब्रह्ममयीप्रसङ्ग इह वै सङ्गात्वमस्मादपि
तच्छ्रीरामनिधिर्निवेदयति वो विप्रो नतः साम्प्रतं ॥ १०२ ॥

विषयः । नानाविधभक्तिभावगर्भितश्लोकशतकैर्दुर्गाप्रार्थना ।

---

## No. 1601. अनुमानचिन्तामणिटिप्पनी ।

Substance, country-made paper, 17½ × 2¾ inches. Folia, 152. Lines, 6—7—8 on a page. Extent, 5,320 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

*Anumána-chintámaṇi Ṭippani.* Notes on the Anumáṇa-chintámaṇi of Gaṅges'a. By Kaṇáda. The MS. is very defective, wanting several leaves both at the beginning and at the end.

Beginning. ( प्रथमप्रकरणं नास्ति ।) सामान्यतः सपरिकरमनुमानं लक्षयित्वा विशेषलक्षणार्थं तद्विभजते तच्चेति अनुमानमनुमितिकारणं त्रिविधं———

End. विरोधमप्याह । साध्यवद्वृत्तित्वेति । साध्यवद्वृत्तित्वाधिकरणत्वत्वाव——
(इतः खण्डितं )

विषयः । केवलान्वयिमूलस्य हेत्वाभासीयकतिपयमूलस्य च कणादकृतव्याख्यानं ।

## No. 1602. ताराविलासोदयः ।

Substance, country-made paper, 14 × 3½ inches. Folia, 45. Lines, 5—6—7 on a page. Extent, 793 s'lokas. Character, Bengali. Date, Sk. 1620. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

*Tárá-vilásodaya.* A Tántric compilation on the worship of Tárá—a form of Durgá. By Vásudeva Kavichakravartí. The MS. is incomplete. Contents: I. Time meet for the worship of Tárá. II. Ritual for her worship. III—IV. Purification for the worship. V. Homa for the worship. VI. Secret mantras of Tárá and the mode of using them. VII. Hymns in praise of Tárá. VIII. Resignation of one's self to the mantras of Tárá; amulets and charms bearing her name. IX. Sacrifices of she-jackals and other animals to the goddess. X. Knowledge of Tárá said to have been derived from the Atharva Veda.

Beginning. यत्राज्ञाते मनोहत्तौ सदसच्च विभासते ।
यत्र ज्ञाते न सन्नासन् तन्महः समुपास्महे ॥

End. यावच्छम्भुशिरोमणेः शशिकला यावच्च (?)
कुम्देवाच्छल(?)मह्रीपतिश्चाहं सवानलः (?) ।
तावत् सुकवितादिसिद्धिमधुनाश्रम+ +नाम्न यो
जीयाच्छ्रीयुत(?)श्रीवासुदेवसुकवेस्ताराविलासोदयः ॥

Colophon. इति श्रीवासुदेवकविचक्रवर्त्तिविरचिते ताराविलासोदये अथर्वश्रुतिविवरणं नाम दशमोल्लासः ।

विषयः । अत्र दशोल्लासाः सन्ति । तत्र १ उल्लासे, फलमन्त्रवासनाकालविवेकः । २, तारापूजाक्रमः । ३, ४, पुरश्चरणविवेकः । ५, होमयज्ञविधिः । ६, तारामन्त्रन्यासप्रकारः । ७, तारास्तवविवेकः । ८, तारामन्त्रषोढान्यासः ताराकवचसिद्धविद्याकथनं । ९, शिवावल्यादिविवरणं । १०, ताराविषयकाथर्वश्रुतिविवरणं ।

## No. 1603. नीराजनप्रकाशः ।

Substance, country-made yellow paper, 17½ × 4 inches. Folia, 10. Lines, 4—6 on a page. Extent, 217 s'lokas. Character, Bengali. Date, Sk. 1770. Place of deposit, Calcutta, Government of India. Appearance, new. Prose and verse. Generally correct.

*Nirájana-prakás'a.* Rituals for the performance of a rite called Nirájana in honor of Durgá. Compiled under the auspices of Bábu S'ivanáráyaṇa Ghosha of Calcutta, by Jayanáráyaṇa Tarkapanchánana.

Beginning. प्रणम्य पार्वतीनाथं प्रकाशयति सादरं ।
नीराजनविधिं श्रीमाञ्जयनारायणो द्विजः ॥

End. सर्वत्र दीपस्य उत्तापो यथा भूमौ न गच्छति तथा भूमेश्चतुरङ्गुलोर्द्धे स्थापयनीयाः ।

Colophon. इति श्रीलश्रीयुक्तवदान्यधार्मिकशिरोमणिशिवनारायणघोषजमहाशयानुमत्या-श्रीयुक्तजयनारायणतर्कपञ्चाननभट्टाचार्यविरचितो नीराजनप्रकाशः सम्पूर्णः ।

विषयः नीराजनतदाधारवर्त्तिकातैलादिविचारः ।

---

## Nos. 1604 and 1605. मुग्धबोधटीका ।

No. 1604. Substance, country-made paper, 14 × 3 inches. Folia, 284. Lines, 3—4—5—6 on a page. Extent, 5,827 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old Prose. Incorrect.

No. 1605. Substance, country-made yellow paper, 17 × 4 inches. Folia, 60. Lines, 4—6 on a page. Extent, 1,482 s'lokas. Character, Bengali. Date, Sk. 1762. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Mugdhabodha-ṭíká.* A commentary on the Mugdhabodha grammar of Vopadeva. By Kártikeya Siddhánta. The MS. is imperfect. No. 1604 contains only the chapters on conjugations and participles, and No. 1605, derivative nouns and adjectives.

No. 1604. Beginning. ध्यात्वा गुरोः पादसरोजयुग्मं टीकां निबन्धस्य तनोति यत्नात् ।
आलोक्य दोषज्ञमतं सुबोधं श्रीकार्त्तिकेयो धरणीदिवौकाः ॥

End. इति आचार्य्याणां चक्रं समूहः तस्य चूड़ामणेः शिरोरत्नः स चासौ वोपदेवश्चेति सः तेन विरचितं मुग्धबोधं व्याकरणं समाप्तं ।

Colophon. इति कार्त्तिकेयसिद्धान्तविरचितायां मुग्धबोधटीकायां कृदन्तपादटिप्पनी सम्पूर्णा ॥

विषयः । मुग्धबोधस्य व्याख्यानं ।

No. 1605. Beginning. ध्यात्वा गुरोः पदद्वन्द्वं श्रीकार्त्तिकेयशर्म्मणा ।
सङ्गृह्यते च टीकेयं तद्धितस्य सुबोधिका ॥

End. स्यादिरन्ते येषां तानि स्याद्यन्तानि पदानि तेषामध्यायः स्याद्यन्ताध्यायः सुबन्ताध्याय इति पाणिनीयाः ॥

Colophon. इति श्रीकार्त्तिकेयसिद्धान्तसङ्गृहीता तद्धितपादटिप्पनी सम्पूर्णा ।

विषयः । मुग्धबोधस्य व्याख्यानं ।

---

## No. 1606. वैशेषिकसूत्रोपस्कारः ।

Substance, country-made yellow paper, 16 × 4½ inches. Folia, 101, Lines, 4—8—11 on a page. Extent, 3,232 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Corrected.

*Vais'eshika-sútropaskára.* A commentary on the aphorisms of the Vais'eshika system of Philosophy of Kanáda. By S'añkara. The author is not the same with the great commentator on the Vedánta aphorisms.

Beginning. ऊर्द्ध्वबद्धजटाजूटं क्रोड़क्रीड़त्सुरापगं ।
नमामि यामिनीकान्तकान्तभालस्थलं हरं ॥
याभ्यां वैशेषिके तन्त्रे सम्यग् व्युत्पादितोऽस्म्यहं ।
कणादभवनाथाभ्यां ताभ्यां मम नमः सदा ॥
सूत्रमात्रावलम्बेन निरालम्बेऽपि गच्छतः ।
खे खेलिवन्ममाप्यत्र साहसं सिद्धिमेष्यति ॥

End. श्लाघास्य दण्डाद्यपि (?) नेतरेषामियं कृतिः स्यादुपहासयोग्या ।
तथापि शिष्यैर्गुरुगौरवेन परःसहस्रैः समुपासनीया ॥

Colophon. इति श्रीशङ्करकृतौ वैशेषिकसूत्रोपस्कारे दशमोऽध्यायः समाप्तः ॥

विषयः । वैशेषिकसूत्राणां व्याख्यानं ।

---

## No. 1607. ताराभक्तितरङ्गिनी ।

Substance, palm-leaf, $14\frac{3}{4} \times 1\frac{1}{2}$ inches. Folia, 86. Lines, 2—3 on a page. Extent, 645 s'lokas. Character, Bengali. Date, Sk. 1737. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*Tárábhakti-taraṅginí.* An essay on salvation through the medium of worship to Tárá. By Kás'ínátha. The work was composed under the auspices of Rájá Kṛishṇachandra of Nuddea, whose genealogy and life are briefly given in the first chapter.

Beginning. तारा संसारसारा निरवधिपततां घोरसंसारसिन्धौ
दुर्ब्बन्धुप्रेमधारापयसि परिचलत् सेमुषीनावि नित्यं ।
माया नायाति बद्धाखिलजनविलसन्मीनवृन्दे सुनिन्दे
सन्तः सन्तारणाय प्रभवतु भवतां पाशिकीनाशदासे ॥

End. तां नत्वा वसता मुदे दिलपुरं सज्जन्मना तारिणीं
काशीनाथधरामरेण कविना सन्तस्तनिस्तारिणी ।
ताराभक्तितरङ्गिनी विरचिता धीमन्मनोहारिणी
तस्यां षष्ठतरङ्गपूर्णमभवत् कीनाश-भीहारिणी ॥

Colophon. इति जीवन्मुक्तिर्नाम षष्ठस्तरङ्गः ॥
समाप्तोऽयं ग्रन्थो मुनिगिरिशनेत्राम्बुधिरसा-
प्रमाणेऽस्मिन्नब्दे गतवति समाप्तिं नरपतेः ।
गते कन्यां भानौ सुरनतगिरः पादकमले
नमत्काशीनाथचितिसुरकृतः कोविदमतः ॥

विषयः । अत्र षट् तरङ्गाः, प्रथमे, कृष्णनगराधिपतेः कृष्णचन्द्रस्य राज्ञो वंशकीर्त्तनं, नाट्योक्त्या कलिविभवानामधर्म्मादीनां प्रस्तावश्च ।
द्वितीयादिपञ्चमे, मोक्षोपायविवेकविभवानां निवृत्त्यादीनां नाट्योक्त्या प्रस्तावः ।
षष्ठे, कतिभिः स्तुतिभिः ताराभक्तिप्रकटनं, ताराचरणारविन्दभाजां संसार-निवृत्तिकथनञ्च ।

---

BRITISH HIGH COMMISSION
(INFORMATION DEPARTMENT)
HMSO SALES SECTION
Chanakyapuri, New Delhi-11

*Ref.* INF. 62/4/14

3 October, 1968

Dear Sir/s,

We wish to bring to your notice the following publication prepared by the Department of Education & Science and published by Her Majesty's Stationery Office, London :

**SCIENTIFIC RESEARCH IN BRITISH UNIVERSITIES AND COLLEGES 1967-68**

| | |
|---|---|
| Vol. I – Physical Sciences | Rs. 40.50 (45s.) |
| Vol. II – Biological Sciences | Rs. 40.50 (45s.) |
| Vol. III – Social Sciences | Rs. 36.00 (40s.) |
| *(Published on 19.8.1968)* | *POSTAGE IN INDIA EXTRA* |

This is an annual publication, the only one of its kind in Britain, which outlines scientific research in progress in British universities and associated institutions, in colleges of advanced technology, national colleges, regional technical colleges in England and Wales and in equivalent colleges in Scotland and Northern Ireland. As far as possible, all research undertaken within university faculties of science, medicine, engineering, technology and agriculture or in colleges of technology is included, as well as work of a scientific nature occurring within other faculties.

**SPECIMEN ENTRIES :**

**Vol. I – Physical Sciences :**

*16. Mechanical Engineering : 7. Birmingham University*

Prof. S. A. Tobias, D.Sc., Ph D.
Various problems in machine tool vibration . . . Forced non-linear vibration of two degrees of freedom systems.

Prof F. K. Bannister, Ph.D.
Wave action in gases. Induction ramming of single cyclinder four-stroke petrol engines.

Prof. F. Peklenik, Dr.Ing.
Application of statistical techniques to surface finish, grinding and metal cutting.

**Vol. II – Biological Sciences**

*6. Biochemistry : 56. London University : Royal Holloway College*

J. B. Pridham, Ph.D., D.Sc.
Biosynthesis and metabolism of oligo-and poly-saccharides by nucleotide dependent pathways . . . Glycogen metabolism.

P. M. Taylor (Mrs.) Ph.D.
Hydrolytic enzymes of mammalian livers.

*61. London University : University College*

Prof. E. Baldwin, Ph.D., Sc.D.
Nitrogen metabolism in fishes and invertebrates.

Prof. A. L. Greenbaum, Ph.D., D.Sc.
Biochemistry of lactation and control of metabolic processes.

**Vol. III – Social Sciences** (Including Government Departments and other Institutions)

*1. Economics : 26. Glasgow University*

Prof. D. J. Robertson and others
Labour market adjustments under different employment conditions (1966-69).

J. Forbes (Miss) and others
Impact of social and economic changes on the pattern of land use (1966-70).

D. J. Harris and others
Economics of nationalized industries (1967-69).

**STANDING ORDERS :** BY PLACING A STANDING ORDER FOR EITHER ONE, TWO OR THREE VOLUMES OF THIS BOOK YOU WILL ENSURE THAT A COPY OF EACH FUTURE EDITION IS SENT TO YOU AS SOON AS IT BECOMES AVAILABLE IN INDIA.

Yours faithfully,
J. N. KAPOOR
Manager
HMSO SALES SECTION

---

## No. 1608. पिङ्गलटीका ।

Substance, country-made paper, 15½ × 3½ inches. Folia, 22. Lines, 9—10 on a page. Extent, 1,182 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Pingala-tíká.* A commentary on the aphorisms of Piṅgala on Sanskṛit metres. By Vámana Ácharya Sárvabhauma. The text with two scholia has been published in the Bibliotheca Indica; but the work under notice is not one of them.

Beginning. प्रणमति सागसि गिरिशे गिरिजायाः पादयावकरसार्द्रं (?) ।
भज सौभाग्यमिवास्यां (?) दृष्ट्वा कोपारुणां गङ्गां ॥
बहु वीचितुमलसानां निर्बन्धेन शिष्यवर्गानां ।
रचयति पिङ्गलटीकामेतां श्रीवामनाचार्य्यः ॥

End. दिङ्मात्रमेतत् किल पिङ्गलोक्तं नैतावता प्राकृतनिश्चयः स्यात् ।
यद्यस्ति कौतूहलमीक्षणीयं सर्व्वं मम प्राकृतचन्द्रिकायां ॥

Colophon. इति करञ्जकविसार्व्वभौमश्रीवामनाचार्य्यविरचितायां पिङ्गलटीकायां समवृत्तविवरणं नाम द्वितीयपरिच्छेदः ॥ समाप्ता चेयं पिङ्गलटीका ॥

विषयः । पिङ्गलकृतच्छन्दोग्रन्थस्य व्याख्यानं ।

---

## No. 1609. विदग्धमाधवः ।

Substance, country-made paper, 14½ × 3½ inches. Folia, 87. Lines, 6—7—8 on a page. Extent, 2,432 s'lokas. Character, Bengali. Date, Bengali Sm. 1196. A. D. 1760. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Corrected.

*Vidagdha-mádhava.* A drama on the amours of Krishṇa with the milk-maids of Vrindávana and Gokula. By one of the followers of Chaitanya of Nuddea.

Beginning. सुधानां चान्द्रीनामपि मधुरिमोन्मादहमनी
दधाना राधादिप्रणयघनसारैः सुरभितां
समन्तात् सन्तापोद्गमविषमसंसारसरणी
प्रणीतां ते तृष्णां हरतु हरिलीलाशिखरिणी ॥

End. तदेहि गोदोहावसरे मामप्रेक्ष्य चिन्तयिष्यन्तौ पितरावविलम्बं गोकुलं प्रविश्य नन्दयामः। इति निष्क्रान्तः। इति निष्क्रान्ताः सर्व्वे॥

Colophon. इति गौरीतीर्थविहारो नाम सप्तमोऽङ्कः।

विषयः। अत्र सप्ताङ्काः सन्ति। तत्र १–मे, श्रीकृष्णस्य वेणुनादविलासवर्णनं। २–ये, वेणुनादश्रवणात् कामपीड़िताया राधाया मूर्च्छादिवर्णनं। ३–ये, कृष्णस्य राधासङ्गमवर्णनं। ४–र्थे, वेणुहरणवर्णनं। ५–मे, राधाप्रसादनवर्णनं। ६–ष्ठे, कृष्णराधयोः शरद्विहारवर्णनं। ७–मे, कृष्णराधयोर्गौरीतीर्थविहारवर्णन॥

---

## No. 1610. शब्दाप्रामाण्यरहस्यं।

Substance, country-made paper, $18\frac{1}{2} \times 3\frac{3}{4}$ inches. Folia, 30. Lines, 9 on a page. Extent, 1,518 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*S'abda-prámánya-rahasya.* A commentary on Gañges'a's chapter on the testimony of revealed scriptures. By Mathuránátha S'iromaṇi. See *ante* I, p. 295.

Beginning. न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा॥
श्रीमता मथुरानाथतर्कवागीशधीमता।
विषदीकृत्य दर्श्यन्ते तुरीयमणिफक्किकाः॥

End. न चैवं पटज्ञानजन्यत्वादित्येवहेतुरस्तु किं वाक्यत्वोपादानेनेति वाच्यं धूमप्रागभाववद्भिन्नधर्म्मिकत्वेनैवावैयर्थ्यादिति भावः.

Colophon. समाप्तिसूचकं वाक्यं नास्ति।

विषयः। शब्दाप्रामाण्यचिन्तामणिव्याख्यानं।

---

## No. 1611. लीलावतीरहस्यं।

Substance, country-made paper, $14 \times 3$ inches. Folia, 11. Lines, 7 on a page. Extent, 308 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Lílávatí-rahasya.* A commentary on the Lílávatí of Vallabha Áchárya. By Mathuránátha S'iromaṇi.

Beginning. न्यायाम्बुधिक्षतसेतुं चेतुं श्रीराममखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विविच्यते फक्किकार्थो लीलावत्या विशेषतः ॥

End. विशुद्धमातापितृजन्यत्वविशिष्टबुद्धानात्मकस्य तदभावच्छिन्नविशेष्यताकब्राह्मण-
त्वादिप्रकारकप्रत्ययस्यालीकतया । इतः परं खण्डितं ।

विषयः । न्यायविषयकलीलावतीग्रन्थस्य व्याख्यानं ।

---

## No. 1612. अलङ्कारसङ्ग्रहः, टिप्पन्यनुक्रमणिकासहितः ।

Substance, country-made yellow paper, 13¾ × 3¾ inches. Folia, 16. Lines, 3—8 on a page. Extent, 488 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Correct.

*Alaṅkára-saṅgraha.* The figures of rhetoric illustrated by examples, for the use of beginners, with notes and comments. Anonymous.

Beginning. परस्परतपःसम्पत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥
अलङ्कारेषु बालानामवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्ष्यलक्षणसङ्ग्रहः ॥

End. हेतुहेतुमतोरैक्यवर्णनं हेतुरुच्यते ।
लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ॥
चन्द्रालोकाभिधानोऽयं जयदेवेन निर्म्मितः ।
विपश्चितां मुदे भूयादलङ्कारस्य सङ्ग्रहः ॥

विषयः । उपमाद्यलङ्काराणां लक्षणोदाहरणानि ।

---

## No. 1613. श्यामाकल्पलतिका ।

Substance, country-made yellow paper 15½ × 3 inches. Folia, 12. Lines, 4—5—6 on a page. Extent, 279 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India, also another copy at Berhampur, with S'rirâma S'iromaṇi. Appearance, old. Verse. Correct.

*S'yámá-kalpa-latiká.* A Tántric compilation in praise of adoration to Syámá. By Mathuránátha Kavi, Mahámahopádhyáya.

Beginning. गुणातीतो दीनः परमपुरुषः शक्तिरहितः
कलायुक्तः सच्चित्सुखविभवपूर्णोऽथ सगुणः ।
ततः शक्तिर्नादस्तदनु परिबिन्दुस्तदनु या
रवोत्पत्तिः सा त्वं जननि जगदित्थं जनयसि ॥

End. अधीतं विज्ञानं सुजनकुलमध्यापितमपि
अतीतं कर्त्तव्यं यदुचितमभूत् कर्म्म निखिलं ।
इदानीं हे मातस्तव चरणमात्रे स्मृतिमतो
यदि प्राणापायस्तदिह मम सार्थं जनुरिदं ॥
शिवस्य चरणौ नमन् शिवशिवेति सङ्कीर्त्तयन्
चराचरमिदं जगत् शिवशिवात्मकं भावयन् ।
शिवस्य चरणाम्बुजे सकलधर्म्मकर्म्मार्पयन्
व्रजामि शिवतां सदा न हि शिवात् परं किञ्चन ॥

Colophon. इति महामहोपाध्यायश्रीमथुरानाथकविना विरचिता श्रीश्यामाकल्पलतिका समाप्ता ॥

विषयः । श्यामास्तोत्रकथनं ।

---

## No. 1614. श्रीकृष्णस्तवमाला ।

Substance, country-made paper, $11\frac{3}{4} \times 4\frac{1}{2}$ inches. Folia, 94. Lines, 8 on a page. Extent, 1,880 s'lokas. Character, Bengali. Date, Sk. 1770. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

*S'ríkrishna-stavamálá.* A collection of hymns in praise of Krishna and Chaitanya. Anonymous.

Beginning. श्रीमदीश्वररूपेण रसामृतकृताकृता ।
स्तवमालानुजीवेन जीवेन समलङ्कृत ॥
पूर्व्वं चैतन्यदेवस्य कृष्णदेवस्य तत्परं ।
श्रीराधायास्ततः कृष्णराधयोर्लिख्यते स्तवः ॥

End. नारदवीणोज्जीवनसुधोर्म्मिनिर्यासमाधुरीपूर ।
त्वं कृष्णनाम कामं स्फुरसे रसेन रसने सदा ॥

Colophon. इति श्रीकृष्णनामस्तोत्रं । इति स्तवमाला समाप्ता ।

विषयः । चैतन्यदेवस्य कृष्णराधयोश्च स्तवमाला ॥

---

## No. 1615. शिशुहिता ।

Substance, country-made paper, 14 × 5 inches. Folia, 78. Lines, 9 on a page. Extent, 2,457 s'lokas. Character, Bengali. Date, ? Place of deposit, Gopálapura, zillah Vírabhúma, Kás'inátha Kavirája. Appearance, new, but a good deal destroyed by worms. Prose and verse. Incorrect.

*S'is'uhitá.* A primer on astrology, giving rules for calculation of nativities, of auspicious and inauspicious conjunctions of stars, of auspicious days and moments for commencing an undertaking; and for marriage, and containing questions and answers for foretelling future events, and most of the topics usually treated of in Indian astrological works. By Krishnaráma.

Beginning. नत्वा कृष्णपदद्वन्द्वं बालव्युत्पत्तिहेतवे ।
क्रियते कृष्णरामेण ज्योतिषां सङ्ग्रहो मया ॥
विवाहे सर्व्वमाङ्गल्ये यात्रायां ग्रहगोचरे ।
जन्मराशेः प्रधानत्वं नामराशिं परित्यजेत् ॥
देशे ग्रामे गृहे युद्धे सेवायां व्यवसायके ।
नामराशेः प्रधानत्वं जन्मराशिं परित्यजेत् ॥

End. इति मण्डलफलं ।
जयति जयति श्रीमत्पितृपादारविन्दं सुजनगणमुनीन्द्रैः सेव्यमानं नितान्तं ।
निखिलगुणनिधानं सज्जनैः स्तूयमानं भवजलनिधिपारप्रापकं दुःखितानां ॥
वेदाश्वागाष्टधरणीविनियोजितेऽब्दे श्रीवैक्रमे+ + +मासि शुचौ सुपक्षे ।
+ +स्थितौ भास्करवासरे श्रीकृष्णरामेण सुसङ्ग्रहः कृतः ॥
यः पठेच्छिशुहिताभिधन्त्विमं सङ्ग्रहं बहुगुणोपबृंहितं ।
शारदा भवतु तस्य बुद्धिदा + + +विभववृद्धिदा सदा ॥

Colophon. इति श्रीकृष्णरामकृतः शिशुहिताभिधो ज्योतिःसङ्ग्रहः समाप्तः ।
चक्रान्विता शिशुहिता द्विजराजवर्य्यश्रीकृष्णरामकविराजकृता समग्रा ।
औदार्य्यदीप्यदधिराजपदान्वितश्रीश्रीसिद्धनाथनृगराजनरेन्द्रकेण ॥

विषयः। चन्द्रताराशुद्धिः। नक्षत्राणि। राशयः। शतपदचक्रं। भद्रचक्रं। भद्रापुच्छं। नक्षत्रदेवतानिरूपणं। योगनामानि। तिथिदेवताः। करणनामानि। ध्रुवादिगणनिरूपणं। दग्धतिथिनिरूपणं। दग्धमासनिरूपणं। नन्दादितिथिनिरूपणं। कालयोगः। पापयोगः। ज्वालामुखीयोगः। निन्दितवारर्क्षतिथियोगः। उत्पातादियोगः। युगाद्याकथनं। अक्षयायोगः। रजोदर्शनस्नानं। पुंसवनसीमन्तोन्नयनादिकथनं। प्रासौतिकस्थाननिरूपणं। दुग्धपानविधिः। गण्डादिनिरूपणं। तच्छान्तिः। अभुक्तमूलगण्डकथन। नामकरणं। बालनिष्क्रामणं। बालकदर्शनं। ताम्बूलभक्षणं। अन्नप्राशनं। भूम्युपवेशनं। कक्षबन्धः। कर्णवेधः। विद्यारम्भः। वस्त्रपरिधानं। कनकादिभूषणधारणं। अश्वगजबन्धनं। तदारोहणं। अस्त्रसन्नाहादिधारणं। आसनशय्यारम्भः। पोतारोहणं। मुद्रापातनदिनकथनं। गोयात्रा। क्रयविक्रयौ। दोलारोहणं। धनुर्व्विद्या। कूपखननं। वाप्यादिखननं। ऊर्द्धमुखाधोमुखादिनक्षत्रनिरूपणं। वृक्षरोपणं। देवप्रतिष्ठा। देवतागठनं। भैषज्यकरणं। आरोग्यस्नानं। सूचीकर्म्म। राजदर्शनं। सेवाकर्म्म। वाणिज्यं। कृत्यारम्भः। नागशयनादिकथनं। हलचक्रं। वृषचक्रं। धान्यरोपणं। धान्यकर्त्तनं। वीजबन्धनादिकथनं। ग्रहाणां शुभाशुभज्ञानं। घातचन्द्रनिरूपणं। ग्रहणज्ञानादिनिरूपणं। तत्र देयवस्तुनिरूपणं। सङ्क्रान्तिः। समयशुद्धिः। वारभोगादिज्ञानं। घटीलग्नज्ञानं। लग्नज्ञानं। मध्याह्नपादच्छायाज्ञानं। चूडाकरणं। उपनयनं। विवाहप्रकरणं। गोधूलिकथनं। शुक्रस्थितिदिङ्निर्णयः। नववध्वागमनं। तृतीयागमनं। राहुस्थितिज्ञानं। पुन्नार्य्योः प्रथमसमागमः। प्रथमार्त्तवफलादिनिरूपणं। दिग्ग्रामादिनिरूपणं। काकिनी। धारोपधारकथनं। ग्रामस्य शिरोज्ञानं। भूमिविलोकनं। गृहारम्भः। गृहनिर्म्माणे गणनाप्रकारः। वास्तुचक्रं। गृहप्रवेशः। कुम्भचक्रं। यात्राप्रकरणं। राज्याभिषेकः। नौकागठनं। तैलनिषेधः। वस्त्रक्षालनं। दीक्षाकालः। तिथिचक्रं। आनन्दादियोगः। जातप्रकरणं। लग्नज्ञानं। वर्गकथनं। होराचक्रं। चरादिज्ञानं। मित्रशत्रुज्ञानं। पापसौम्यविवेकः। ग्रहदृष्टिनिरूपणं। द्वादशभावविवेकः। अरिष्टविचारः। स्त्रीजातककथनं। स्त्रीराजयोगः। वेश्यादियोगः। जन्ममरणकालादिनिरूपणं। सूर्य्यादीनां भावकथनं। द्विग्रहत्रिग्रहयोगादिफलं। डिम्बचक्रं। योगिनीदशादिनिरूपणं। ग्रहायुः। सूर्य्यचक्रं। गुरुचक्रं। शनिचक्रं। चन्द्रस्य द्वादशावस्थागणनं। कन्यावरप्रश्नः। नष्टप्राप्तिप्रश्नः। सुतासुतप्रश्नः। रोगिप्रश्नः। किंवदन्तीप्रश्नः। स्थाने शुभाशुभकथनं। कन्यालाभप्रश्नः। धनप्रश्नः। परचक्रागमप्रश्नः। जयपराजयप्रश्नः। वर्षाप्रश्नः। चौरापहृतद्रव्यप्रश्नः। राजमन्त्रिशस्याधिपादि-

कथनं । वर्षाधान्यादिमानं । वारनक्षत्रफलं । मेघवाहनं । चन्द्रसूर्य्यसंज्ञानं । सद्योदृष्टिज्ञानं । शकुननिरूपणं । व्याध्युत्पत्तिव्याधिशान्तिकथनं । पञ्चस्वरचक्रं । त्रिनाड़ीचक्रं । सूर्य्यकालानलचक्रं । वेलामण्डलनिर्णयः । नक्षत्रमङ्गलनिरूपणं । योगिनीदशानिरूपणं । पिङ्गलाफलं । भद्रिकादिदशाकथनं । इति ।

---

## No. 1616. रसकौमुदी ।

Substance, country-made paper, 12 × 4½ inches. Folia, 90. Lines, 11 on a page. Extent, 3,092 s'lokas. Character, Bengali. Date, Sk. 1735. Place of deposit, Gopálapura, Zillah Bírabhúm, Kásínátha Kavirája. Appearance, old. Verse. Generally correct.

*Rasa-kaumudí.* A treatise on practice of medicine and therapeutics. By Mádhava Kara. A leading work on Hindu medicine, very largely studied in Bengal. The author wrote a work on the causes and symptoms of diseases; it is called the *Nidána* and is reckoned as the standard work on the subject. It is consulted by every native physician in the country, and no man is reckoned as duly qualified for the medical profession who has not read it. The diseases treated of in the work under notice, and the most appropriate medicines for them are detailed below in Sanskrit.

Beginning. श्रीकृष्णं धृतमन्दरं हृतदशावर्त्तं कुरुध्वंसिनं
सिन्धोर्मन्थननायकं हृदि चिदानन्दात्मकं ध्यायता ।
सम्पूर्णा रसकौमुदीवररसाधारा बहुप्र+ +
+ +श्रीयुतमाधवेन भिषजा यत्नात् समालिख्यते ॥
हरति च बहुमूर्च्छा मूर्च्छितो व्याधितानां
मरणमपि जनानां नाशयेद् यः प्रणष्टः ।
स्वयमपि वरबद्धः खेचरत्वञ्च धत्ते
स जयति भवसारः पारदश्चित्रकर्म्मा ॥

End. गिरिसारान्तकनाम्ना त्रिफलादिरयं गणः ।

Colophon. इति रसकौमुदी समाप्ता । शकाब्दा १७३५ ।

विषयः । ज्वराधिकारे,—भेदिज्वराङ्कुशरसः । ज्वरारिरसः । शीतभञ्जिरसः । ज्वरमुरारिरसः । तरुणज्वरारिरसः । त्रिपुरभैरवरसः । रोगमुरारिः । वैद्यनाथवटिका । रत्नगिरिगुटिका । नवज्वरेभसिंहः । हिङ्गुलेश्वररसः । उदकमञ्जरी । पित्तान्तक-

विषयः। रसः। पर्पटीरसः। कफकेतुवटिका। वातपित्तान्तकरसः। भृङ्गाद्यलौहं। विश्वेश्वररसः। श्लेष्मपित्तान्तकरसः। चन्द्रशेखररसः। ज्वरमातङ्गकेशरिरसः। चिन्तामणिरसः। योगवाहिज्वराङ्कुशरसः। ज्वरराजमुद्गाद्योटकरसः। विषसुन्दररसः।

सन्निपाते,—उन्मत्तेश्वररसः। मोहान्धसूर्य्यरसः। कुलवधूनष्टरसः। अञ्जनं। अञ्जनभैरवः। जयमङ्गलरसः। महावड़वानलरसः। वाड़वरसः। प्रतापतपनरसः। प्राणेश्वररसः। पञ्चाननरसः। मृतसञ्जीवनरसः। सन्निपातभैरवरसः। भस्मेश्वररसः। प्रतापलङ्केश्वररसः। ब्रह्मरन्ध्ररसः। मृत्युञ्जयरसः। महामृत्युञ्जयरसः। कालाग्निरुद्ररसः। सानन्दभैरवीवटिका। सन्निपातान्तकरसः। सूचिकाभरणं। कालानलसूचिका। अघोरनृसिंहसूचिका। अग्निकुमाररसः। कालाग्निभैरवरसः। त्रैलोक्यचिन्तामणिरसः। विश्वेश्वररसः। प्रभाकररसः। त्रिदोषदावानलः। अर्कमूर्त्तिरसः।

ज्वरातिसाराधिकारे,—विविधयोगकथनं। गन्धककज्वलिकाविधानं। चूड़ामणिरसः। भानुभास्कररसः। कनकसुन्दररसः।

विषमज्वरे,—मेघनादरसः। ज्वरान्तकरसः। शीतभञ्जिरसः। स्वच्छन्दभैरवरसः। महाज्वराङ्कुशरसः। ज्वरारिरसः। मेदिज्वराङ्कुशरसः। चन्दनाद्यलौहं। चातुर्थकारिरसः। त्र्याहिकारिरसः। त्रिपुरलीविल्वं। मृतसञ्जीवनरसः। चन्द्रप्रभावटिका। प्राणेश्वररसः। अञ्जनं।

अतिसाराधिकारे,—लोकेश्वररसः। जातीफलरसः। लोकनाथरसः। स्वल्पनायिकाचूर्णं। मृतसञ्जीवनी। कलादिलौहं।

ग्रहण्यधिकारे,—दुग्धवटिका। बृहत्चीरवटिका। अभ्रवटिका। महाप्रयोगवटिका। महागन्धकः। दधिवटिका। वड़वामुखरसः। कनकसुन्दररसः। अभयनृसिंहरसः। सङ्ग्रहग्रहणीकवाटं। सुन्दररसः। ग्रहणीकवाटं। त्रैलोक्यरक्षामणिः। हंसपोटली। प्राणेश्वररसः। वज्रकवाटं। चिताम्बररसः। अर्केश्वररसः। ज्वालामुखवटिका। अग्निकुमारमदकः। बृहद्ग्रहणीकवाटः। विश्वेश्वरवटिका। ग्रहण्यरिरसः। पञ्चामृतपर्पटी। हिरण्यगर्भपोटलीरसः।

अर्शोऽधिकारे,—लौहामृतं। अग्निमुखलौहं। भल्लातकलौहं। पञ्चामृतं। नित्योदररसः। चक्राख्यरसः। चक्रेश्वररसः। शूरणाद्यलौहं। कलावती। श्रीरसेन्द्रः। अर्शोघ्नरसः।

अग्निमान्द्याधिकारे,—पीयूषसुन्दररसः। रामवाणगुटिका। क्रव्यादरसः। पञ्चामृतं। बृहदग्निकुमारः। महाग्निकुमारः। अग्निकुमारः। अग्नितुण्डवटिका। अजीर्णकण्टकरसः। आनन्दोदयरसः। महोदधिरसः। रसवल्लभवटिका। सुधा-

विषयः। सागररसः। वृहद्भुक्तविपाकरसः। अग्निमुखरसः। अग्निकुमारचूर्णं। वड़वाग्निरसः। अग्निरसः।

क्रिम्यधिकारे,—कीटमर्द्दरसः। नानायोगाः।

पाण्डुरोगाधिकारे,—पञ्चाननरसः। कामेश्वररसः। त्रैलोक्यसुन्दररसः। लौहसुन्दररसः। कामलान्तकरसः।

रक्तपित्ताधिकारे,—सुधानिधिरसः। कपर्द्दकरसः। सिद्धिरसः। रक्तपित्तान्तकरसः।

यक्ष्माधिकारे,—लोकनाथरसः। रत्नगर्भपोटली। मृगाङ्करसः। लोकेश्वरपोटली। राजमृगाङ्करसः। कनकसुन्दररसः। कुमुदेश्वररसः। पूर्णचन्द्ररसः। मृतकजीवनरसः। सर्व्वसुन्दररसः। अमृतकणा। तालकादिरसः। यक्ष्मकेशरी। हेमगर्भपोटली। कनकपोटली। सर्व्वाङ्गसुन्दररसः। महामृगाङ्करसः। पञ्चामृतं। रसेन्द्रगुटिका। महारसेन्द्रगुटिका। तारेश्वररसः।

कासाधिकारे,—पञ्चामृतं। श्रीगुणमहोदधिः। तालेश्वररसः। विजयभैरवरसः। रसेन्द्रगुड़िका। सूर्य्यावर्त्तरसः। श्वासकासादिरसः। पर्प्पटीरसः। शिलातालेश्वररसः। रास्नाद्यलौहं। लौहताम्रपर्प्पटी। धूमयोगः।

हिक्काश्वासाधिकारे,—मेघडम्बररसः।

स्वरभेदाधिकारे,—योगाः। वाहकादिरसः।

अरोचकाधिकारे,—रसकेशरी। पिप्पल्याद्यलौहं।

मूर्च्छाधिकारे,—विविधयोगाः। क्षीरसागरः।

दाहाधिकारे,—पित्तघ्नरसः। नानायोगाः।

उन्मादाधिकारे,—अर्कमूर्त्तिरसः। भूतभैरवरसः। मनःस्तम्भनरसः। भूताङ्कुशरसः।

अपस्माराधिकारे,—चण्डभैरवचूर्णं। त्रिकत्रयाद्यलौहं। ब्रह्मवटिका।

वाताधिकारे,—विजयभैरवरसः। नवायसचूर्णं। भूतनाथरसः। श्रीकण्ठरसः। वातगजाङ्कुशरसः। स्वच्छन्दनायकरसः। अमृतलौहं।

वातरक्ताधिकारे,—ब्रह्मरसः। वातरक्तान्तकरसः। सर्व्वाख्यरसः। द्वादशायसरसः। सर्व्वेश्वररसः। अर्केश्वररसः। लाङ्गलाद्यलौहं। पञ्चसारलौहं।

ऊरुस्तम्भाधिकारे,—गुञ्जाभद्ररसः। नानायोगाः।

आमवाताधिकारे,—वातारिरसः। सर्व्वरोगघ्नरसः। आमवातेश्वररसः। शङ्खद्रावकः। महाशङ्खद्रावकः। त्रिफलालौहं। विड़ङ्गादिलौहं। आमवातनिसूदनं।

शूलाधिकारे,—पञ्चामृतं। धात्रीलौहं। शूलसिंहयोगः। पानीयभक्तवटिका। शङ्खवटिका। सर्व्वाङ्गसुन्दररसः। मण्डूरं। रसमण्डूरं। सामुद्राद्यलौहं। ताम्रयोगः।

विषयः। सुधावटिका। सर्व्वतोभद्रलौहं। नीलकण्ठरसः।
विसर्पाधिकारे,—कालाग्निरुद्ररसः। योगाः।
विस्फोटाधिकारे,—मसूर्य्यधिकारे च,—योगाः।
मुखरोगाधिकारे,—मुखरोगहररसः। कवलकेशरी। अष्टमूर्त्तिरसः।
कर्णरोगाधिकारे,—कर्णरोगान्तकरसः।
नासारोगाधिकारे,—नासारोगारिरसः।
नेत्ररोगाधिकारे,—योगाः। नेत्ररोगघ्नवर्त्तिः। रसेन्द्रयोगः। अञ्जनानि। षड़ाननरसः।
शिरोरोगाधिकारे,—चन्द्रकान्तिरसः। योगाः।
स्त्रीरोगाधिकारे,—योगाः। लच्चणालौहं।
बालरोगाधिकारे,—बालरसः।
विषाधिकारे,—नागताम्ररसः। विषहरीवर्त्तिः। कर्पूररसः। अष्टादशविषचिकित्सा।
हृष्याधिकारे,—सिद्धवटिका। जलयोगिकं। महाभ्रवटिका। मन्थानभैरवरसः। कामदेवरसः। विजयचूड़रसः। शङ्खसुन्दररसः। हेमाद्रिरसः। लौहामृतं। अभ्रसुन्दररसः। नीलकण्ठरसः। चतुर्मुखरसः। गुणमहोदधिः। रूपवल्लभः। महाङ्गाराभ्रकं।
पारदादीनां संस्कारप्रक्रिया। दोलायन्त्रं। पातालयन्त्रं। डमरुयन्त्रं। लवणयन्त्रं। पुटयन्त्रं। कच्छपयन्त्रं। भूधरयन्त्रं। हंसपाकयन्त्रं। बालुकायन्त्रं। जलयन्त्रं। त्रिसंघटयन्त्रं। चक्रयन्त्रं। नियामक-पित्त-रसमारक-गुड़ुची-पञ्चपित्त-अम्ल-क्षार-गिरिसारादिगणकथनञ्च।

---

## No. 1617. त्रिपुरापद्धतिः।

Substance, country-made paper, 9 × 4 inches. Folia, 33. Lines, 9 on a page. Extent, 519 s'lokas. Character, Nágara. Date, ? Place of deposit, Káḍidá Thánά, Siuḍi, Zillah Bírabhúm, Kuladánanda Sen. Appearance, old. Prose and verse. Incorrect.

*Tripurá-paddhati.* A manual for the worship of Tripurá—a form of Durgá. Made up of extracts from the leading Tantras.

Beginning. समाध्युपरतं कान्तमेकदा विजने मुदा।
परमानन्दसन्दोहमुदितं प्राह पार्व्वती॥

श्रीमन्नाथ तवानन्दकारणं ब्रूहि शङ्कर ।
योगीन्द्रोपास्यदेवेश प्रेमपूर्णसुधानिधे ॥
कृपास्ति यदि मे शम्भो सुगोप्यमपि कथ्यतां ।
श्रीशङ्कर उवाच ।
निर्भरानन्दसन्दोहः शक्तिभावेन जायते ।

End. पूजापूर्व्वोदिते पीठे नै+त्याद्येषु सारकैः ।
मा+भिर्द्दिग्धीशा +प्रयोगाः पूर्व्ववन्मताः ॥

Colophon. इति त्रिपुरापद्धतिः समाप्ता ।

विषयः । त्रिपुरासुन्दर्य्या मन्त्रोद्धारादिप्रकारादिनिर्द्देशानन्तरं ध्यानस्तोत्रकवचपुरश्चरण-प्रणालीकथनपूर्व्वकं प्रयोगनिरूपणं ।

---

## No. 1618. योगामृतं ।

Substance, country-made paper, 19 × 4 inches. Folia, 321. Lines, 7—8 on a page. Extent, 11,700 s'lokas. Character, Bengali. Date, Sk. 1697. Place of deposit, Gopálapur, Zillah Bírabhúm, Vinodavihárí Kavirája. Appearance, old. Verse. Incorrect.

*Yogámṛita.* A treatise on the practice of medicine and therapeutics. By Gopála Sena, Kavirája, of Dvárandhá. A modern work. Contents given in Sanskrit.

Beginning. आयुर्व्वेदपयोनिधिं सुकृतिभिर्न्निर्म्मथ्य यत् प्रोद्धृतं
लोकानां हितकाम्यया गदजराप्रध्वंसि वीर्य्यप्रदं ।
मान्यानां कृपयात्र हर्षितमना योगामृतं शाश्वतं
सीतानाथपदं विभाव्य तनुते गोपालनामा भिषक् ॥
अत्र ये सन्ति योगास्ते श्रुतदृष्टगदापहाः ।
बलमेधाग्निजनना आयुषो दैर्घ्यकारकाः ॥
चेतायाः प्राणिनः सर्व्वान् व्याधिशत्यातिपीड़ितान् ।
दृष्ट्वानुकम्पया ब्रह्मा तत् प्रशान्त्यै व्यचिन्तयत् ॥

End. नगरी नगरस्येव रथस्येव रथी यथा ।
शरीरस्य च मेधावी कृत्येष्ववहितो भवेत् ॥
इति योगामृते सुस्थाधिकारः ।

शाके रामाङ्कतर्कक्षितिपरिगणिते मासि शुक्रे वलक्षे
पक्षे नत्वा मुरारेः पदयुगकमलं सर्व्वकामैकसिद्धि ।
आलोक्यानेकशास्त्राण्यपि गदकलितानन्दहेतुं स++
ग्रन्थं योगामृताख्यं व्यरचयदधुना वैद्यगोपालदासः ॥ शकाब्दाः १६९३ ।
सेनभूमिसमाजान्तर्द्दारम्बाग्रामवासिनः ।
गोपालस्य प्रयत्नेन ग्रन्थोऽयमजनि द्रुतं ॥
समाप्तश्चायं ग्रन्थः । शकाब्दाः १६९७ ।

विषयः । आयुर्व्वेदागमविवरणं । मानादिपरिभाषाकीर्त्तनं । वैद्यलक्षणं । तत्कृत्यनिरूपणादिकं ।

ज्वराधिकारे,—नवज्वरे वर्ज्जनीयनिरूपणं । एवं परत्र सर्व्वस्मिन् रोगे ज्ञेयं । रेचनवमनादिविधानं । पाचनविधिः । नागरादिपाचनं । कलिङ्गादिपाचनं । पटोलादिपाचनं । द्राक्षादिपाचनं । पिप्पल्यादिपाचनं । निम्बादिपाचनं । आमलक्यादिपाचनं । चातुर्भद्रादिलेहिका । मधुपिप्पल्यादियोगः । नवाङ्गयोगः । मधुकादियोगः । गुडूच्यादिपाचनं । कण्टकार्य्यादिपाचनं । अमृताष्टकयोगः । क्षुद्रादिपाचनं । धान्यपटोलादिपाचनं । पञ्चकोलादिपाचनं । दशमूलादिपाचनं । अञ्जनविधिः । अष्टाङ्गावलेहिका । पञ्चमूल्यादियोगः । वृहन्नवाङ्गयोगः । वृहद्गुडूच्यादिपाचनं । चतुर्द्दशाङ्गपाचनं । अष्टादशाङ्गपाचनं । भार्ग्यादिपाचनं ॥ कारव्यादिपाचनं । मातुलङ्गादिपाचनं । कुलत्थादिलेपः । निदिग्धिकादियोगः । गुडपिप्पली । मुस्तकादिपाचनं । वासादिपाचनं । स्वल्पभार्ग्यादिपाचनं । भार्ग्यादियोगः । दार्व्वादिपाचनं । मधुकादिपाचनं । नस्यविधिः । अष्टाङ्गधूपः । नवज्वराङ्कुशः । ज्वरधूमकेतुः । शीतभञ्जिरसः । ज्वरभैरवरसः । त्रिपुरभैरवरसः । नवज्वरेभसिंहरसः । रत्नगिरिरसः । प्रचण्डरसः । नवज्वरेभाङ्कुशरसः । मृत्युञ्जयरसः भेदिज्वराङ्कुशरसः । चिन्तामणिरसः । शीतारिरसः । ज्वरारिरसः । हिङ्गुलेश्वररसः । तालाङ्करसः । कफकेतुवटिका । श्लेष्मकालानलरसः । चन्द्रशेखररसः । ज्वरमरारिरसः । ज्वरान्तकरसः । पञ्चाननरसः । वाड़वानलरसः । सौभाग्यवटिका । सन्निपातभैरवः । स्वच्छन्दभैरवः । पर्णखण्डरसः । चण्डेश्वररसः । किरातादिरसः । चक्रेश्वररसः । ज्वराशनिरसः । अर्द्धनारीश्वररसः । चूड़ामणिरसः । वेतालरसः । कफकेतुरसः । मृतसञ्जीवनरसः । मृत्युञ्जयरसः । वैद्यनाथवटिका । अभिन्यासहररसः । कपिलेश्वररसः । सन्निपातगजकेशरितैलं । दशमूलतैलं । गुण्डकरसः । महाज्वराङ्कुशरसः । ज्वरनागमयूरचूर्णं । हरिहररसः । चातुर्थकारिरसः । ज्वरारिरसः । सर्व्वज्वरलौहः । ज्वराङ्कुशरसः । महासर्व्वज्वरलौहः । चन्दनाद्यलौहः । दरदयोगः । वृहतसुदर्शन-

विषयः। चूर्णं। भैरवचूर्णं। पिप्पल्याद्यघृतं। दशमूलषट्पलकघृतं। महाषट्पलकघृतं। वासाद्यघृतं। षट्कटुतैलं। लाचाद्यतैलं। महाषट्कज्वरतैलं। पिप्पल्याद्यतैलं। मध्यमलाचाद्यतैलं। बृहत्लाचाद्यतैलं। महालाचाद्यतैलं। अगुर्व्वाद्यतैलं। विल्वादिपञ्चमूली। गुडूच्यादिचतुर्द्दशाङ्गयोगः। निद्राकरणचिकित्सा। दूर्व्वाद्यतैलं। आहाराख्यज्वरचिकित्सायां मन्त्रादिनिरूपणं। माहेश्वरकवचं। अपराजितधूपकथनं। नक्षत्रविशेषे ज्वरादिचिकित्सा। सामान्यतः पथ्यापथ्यनिरूपणं।

अतिसाराधिकारे,—विल्वपञ्चकादिपाचनं। पाठादिपाचनं। किरातादिपाचनं। मुस्तकादिपाचनं। बृहत्ह्रीवेरादिपाचनं। धान्यादिपाचनं। उशीरादिपाचनं। पञ्चमूल्यादिपाचनं। शुण्ठ्यादिपाचनं। जम्ब्वाद्यादिपाचनं। व्योषाद्यचूर्णं। कनकसुन्दररसः। लोकनाथरसः। प्राणेश्वररसः। कल्पतरुरसः। आनन्दभैरवरसः। धान्यपञ्चकपाचनं। बृहद्गङ्गाधरचूर्णं। कुमुदादिलेपः। अभयनृसिंहरसः। आनन्दभैरवरसः। मृतसञ्जीवनरसः। जीरकाद्यचूर्णं। वत्सकादिपाचनं। कुटजपुटपाकः। कुटजावलेहः। नारायणचूर्णं। बृहत्कुटजावलेहः। कुटजाष्टकं। चीरद्रुमाद्यघृतं। पथ्यापथ्यनिरूपणं।

ग्रहण्यधिकारे,—चित्रगुडिकादिः। त्रिफलादियोगः। नागराद्यचूर्णं। पाठाद्यचूर्णं। जातीफलादिचूर्णं। पाठापञ्चकं। महाभैरवी। मध्यनायिचूर्णं। नागार्ज्जुनवटिका। ग्रहणीकवाटः। बृहन्नायिचूर्णं। पूर्णकलावटिका। जातीफलाद्यवटिका। पाणिभक्तवटिका। ग्रहणीगजेन्द्रलेहः। ग्रहणीगजेन्द्रवटिका। पूर्णचन्द्ररसः। त्रिभुवनविजयचूर्णं। स्वर्णपर्णवटिका। वड़वामुखरसः। लवङ्गादिचूर्णं। बृहल्लवङ्गादिचूर्णं। वङ्गसेनोक्तबृहल्लवङ्गादिचूर्णं। लौहपर्प्पटी। पञ्चामृतपर्प्पटी। स्वर्णपर्प्पटी। विजयापर्प्पटी। मदनमोदकः। रसपर्प्पटी। ताम्रयोगः। बृहदग्न्यादिमोदकः। जातीफलाद्यमोदकः। महाभ्रवटिका। मस्तुरघृतं। शुण्ठीघृतं। चित्रकघृतं। चाङ्गेरीघृतं। मरिचाद्यघृतं। महाष्टपलकघृतं। स्वल्पचुक्रमध्वादियोगः। चुक्रसन्धानं। पथ्यापथ्यनिरूपणं।

सङ्ग्रहग्रहण्यधिकारे,—मस्तुरघृतं। कामचारमण्डूरं। बृहल्लवङ्गाद्यचूर्णं। कञ्चटावलेहः। बृहत्कञ्चटावलेहः। मार्कण्डेयचूर्णं। गुणमहोदधिरसः। ग्रहणीकवाटः। महत्पानीयभक्तवटिका। ग्रहणीकवाटरसः। हंसपोट्टलिरसः। महत्श्रीफलतैलं। विल्वतैलं। पथ्यापथ्यनिरूपणं।

अर्शोऽधिकारे,—विविधलेपाः। चतुःसममोदकः। प्राणदागुटिका। शाङ्गायनमोदक। मानिभद्रमोदकः। स्वल्पशूरणमोदकः। बृहच्छूरणमोदकः। विजयचूर्णं। शूरणपिण्डी। लवणोत्तमाद्यचूर्णं। नागार्ज्जुनप्रयोगः। गुड़भल्लातकप्रयोगः। श्रीबाहुसालगुड़प्रयोगः। व्योषाद्यघृतं। सिंहामृतघृतं। कुटजावलेहः। कुटजरसक्रिया।

विषयः। नागराद्यघृतं। रास्नादिघृतं। पञ्चकोलाद्यघृतं। अजापञ्चकघृतं। निर्गुण्डीघृतं। बलाद्यघृतं। चन्दनाद्यतैलं। मध्यचन्दनाद्यतैलं। परिमाणपारिजातस्थमहाचन्दनाद्यतैलं। बलाद्यघृतं। पथ्यापथ्यनिरूपणं।

कासरोगाधिकारे,—पञ्चमूल्यादि-क्वाथादियोगाः। कट्फलादिपाचनं। मरिचाद्यचूर्णं। समशर्करचूर्णं। व्योषान्तिकागुड़िका। महातालीशाद्यमोदकः। मृगाङ्करसः। वृहत्कुलत्थगुड़ः। काससंहारभैरव। आर्द्रकरसायनं। गुणमहोदधिः। विजयवटिका। जयवटिका। नागार्ज्जुनवटिका। राजमृगाङ्कः। दशमूलघृतं। दशमूलाद्यघृतं। दशमूलषट्पलकघृतं। कण्टकारिघृतं। वृहत्कण्टकारिघृतं। रास्नाद्यघृतं। महाकालेश्वररसः। व्याघ्रीहरीतकी। अगस्त्यहरीतकी। पथ्यापथ्यनिरूपणं।

हिक्काश्वासाधिकारे,—नागरगुड़िकादियोगाः। शुष्कमूलकयूषादिप्रयोगः। तालीशादिवटकः। सूर्य्यावर्त्तरसः। श्वासकुठाररसः। श्वासभैरवरसः। अश्वत्थादिमोदकः। मेघडम्बररसः। शिलातालरसः। हासरसायनलौहः। हिंस्राद्यघृतं। तेजोवत्याद्यघृतं। शृङ्गिगुड़घृतं। लवङ्गाद्यचूर्णं। भार्गीगुड़ः। कुलत्थगुड़ः। पथ्यापथ्यकथनं।

स्वरभेदाधिकारे,—कण्टकारिघृतं। भृङ्गराजघृतं। चव्यादिघृतं। ब्राह्मीघृतं। भैरवरसः। कर्पूरादिचूर्णं। पथ्यापथ्यनिरूपणं।

रुच्यधिकारे,—नानायोगाः। कलहकाञ्जिकं। तिन्तिड़ीपालकं। सुधानिधिरसः। पथ्यापथ्यकथनं।

छर्द्द्यधिकारे,—नानायोगाः। विम्बगुड़ः। कुमुदेश्वररसः। एलादिचूर्णं। पद्मकाद्यघृतं। पथ्यापथ्यकथनं।

तृष्णाधिकारे,—नानायोगाः। विदारीघृतं। महोदधिरसः। पथ्यापथ्यविवेचनं।

मूर्च्छाधिकारे,—नानायोगाः। जीवन्त्याद्यघृतं। पथ्यापथ्यकथनं।

मदात्ययाधिकारे,—नानायोगाः। शीतलरसः। पुनर्नवाघृतं। अष्टाङ्गलवणं। पथ्यापथ्यकथनं।

दाहाधिकारे,—नानायोगाः। प्राणेश्वरमोदकः। दाहदैत्यहरतैलं। विविधलेपाः। पथ्यापथ्यनिरूपणं।

उन्मादाधिकारे,—नानायोगाः। सिद्धार्थलेपः। महेश्वरधूपः। उन्मादभञ्जिनी वटिका। शिवाघृतं। महाकल्याणघृतं। चैतसघृतं। महापैशाचिकघृतं। लशुनाद्यघृतं। शतावरीतैलं। उन्मादभञ्जनतैलं। उन्मादगजाङ्कुशः। भूताङ्कुशरसः। लक्ष्मीविलासरसः। पथ्यापथ्यनिरूपणं।

अपस्माराधिकारे,—नानायोगाः। अपस्मारविनाशिनी वटिका। अपस्मारारिवटिका।

विषयः। अश्मर्य्यधिकारे,—प्रवृद्धे छेदनादिविधानं। चारादियोगः। वरुणत्वचादियोगः। उषकादिघृतं। कुशादिघृतं। वरुणादिगणः। श्वदंष्ट्रादिक्वाथः। एलादिचूर्णं। कुलत्थाद्यघृतं। पञ्चमूलाद्यघृतं। वरुणाद्यघृतं। वीरजाद्यघृतं। वरुणाद्यतैलं। महाकुलत्थघृतं। पाषाणभेदीरसः। पाषाणवज्रकरसः। अश्मरीहररसः। त्रिविक्रमरसः। पथ्यापथ्यविवेचनं।

प्रमेहाधिकारे,—पारिजातादियोगः। नानायोगाः। न्यग्रोधाद्यचूर्णं। अभयालेहः। कुशावलेहः। शिलाजत्ववलेहः। विडङ्गादिलोहः। कर्पूरादिमोदकः। गोक्षुरगुग्गुलुः। कफमेहबन्धरसः। मेहानलरसः। वसन्तधाराधररसः। चन्द्रप्रभावटिका। हरशङ्कररसः। वङ्गेश्वररसः। मेहकुलान्तकी। मेहमुद्गररसः। मेहकुलान्तकरसः। पञ्चाननरसः। स्वल्पविश्वचन्द्रप्रभावटिका। सोमप्रभावटिका। शुक्रमातृकावटिका। धात्रीलेहः। वङ्गसेनविधिः। धान्वन्तरघृतं। दाड़िमाद्यघृतं। बृहद्दाड़िमाद्यघृतं। इन्द्रवटिका। मेहद्विरदसिंहरसः। दशमूलतैलं। मागधाद्यतैलं। पथ्यापथ्यकथनं।

सोमरोगाधिकारे,—कदल्यादिघृतं। कदल्यादियोगः। माषचूर्णादियोगः। तालमुस्तकादियोगः। सोमरोगारिरसः। तारकेश्वररसः। धात्रीघृतं। पथ्यापथ्यकथनं।

स्थौल्याधिकारे,—विड़ङ्गाद्यचूर्णं। व्योषाद्यशक्तुमन्थः। अमृताद्यगुग्गुलुः। नवाङ्गगुग्गुलुः। लौहरसायनं। त्र्यूषणाद्यलौहः। त्रिफलाद्यतैलं। ताम्रयोगः। पथ्यापथ्यकथनं।

दौर्गन्ध्यस्वेदाधिकारे,—नानायोगाः। गुड़त्वगादिवटिका। हरीतक्यादिलेपः। भूनिम्बादिलेपाः। लोध्रादिलेपः। चन्दनादिलेपः। चन्दनादितैलं। महासुगन्धितैलं।

कार्श्याधिकारे,—अश्वगन्धादियोगः। प्रपुष्टिकतैलं। पूर्णचन्द्ररसः। पथ्यापथ्यकथनं।

उदराधिकारे,—नानायोगाः। सामुद्रकाद्यचूर्णं। पाठादिचूर्णं। नारायणचूर्णं। अर्कादिभस्म। पुनर्णवाष्टकं। उदरारिलौहः। अग्निकुमारः। सिद्धवटिका। उदरारिरसः। नवायसलौहः। शङ्खद्रावकः। महाद्रावकः। मध्यद्रावकः। स्वल्पद्रावकः। एकादशरसः। ताम्रयोगः। प्राणवल्लभरसः। त्रिकट्वादिलौहः। नाराचरसः। चूलिकावटिका। चित्रकघृतं। दशमूलषट्पलकघृतं। विन्दुघृतं। दधिमण्डघृतं। नाराचघृतं। पथ्यापथ्यकथनं।

प्लीहायकृत्चिकित्साधिकारे,—नानायोगाः। मानगुड़िका। पिप्पलीवर्द्धमानानि। पथ्यामोदकः। चीरपिप्पली। अभयालवणं। चित्रकलेहः। प्लीहवज्रिणीरसः। वह्निसुन्दररसः। प्लीहगजकेशरीरसः। रोहितकाद्यलौहः। यकृत्प्लीहोदरलौहः। लोकनाथरसः। वङ्गेश्वररसः। बृहद्गुड़पिप्पली। चित्रकपिप्पलीघृतं। बृहच्चित्रकघृतं। रोहितकघृतं। महारोहितकघृतं। पथ्यापथ्यकथनं।

शोथाधिकारे,—नानायोगाः। शुण्ठ्यादियोगाः। पुनर्णवाष्टकं। पुनर्णवालेहः। चार-

विषयः। रसः। सूतिकान्तरसः। सूतिकाद्विरसः। रसाद्रवटिका। बृहज्जिरकादिमोदकः। सौभाग्यशुण्ठी। महासौभाग्यशुण्ठी। पथ्यापथ्यविवेचनं।

स्त्रीरोगाधिकारे,—वन्ध्याकरणयोगादिकथनं। स्त्रीवशीकरणयोगादिकथनं। पतिवशीकरणयोगादिकथनं। गर्भरक्षायोगादिकथनं। पथ्यापथ्यकथनं।

बालरोगाधिकारे,—जातकर्म्मकथनं। कुष्ठादियोगाः। नामयोगः। बालचतुर्भद्रिका। धातक्यादिलेहः। भद्रादिक्वाथः। मुस्तकादिकषायादिकथनं। नानायोगाः। दाड़िमादिचूर्णं। भार्गीतैलं। अश्वगन्धाघृतं। बालचाङ्गेरिघृतं। कुमारकघृतं। कुमारकल्याणघृतं। चाङ्गेरिघृतं। सोमघृतं। अष्टमङ्गलघृतं। बालकरसः। बालरोगहररसः। बालरोगान्तकरसः। बालरोगारिरसः। महागन्धकरसः। कुटजाष्टकं। धातक्यादिलेहः। सरलादिधूपः। रक्षामन्त्रादिकथनं। पथ्यापथ्यकथनं।

विषाधिकारे,—सर्पभीतिनिवारणार्थं योगादिकथनं। सर्पदंशे स्वयं मूत्रत्यागकर्त्तव्यता। मन्त्रादिकथनं। कालरुद्ररसः। शिरीषपुष्पादिनस्यविधानं। लूतकृकलासयगतादिविषे प्रतीकारकथनं। वृश्चिकादिविषचिकित्सा। कुक्कुरव्याघ्रादिविषचिकित्सा। मृतसञ्जीवनी। पथ्यापथ्यकथनं।

रसायनाधिकारे,—ऋतुविशेषे भक्ष्यद्रव्यविशेषकथनादिकं। मेधादिजननप्रक्रियाकथनं। गुड़ूच्यादियोगः। सारस्वतचूर्णं। लौहादीनां मारणपुटनादिविधिः। साध्यसाधनपरिमाणविधिः। मारणविधिः। स्थालीपाकविधिः। पुटनविधिः। पाकविधिः। अभ्रकादिविधिः। मन्त्रादिकथनं। रसादिपानोत्तरकर्त्तव्यतानिरूपणं। भक्षणविधिः। अमृतसारलौहः। दासरसायनलौहः। नामयोगः। अमृतभल्लातकी। रसाभ्रचूर्णं। सर्व्वाङ्गसुन्दररसः। चन्द्रिकारसः। मकरध्वजः। पूर्णचन्द्रोदयः। रससिन्दूरं। अन्यविधरससिन्दूरं। नानाविधरससिन्दूरकथनं। चतुर्म्मुखरसः।

वाजीकरणाधिकारे,—गोक्षुरादियोगकथनं। पिप्पल्यादियोगः। विदार्य्यादिचूर्णं। नरसिंहचूर्णं। शृङ्गाराभ्रं। वसन्तकुसुमाकरवटिका। मन्मथरसः। लक्ष्मीविलासरसः। शतावरीघृतं। अश्वगन्धादियोगः। अश्वगन्धाघृतं। महाश्वगन्धाघृतं। वृहदश्वगन्धाघृतं। गुड़कुष्माण्डकं। चूतरसायनं। आम्ररसायनं। वज्राभ्ररसायनं। हेमाङ्गसुन्दररसः। हरशङ्कररसः। कामदीपकरसः। रतिवल्लभरसः। कामधेनुरसः। पूर्णचन्द्रचूर्णः। भल्लातकादियोगः। अश्वगन्धातैलं। कनकादियोगः। वीर्य्यस्तम्भनकरणं। कुसुम्भतैलं। कनकगुड़िका। करवीरादियोगः। रतिवल्लभगुड़िका। ध्वजभङ्गचिकित्सा। तिलादियोगः। गोशृङ्गादियोगः। वशीकरणार्थं लेपादिकथनं। इन्द्रवारुणिकादि योगः। कामेश्वरमोदकः। अन्यविधकामेश्वरमोदकः। वृहत्कामेश्वरमोदकः। मध्यमदनमोदकः। श्रीमहामदनमोदकः। कामाग्निसन्दीपनमोदकः। वृहद्रतिवल्लभमोदकः।

विषयः। मेथिमोदकः । पूगरसायनं । पूर्णचन्द्ररसः । आनन्दमदनरसः । गोक्षुरमोदकः ।

आसवाधिकारे,—उशीरासवकथनं । पिप्पल्याद्यासवकथनं । मध्वासवकथनं । लोहासवकथनं । बब्बुलारिष्टकथनं । द्राक्षारिष्टकथनं । दशमूलारिष्टकथनं ।

स्नेहाधिकारे,—घृतादिस्नेहगुणनिरूपणं ।

स्वेदाधिकारे,—लवणादियोगकथनं

वमनाधिकारे,—पञ्चकषायकथनं । नानायोगकथनं ।

विरेचनाधिकारे,—पिप्पल्यादिपाचनं । नानायोगाः । अभयामोदकः । वैद्यानमावटिका । इच्छाभेदीरसः ।

अनुवासनाधिकारे,—नानायोगकथनं ।

निरूहाधिकारे,—नानायोगाः ।

नस्याधिकारे,—नानायोगाः ।

धूमाधिकारे,—नानायोगाः ।

आश्चोतनतर्पण-पुटपाकाधिकारेषु,—तत्प्रक्रियाकथनं ।

दिनाचाराधिकारे,—भोजनीयद्रव्यादिविधानं ।

सुस्थाधिकारे,—ऋतुविशेषे भक्ष्यद्रव्यविशेषादिनिरूपणं । इति योगामृतविवरणं ॥

---

## No. 1619. मन्त्रचिन्तामणिः ।

Substance, country-made paper, 8 × 4 inches. Folia, 42. Lines, 7 on a page. Extent, 932 s'lokas. Character, Nágara. Date, Sm. 1865. Place of deposit, Phádidhá, Zillá Vírabhúma, Thána Siudí, Bábu Kuladánanda Sena. Appearance, old. Prose and verse. Incorrect.

*Mantra-chintámaṇi.* A compilation of the rules, rituals, hymns, and instructions for the worship of Vaṭuka Bhairava, a companion of S'iva, and often taken for S'iva himself. This divinity is worshipped whenever there is a serious case of illness in a house, or a sudden misfortune is apprehended. When the worship is not practicable, or inconvenient, one particular hymn in praise of the divinity, called *Vaṭuka-bhairava-stava* is religiously recited, morning and evening, in the hearing of the patient until he is cured. Anonymous.

Beginning. नत्वा गुरुं गणाध्यक्षमम्बां वाग्विमलप्रदां ।
साधकाभीष्टसंसिद्धौ वक्ष्ये भैरवपद्धतिम् ॥

प्रणवमाद्ये समुच्चार्य्य वटुकाय आपदुद्धरणाय,——

End. सिद्धमन्त्रे प्रकुर्व्वीत काम्यकर्म्माणि साधकः ।
पूर्व्वोक्तानि महादेवि सिध्यन्त्येव न संशयः ॥

Colophon. इति मन्त्रचिन्तामणौ श्रीवटुकभैरवमन्त्रविधानं समाप्तं ।
संवत् १८६५ । मार्गशुदि ॥

विषयः । तत्र वटुकभैरवमन्त्रस्य ऋष्यादिकथनं । पुरश्चरणं । तत्र प्रयोगः । मन्त्रसन्ध्यादिकथनं । गायत्र्यादिकथनं । वह्निमौल्यकादिनिरूपणं । सिंहवीजन्यासादिकथनं । विशेषार्घ्यस्थापनादिविधिः । प्रमथाद्यावरणार्चनविधिः । रुद्राक्षमालाभिमन्त्रणादिकीर्त्तनं । बलिदानविधिः । सात्त्विकराजसिकभेदेन तद्द्वैविध्यकथनं, लक्षणादिकथनञ्च । दीपदानविधिः । आकर्षणविद्वेषणादिकर्म्मसु घृततैलभेदादिनिरूपणं । धारणयन्त्रलक्षणादिकं । सात्त्विकध्यानकथनानन्तरं राजसध्यानकथनं । वन्ध्याचिकित्सा । त्रिपुण्ड्रकधारणोपयोगिभस्मसाधनद्रव्यादिनिरूपणं । प्रज्ञालाभौषधनिरूपणं । आपदुद्धरणकथनञ्च ।

---

## No. 1620. कार्त्तवीर्य्यार्ज्जुनदीपदानप्रयोगः ।

Substance, country-made paper, 8 × 4 inches. Folia, 21. Lines, 9 on a page. Extent, 337 s'lokas. Character, Nágara. Date, ? Place of deposit, Phádidhá, Thána Siudi, Zillá Vírabhúma, Bábu Kuladánanda Sena. Appearance, old. Prose. Correct.

*Kárttavíryárjuna-dípadána-prayoga.* A manual for dedicating lighted lamps to Kárttavíryárjuna, or Arjuna the son of Kritavírya, a monster with a thousand arms, who was a great king, probably the same whom the Jains look upon with great respect as a universal monarch of great sanctity. The dedication is made in the months of Vaisakha, S'rávana, A's'vina, Kártika, Agrahayaṇa, Pausa, Mágha and Phálguṇa. By Kámalákara Bhaṭṭa, son of Rámakrishṇa Bhaṭṭa, and grandson of Náráyaṇa Bhaṭṭa. A work on this subject has been noticed under No. 237 (*ante* Vol. I, p. 125); but it is by a different author.

Beginning. श्रीगणेशाय नमः । अथ कार्त्तवीर्य्यदीपदानविधिः । तत्र वसन्त-हेमन्त-शिशिरेषु वर्षा-शरदोर्वा वैशाख-श्रावणाश्विन-कार्त्तिक-मार्गशीर्ष-पौष-माघ-फाल्गुणमासेषु शुक्लपक्षे कृष्णपक्षे वा पञ्चम्यवधि वा विशेषतः ।

End. श्रीमन्नारायणाख्यात् समजनि विबुधो रामकृष्णाभिधान-
स्तत्सूनुः सर्व्वविद्याम्बुधिनिजचुलुकीकारतः कुम्भजन्मा ।
दृष्ट्वा नानानिबन्धान् व्यरचयदतुलं ग्रन्थमन्नाकराख्यः
पित्रोः पादाब्जसङ्गो रघुपतिपदयोः स्वाश्रमं प्रार्थयंश्च ॥

Colophon. इति श्रीनारायणभट्टसूनुमहामहोपाध्यायरामकृष्णभट्टात्मजकमलाकरभट्टकृतः श्रीकार्त्तवीर्य्यार्ज्जुनदीपदानप्रयोगः सम्पूर्णः ॥

विषयः । कार्त्तवीर्य्यार्ज्जुनमुद्दिश्य दीपदाने मासनक्षत्रतिथ्यादिनिरूपणं । तत्र आकर्षण-मारणोच्चाटनादौ स्वर्णरौप्यादिपात्रभेदेन दीपदानविधिः । तत्र तत्र गोमहिषादिघृतव्यवस्थापनं । घृतादिपरिमाणकथनञ्च । वर्त्तिनिर्म्माणदानादिविधानं । सम्भारादिदानविधिः । आरम्भकाले शकुनादिना शुभाशुभज्ञानकथनं । दीपप्रयोगः ।

---

## No. 1621. सिंहसिद्धान्तसिन्धुः ।

Substance, country-made paper, 8 × 4 inches. Folia, 257. Lines, 9—10 on a page. Extent, 5,492 s'lokas. Character, Nágara. Date, ? Place of deposit, Phádidhá, Thánà Siudi, Zillá Vírabhúma, Bábu Kuladánanda Sena. Appearance, old. Prose and verse. Correct.

*Siñha-siddhánta-sindhu.* A handbook of Vaishṇava religious duties, diurnal, periodical and optional, including the several feasts and fasts enjoined in the Vaishṇava Calendar. By S'ivánanda Gos'vámí, son of Jagannivása Gos'vámí.

Beginning. श्रीगणेशाय नमः । अथ नित्य+ +प्रयोगः । तत्र श्रीमान् साधकः प्रमाणोक्त-लक्षणे ब्राह्मे मुहूर्त्ते दक्षिणावयवेन शय्यायाः समुत्थाय स्वेष्ट देवं स्मृत्वा वाम-चरणं पृथिव्यां विन्यस्य उत्थाय स्वभवनाद् वहिर्निर्गत्य आवश्यकं विधाय,——

End. मोक्षैकसारां घनदैकसारां विद्यैकसारां शृणु सिद्धविद्यां ॥

Colophon. इति श्रीमद्गोस्वामिजगन्निवासात्मजगोस्वामिश्रीशिवानन्दविरचिते सिंहसिद्धान्तसिन्धौ एकचत्वारिंशत्तरङ्गः ।

विषयः । सामान्यतो नित्यपूजाविधानं । तत्र प्रातःसपर्य्यामूर्त्तेः निर्म्माल्यादिकमपकृष्य दन्तधावनस्नानादिविधानकर्त्तव्यता । नित्यपूजाप्रयोगबाहुल्यं । सन्ध्याविधाना-वश्यकता । वैदिकतर्पणमनुष्ठाय तान्त्रिकतर्पणकर्त्तव्यता । शक्तिसूर्य्यमन्त्रोपा-

विषयः । सकादीनां विशेषकथनं । भूतशुद्धिप्रकारकीर्त्तनं । प्राणायामस्वरूपकथनं । प्राणप्रतिष्ठाविधिः । मातृका-केवल-संहार-सृष्टिस्थित्यादिन्यासनिरूपणं । श्रीकण्ठादिना मातृकान्यासकथनं । केशवादिमातृकान्यासादिकथनञ्च । पञ्चायतनपूजाविधानं । शिवाय षोड़शोपचारदानमन्त्रकथनं । तत्र तत्र आसनादिनिरूपणञ्च । होमविधानं । विस्तरतो नित्यपूजानुष्ठानाशक्तौ सङ्क्षेपेण पूजाविधानं । शाक्तस्य सङ्क्षेपपूजाकरणे दोषकथनं । सूतकादौ नित्यपूजाकर्त्तव्यताविधानं । दीक्षाविधानं । दीक्षालक्षणं । आणवी-शाक्तेयी-शाम्भवीभेदेन दीक्षायास्त्रैविध्यकथनपूर्व्वकं तत्तल्लक्षणकीर्त्तनं । पुस्तकलिखितमन्त्रजापसिद्धिहानिकथनं । गुरुभक्तिमाहात्म्यं । गुरुलक्षणं । मध्यदेशकुरुक्षेत्रादिवासिनां गुरूणां श्रेष्ठत्वकथनं । गौड़-तैल-मागध-केरलादिवासिनां गुरूणां मध्यमत्वकीर्त्तनं । कर्णाट-काश्मीर-कलिङ्ग-कामरूपादिवासिनां गुरूणामधमत्वनिरूपणञ्च । दुष्टलक्षणं । गृहस्थस्य भिक्षु-वानप्रस्थादिभ्यो मन्त्रग्रहणे दोषकथनं । पित्रादिभ्यो मन्त्रग्रहणे दोषः । प्रतिलोमदीक्षानिषेधः । स्त्रिया अपि गुरुत्वकथनं । गुरुणा सार्द्धं ऋणादानक्रयविक्रयादिनिषेधः । गुरौ मनुष्यज्ञाने दोषः । शिष्यलक्षणं । निन्दितशिष्यपरिग्रहे दोषः । गुरुशिष्यपरीक्षाप्रकारः । शूद्रादिभ्यः प्रणवादियुक्तमन्त्रदाननिषेधः । मन्त्राणां ब्रह्मक्षत्रादिभेदकथनं । मन्त्राणां पुं-स्त्र्यादिदैवतादौ दोषादोषनिरूपणं । तेषां सुप्तप्रबुद्धत्वादिनिर्णयः । मन्त्रदोषाः । मन्त्राणां बालत्वादिनिरूपणं । तेषां दीप्तक्षुधार्त्तत्वादिकथनं । मन्त्रदोषनिरसनोपायकीर्त्तनं । मन्त्राणां दशविधसंस्कारनिरूपणं । मन्त्रमेलनप्रकारः । गणमैत्रीविचारः । राशिचक्रादिनिर्म्माणप्रकारः । पाञ्चभौतिकचक्रादिनिरूपणं । सिद्धसाध्यादिनिरूपणं । वर्णशोधनप्रकारः । ऋणधनशोधनकथनं । षट्पदचक्रादिकथनं । मन्त्रग्रहणे मासतिथ्यादिनिरूपणं । शिवमन्त्रावलीनिरूपणं । तत्र मन्त्रविशेषेण ध्यानगायत्र्यादिनिरूपणं । दक्षिणामूर्त्तिमन्त्रादिनिरूपणं । चिन्तामणिमन्त्रादिनिरूपणं । भैरवमन्त्रादिनिरूपणं । वटुकमन्त्रादिनिरूपणं । गजाश्वादिप्रयोगः । ऊर्द्धाम्नायप्रशंसा । तन्माहात्म्यकथनञ्च । पराप्रसादमन्त्रनिरूपणादिकं । प्रपञ्चन्यास-युवनन्यासादिकथनं । दैवतन्यास-महाषोढादिन्यासकथनञ्च । ब्राह्मणस्य सर्व्वथैव सात्त्विकबलिदानकर्त्तव्यता । त्र्यम्बकमन्त्रनिरूपणादिकम् । अत्र कामनाविशेषे होमविशेषविधानं । मन्त्रविचारप्रकरणेऽस्मिन् सर्व्वत्र प्रयोगनिरूपणमस्ति । एवं परत्र । भुवनेश्वरीमन्त्रनिरूपणादिकं । मातङ्गीमन्त्रनिरूपणादिकं । उच्छिष्टचाण्डालिनीमन्त्रादिकथनञ्च । दुर्गामन्त्रविधानादिकं । बालाया मन्त्रादिनिरूपणं ।

---

## No. 1622. विलक्षणचतुर्द्दशकं ।

Substance, country-made paper, 13 × 3 inches. Folia, 2. Lines, 5 on a page. Extent, 29 s'lokas. Character, Bengali. Date, ? Place of deposit, Mayanáḍála, Post Khayarásula, Zillá Vírabhúma, Bábu Nandalála Mukhyopádhyáya. Appearance, fresh. Verse. Correct.

*Vilakshaṇa-chaturdas'aka.* A poem in 14 stanzas on the relation of Chaitanya to Krishṇa. By Sadás'iva Kaviraja Gos'vámí.

Beginning. सुमेरुच विषयस्पृहां व्रजविलासिनीनागरः
करोति चरितं मुनेर्मुनिविचिन्त्यपादाम्बुजः ।
तटे लवणवारिधेः स्वपिति दुग्धसिन्धुं जहौ
विलक्षणविचेष्टितो विहरते शचीनन्दनः ॥ १ ॥

End. विलक्षणचतुर्द्दशप्रमितपद्यमत्यद्भुतं
सदाशिवरसज्ञया सरसमेतदास्वादितं ।
शचीसुतपदाम्बुजे निविड़भक्तियोगप्रदं
विशन्तु सुखसागरे परिपठन्तु सन्तश्चिरं ॥ १५ ॥

Colophon. इति श्रीसदाशिवकविराजगोस्वामिविरचितं विलक्षणचतुर्द्दशकं समाप्तम् ।

विषयः । शचीनन्दनस्य श्रीकृष्णावताराद् वैलक्षण्यकथनपूर्व्वकं तदीयचेष्टादिवर्णनं ।

---

## No. 1623. गङ्गादेवीस्तोत्रं ।

Substance, country-made paper, 13 × 4½ inches. Folia, 2. Lines, 7 on a page. Extent, 48 s'lokas. Character, Bengali. Date, ? Place of deposit, Mayanáḍála, Post Khayarásula, Zillá Vírabhúma, Bábu Nandalála Mukhyopádhyáya. Appearance, fresh. Verse. Correct.

*Gaṅgádeví-stotra.* A poem in praise of Gaṅgádeví, daughter of Nityánanda, the coadjutor of Chaitanya. By Abhiráma Gos'vámí.

Beginning. श्रीराधा युगप+रिष्व मुदितौ संसेव्यभावौ मिथः
प्रेमाविष्टतया पुरा विगलितौ तद्वस्तु गङ्गाघनो ।
सा त्वं सूर्य्यसुता सुता हि कृपया जाताधुनाधीश्वरी
नित्यानन्दसुते प्रसीद गदितं प्रेम्णो वरी मञ्जरी ॥

End. गोपालोऽहं प्रसिद्धो विरचनमस्मृतं रामदासो हि नाम्ना
स्तोत्रं शास्त्रार्थसारं कलिमलमथनं देवि भृत्यस्तवास्मि ।
किन्त्वग्रस्यानने मे भगवति कृपया वाचि + + + + यत्
तत् सम्पूर्णं भवेत्त्वत्पदयुगकमले चार्पितञ्चास्तु नित्यं ॥

Colophon. इति श्रीअभिरामगोस्वामिनाविरचितं श्रीमतीगङ्गादेवीस्तोत्रं सम्पूर्णं ।

विषयः । नित्यानन्दतनयाया गङ्गायाः स्तवनं ।

---

## No. 1624. गौराङ्गस्मरणैकादशकं ।

Substance, country-made paper, 13 × 5 inches. Folium 1. Lines, 14. Extent, 24 s'lokas. Character, Bengali. Date, ? Place of deposit, Mayanáḍála, Post Khayarásula, Zillá Vírabhúma, Bábu Nandalála Mukhyopádhyáya. Appearance, fresh. Verse. Correct.

*Gauráñga-smaraṇaikádas'aka.* Eleven stanzas in praise of Gauráñga. By Vis'vanátha Chakravartí.

Beginning. श्रीगौराङ्गमहाप्रभोश्चरणयोर्या केशशेषादिभिः
सेवागम्यतमा स्वभक्तविहिता लोकैस्तु या लभ्यते ।
तां तन्मानसिकस्मृतिं प्रथयितुं भाव्यां सदा सत्तमैः
स्तौमि प्रात्यहिकं तदीयचरितं श्रीमन्नवद्वीपजं ॥

End. श्रीगौराङ्गविधोः स्वधामनि नवद्वीपेऽष्टकालोद्भवां
भाव्यां भव्यगणेन गोकुलविधोर्लीलास्मृतिर्यादृशी ।
लीलां द्योतयदेतदेकदशकं प्रीत्यन्वितो यः पठेत्
तं प्रीणाति सदैव यः करुणया तं गौरमध्येम्यहं ॥

Colophon. इति श्रीविश्वनाथचक्रवर्त्तिना विरचितं गौराङ्गस्मरणैकादशकं समाप्तम् ।

विषयः । गौराङ्गस्तवनं ।

---

## No. 1625. वैष्णवाभिधानं ।

Substance, country-made paper, 7 × 4 inches. Folia, 3. Lines, 11 on a page. Extent, 48 s'lokas. Character, Bengali. Date, ? Place of deposit, Mayanáḍála, Post Khayarásula, Zillá Vírabhúma, Bábu Nandalála Mukhyopádhyáya. Appearance, fresh. Verse. Correct.

*Vaishnavábhidhána.* The names and titles of the followers and companions of Chaitanya. By Devakinandana Kavirája.

Beginning. प्रणम्यादौ कृपादृष्टिं कृतार्थीकृतभूतलं ।
सर्व्ववाञ्छाकल्पतरुं श्रीगुरुं पुरुषोत्तमं ॥
महाशयान्महाभागान् महापतितपावनान् ।
महाभागवतान् सर्व्वान् वैष्णवान् विष्णुरूपिणः ॥

End. सर्व्वेषामप्युपादेयः सर्व्ववेदाधिकस्तथा ।
श्रवणाध्ययनो (?) नित्यं वैष्णवानां विशेषतः ॥

Colophon. इति देवकीनन्दनकविराजविरचितं श्रीवैष्णवाभिधानं समाप्तम् ।

विषयः । गौराङ्गपार्षदानां वैष्णवानां नामनिरूपणं ।

---

## No. 1626. स्तवावली ।

Substance, country-made paper, 12 × 4½ inches. Folia, 50. Lines, 8--9 on a page. Extent, 1,328 s'lokas. Character, Bengali. Date, Sk. 1695. Place of deposit, Keñdo Gráma, Thána Siuḍi, Zilla Vírabhúma, Paṇḍit Bhagavánachandra Gos'vámí. Appearance, old. Prose and verse. Correct.

*Staváválí.* A collection of poems by different authors in praise of Chaitanya.

Beginning. हरिर्दृष्ट्वा गोष्ठे मुकुरगतमात्मानमतुलं
स्वमाधुर्य्यं राधा प्रियतमसखीवाप्तमभितः ।
अहो गौड़े जातः प्रभुरपरगौरैकतनुभाक्
शचीसूनुः किं मे नयनसरणिं यास्यति पुनः ॥

End. यत्पादाम्बुजयुग्मविच्युतरजःसेवाप्रभावादहं
गान्धर्व्वासरसी गिरीन्द्रनिकटे कष्टेऽपि नित्यं वसन् ।
तत् प्रेयोगणपालितो जितसुधाधारा मुकुन्दाभिधा
उद्गायामि शृणोमि मां पुनरहो श्रीमान् स्वरूपोऽवतु ॥

Colophon. इति स्तवमाला समाप्ता ।
हा किं करोमि सततं भवने प्रमत्तः सङ्गोऽपि नास्ति सुधियो मम दुर्ज्जनस्य ।
याचे तथापि प्रणतिं विदधन्नहं ते स्वामिन् स्ववेऽत्र सुरतिं पुरुदुःखदुःखी ॥

वाणग्रहरसच्छाभिर्मिते शाके रवेर्द्दिने ।
माघे सितचतुर्थ्यान्तु लिखितैषा स्तवावली ॥

विषयः । (जीवगोस्वामिसङ्गृहीतस्तवमालातो भिन्नोऽयं ग्रन्थः । )
अत्र चैतन्याष्टकं । गौराङ्गस्तवकल्पतरुः । मनःशिक्षैकादशकं । युगलस्तोत्रं । गोवर्द्धनाश्रयदशकं । गोवर्द्धनवासप्रार्थनादशकं । राधाकुण्डाष्टकं । व्रजविलासस्तवः । विलापकुसुमाञ्जलिः । प्रेमपूरस्तोत्रं । स्वनियमदशकं । राधिकाष्टोत्तरशतनामस्तोत्रं । राधिकाष्टकं । प्रेमाम्भोजमकरन्दस्तोत्रं । स्वसङ्कल्पप्रकाशस्तोत्रं । राधाकृष्णोज्ज्वलकुसुमकेलिः । आकाङ्क्षास्तोत्रं । नवाष्टकं । गोपालराजस्तोत्रं । मदनगोपालस्तोत्रं । विशाखानन्दनस्तोत्रं । मुकुन्दाष्टकं । उत्कण्ठादशकं । नवयुवद्वन्द्वदिदृक्षाष्टकं । अभीष्टप्रार्थनाष्टकं । दाननिवर्त्तनकुण्डाष्टकं । व्रजनवयुगस्तोत्रं ।

---

## No. 1627. राधारसमञ्जरी ।

Substance, country-made paper, 14 × 4½ inches. Folia, 3. Lines, 10 on a page. Extent, 64 s'lokas. Character, Bengali. Date, ? Place of deposit, Keñdo Gráma, Thánâ Siudi, Zilla Vírabhúma, Paṇḍit Bhagavánachandra Gos'vámí, also another copy at Berhámpura, with Bábu Rádhikáprasáda Dása Sena. Appearance, old. Verse. Incorrect.

*Rádhá-rasa-mañjarí.* A poem in praise of the personal charms and attributes of Rádhá. By Chaitanyachandra, the great reformer.

Beginning. कुचकमलभरार्त्ता केशरिक्षीणमध्या विपुलतरनितम्बा पक्वबिम्बाधरोष्ठी ।
प्रणयतमवयस्यास्कन्धविन्यस्तहस्ता निधुवनरसकुञ्जं याति राधा निकुञ्जं ॥

End. अङ्गे गौरसुचन्द्रिका सुचरिते लावण्यभङ्गीत्मवा
श्यामप्रेमसुधानिधौ रहसि सा सम्पर्णलक्ष्मीः स्वयं ।
लावण्यात् कमला प्रमोहनपदं रूपेण यद्वैभवं
राधायाः समता न चास्ति भुवने ब्रह्माण्डभाण्डे क्वचित् ॥

Colophon. इति चैतन्यचन्द्रेण विरचिता राधारसमञ्जरी समाप्ता ।

विषयः । राधाया निकुञ्जाभिसारवर्णनं । तस्या रूपातिशयवर्णनञ्च ।

---

## No. 1628. गङ्गाष्टकं ।

Substance, country-made paper, 13 × 3 inches. Folium 1. Lines, 12 Extent, 19 s'lokas. Character, Bengali. Date, ? Place of deposit, Keñdo Gráma, Thána Siuḍi, Zilla Bírabhúma, Paṇḍit Bhagavánachandra Gos'vámí. Appearance, old. Verse. Incorrect.

*Gañgáshṭaka.* Eight stanzas in praise of Gañgá Deví, daughter of Nityánanda. By Rúpa Gos'vámí. See No. 1623 for another poem in praise of this lady.

Beginning. कृष्णपादपद्मयुग्मभक्तिपूरवर्द्धिनी
नामकैकदेशयोगपापराशिनाशिनी ।
तापदग्धतापितान्तरथैहेतुशोधिनी
माम्पुनातु सर्व्वदैव रोहिणेयनन्दिनी ॥ १ ॥

End. तुष्टिदेन चाष्टकेन ये स्तुवन्ति चेश्वरी
सन्निधिं विहाय सोऽपि कालचक्र+श्वरी ।
यः स्त++ सद्विरक्तच+++ निजप्सितं
नित्यसिद्धदेहभावनित्यवस्तु सेवितं ॥

Colophon. इति श्रीरूपगोस्वामिना विरचितश्रीनित्यानन्दसुतागङ्गाष्टकं समाप्तम् ।

विषयः । नित्यानन्ददुहितुर्गङ्गायाः स्तोत्रं ।

---

## No. 1629. सुबोधिनी ।

Substance, country-made paper, 16 × 4¼ inches. Folia, 256. Lines, 7—8—9—10 on a page. Extent, 20,128 s'lokas. Character, Bengali. Date, Sk. 1726. Place of deposit, Gopálapura, Post Khayarás'úla, Zillá Bírabhúma, Bábu Binodavihári Kavirája. Appearance, old. Prose. Incorrect.

*Subodhiní.* A commentary on the author's treatise on the Yoga, called Yogámrita. By Gopála Kavirája, son of Siddhes'vara, and grandson of Rámaráma. The author says, that he wrote the commentary because the commentaries written on the work by others were found difficult for beginners.

Beginning. कचिद्बालसुबोधाय कचिद्गूढार्थवित्तये ।
योगामृतस्य टीकाञ्च नत्वा वक्ति रघूत्तमं ॥
तत्रादौ विघ्नविघाताय निजेष्टदेवतास्मरणरूपमङ्गलं निबध्नाति ।

End. अधुनेति। इदानीं प्रायश्येनेत्यर्थः। पुनः स्वस्थितिभूमिं ख्यापयन्नाह,—येन भूमीत्यादिः।

Colophon. इति सुबोधिन्यां सुस्थाधिकारः।

तातः सिद्धेश्वरो यस्य रामरामः पितामहः।

तेनेयं लिखिता टीका गोपालेन सुबोधिनी॥

पूर्व्वटीकाकृतां वाक्यं क्वचिदर्थस्य गौरवात्।

अवन्यं लिखितं तेन न दोषो गुरुबोधिते॥ शकाब्दाः १७२६।

विषयः। स्वकृतयोगामृतग्रन्थस्य व्याख्यानं।

---

## No. 1630 तत्त्वचन्द्रिका।

Substance, country-made paper, 16 × 4¼ inches. Folia, 225. Lines, 6 on a page. Extent, 8,606 s'lokas. Character, Bengali. Date, ? Place of deposit, Gopálapura, Post Khayarás'úla, Zillá Bírabhúma, Bábu Binodavihárí Kavirája. Appearance, old. Prose. Incorrect.

*Tattva-chandriká.* A commentary on Chakradatta's *Chikitsá-sára-sangraha*—a treatise on practice of medicine. By S'ivadása Sena, son of Anánta, grandson of Uddharana, great grandson of Lakshmidhara, great great grandson of Kákustha, and great great great grandson of Sangu Sena, who was the court physician of one S'ikhares'vara. The author was a resident of Málánchi, a village in Bengal.

Beginning. यः सप्तवर्षदेशीयो दधार धरणीधरं।

कंसध्वंसकरं वन्दे तं देवं देवकीसुतं॥

तातः किमथ मातेति यं दृष्ट्वा दृष्टपूर्व्वकं।

अभूत् स्कन्देऽपि सन्देहस्तं देवं शिवयोर्भजे॥

टीकारत्नप्रभा चक्रदत्तनिर्म्मितसङ्ग्रहे।

यद्यप्यास्ते तथाप्येष सङ्क्षेपाय ममोद्यमः॥

विस्तरात्तच्च सङ्क्षिप्य प्रतिक्षिप्य च दुर्व्वचः।

व्याख्यान्तरञ्च निक्षिप्य टीकेयं क्रियते मया॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सितग्रन्थसमाप्तिफलकं तत्प्रतिबन्धकध्वंसमात्रफलकं वा स्वयं कृतमिष्टदेवतानमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति,—गुणेति।

End. आसीत् सभायां शिखरेश्वरस्य लब्धप्रतिष्ठः किल साङ्गसेनः।
वाणीविलासं कविसार्व्वभौमं विजित्य यः प्राप यशोऽनुरागं॥
काकुस्थसेनस्तनयस्ततोऽभूत् ततोऽपि लक्ष्मीधरसेननामा।
तस्मादभूदुद्धरणस्तनूजस्तस्मादनन्तस्तनयोऽथ जज्ञे॥
मालञ्चिकाग्रामनिवासभूमेर्गाड़ावनी+ + + + + + + ।
+ + + + + + + चक्रदत्तटीकामिमां श्रीशिवदाससेनः॥
टीकासु पूर्व्वैर्विहितासु येऽर्था ये वा गुरुभ्योऽधिगता मयापि।
सन्त्यत्र ते वस्तदलं श्रमेण टीकान्तरान्वेषणजेन धीराः॥

Colophon. इति श्रीशिवदाससेनकृता तत्त्वचन्द्रिकाख्या चक्रसङ्ग्रहटीका समाप्ता।

विषयः। चक्रदत्तकृतचिकित्सासारसङ्ग्रहाभिधग्रन्थस्य व्याख्यानं।

---

## No. 1631. कामधेनुः।

Substance, country-made paper, 13 × 3 inches. Folia, 55. Lines, 5 on a page. Extent, 1,431 s'lokas. Character, Bengali. Date, Sk. 1702. Place of deposit, Bhímagaḍa, Post Khayarás'úla, Zillá Bírabhúma, Paṇḍit Bámácharaṇa Bhaṭṭácharya. Appearance, old. Prose. Generally correct.

*Kámadhenu.* A commentary on the author's list of verbs entitled *Kavikalpa-druma.* By Vopadeva. One Bhagavata S'armá completed the copying of the codex on Sunday the 6th of the month of Pausa of the S'aka year 1702.

Beginning. येन विधद्विकरणैर्व्याख्यातैर्धातुलोच्छितैः।
प्रकाशैः सम्प्रकाशन्ते क्रियास्तं नौमि गोपतिं॥
कविकल्पद्रुमो धातुपाठो विरचितो मया।
धातुवृत्तिः कवेः कामधेनुर्नाम्नाभिधीयते॥
तत्र प्रयोगा धातूनामितक्रमादिफलार्पकाः।
शपतिपोस्त्वनितां तुल्यप्रयोगानामभेदकाः॥
ग्रन्थारम्भे विघ्नविघाताय ग्रन्थकृत् उचितेष्टदेवतास्मरणरूपं मङ्गलमाचरति, शब्दाकरेत्यादि।

End. अथ ग्रन्थकृत् स्वमाख्यानं ख्यापयति, विद्वज्जनेत्यादि। य एष कविकल्पद्रुमो नाम ग्रन्थः वोपदेवद्विजेन तेने + + + स सेव्यः। स्वर्गे गीर्भारित्यादिना स्वीयकीर्त्त्या समाच्छादनं। — — — — — — — —
भागीरथीनीरदिमुक्तिकासः श्रीकामदेवं कविकल्पधेनुं॥

Colophon. ध्यात्वा श्रीगुरुपादपद्ममसलं भक्तालिभिः सेवितं
शाके रसखसिन्धुचन्द्रविमिते मासे सहस्ये मुदा ।
वारेऽर्कस्य तिथौ गुहाननमिते श्रीकामधेनुं कवेः
श्रीमद्भागवतो द्विजः समलिखच्छ्रीमित्रगेहे वसन् ॥

विषयः । स्वकृतकविकल्पद्रुमाभिधधातुपाठस्य व्याख्यानं ।

---

## No. 1632. अणीयसीनाम्नी माघटीका ।

Substance, country-made paper, 16 × 3 inches. Folia, 41. Lines, 7 on a page. Extent, 395 s'lokas. Character, Bengali. Date, ? Place of deposit, Bhímagaḍa, Post Khayarás'úla, Zillá Bírabhúma, Paṇḍit Bámácharaṇa Bhaṭṭácharya. Appearance, new. Prose. Generally correct.

*Aṅiyasì-ṭiká.* A commentary on the epic poem called Mágha. By Bhagiratha. *Vide* Vol. III. No. 1273 for the text, and IV. No. 1595, for a commentary by another.

Beginning. प्रणमामि सदाधारे व्याकारे पार+भवां ।
वाणीकल्पलतां वन्दे षट्पदार्थतरुश्रितां ॥
बोधार्थमल्पबुद्धीनां टीकामेतामणीयसीं ।
विदधाति द्विजः श्रीमान + +वति भगीरथः ॥
अत्र हि काव्यप्रबन्धेन चित्तप्रसमकारणं भगवन्नारायणमुपश्लोकयन् विशिष्टवस्तु-
निर्देशार्थमिदं नमस्कारमुखं काव्यं निबवन्ध ।

End. अस्य श्रीः लक्ष्मीः चिरं गता. इदं सम्प्रत्यपि श्रियं शोभां रचति, अत एव
अनयोर्महदसादृश्यं ॥८२ ॥

Colophon. इति माघकाव्ये तृतीयसर्गटीका सम्पूर्णा ।

विषयः । माघकृतशिशुपालवधस्य व्याख्यानं ।

---

## No. 1633. दैवज्ञवल्लभा ।

Substance, country-made paper, 14 × 3 inches. Folia, 18. Lines, 6 on a page. Extent, 395 s'lokas. Character, Bengali. Date, ? Place of deposit, Bhímagaḍa, Post, Khayarás'úla, Zillá Bírabhúma, Paṇḍit Bámácharana Bhaṭṭácharya. Appearance, old. Verse. Incorrect.

*Daivajña-vallabhá.* A treatise on astrology and divination. By Varáha-mihira. A very scarce work.

Beginning. नत्वा दि+तुममलं भैरवमद्वैतमीश्वरं ।
+++++कृतप्रश्ने दैवज्ञवल्लभारचना ॥
होराद्यं दृश्भेदं व्योमचराणां निरूप्य भावफलं ।
स्पृष्टो यद् यत् कथयति शुभाशुभं तत्तदन्यथा नोक्तम् ॥

End. यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्म्मणः पङ्क्त्या व्यञ्जयति ॥

Colophon. इति दैवज्ञवल्लभायां वराहमिहिरकृतायां षोडशोऽध्यायः ।
आदित्यदासतनयस्तदवाप्तबोधः कापित्थलः सवितृलब्धवरप्रसादः ।
आवन्तिको मुनिमतान्यवलोक्य यत्नादेतां वराहमिहिरो रचयाञ्चकार ॥
इति दैवज्ञवल्लभा समाप्ता ॥

विषयः । शुभाशुभप्रश्नकरणे फलपुष्पादिधारणकर्त्तव्यता । प्रश्नकर्तुरिङ्गितादिना शुभाशुभनिरूपणं । लग्ननिर्णयः । शुभाशुभज्ञानोपायः । लाभालाभनिरूपणोपायः । गमनागमननिरूपणं । शत्रुगमागमनिरूपणं । प्रवासस्थितस्य शुभाशुभज्ञानं । जयपराजयज्ञानोपायकथनं । ग्रहकोपविशेषेण मृत्युकथनं । नष्टलाभोपायकथनं । मुष्टिचिन्तनं । दृष्टिगणना । विवाहगणना । कन्यापुत्रजन्मगणना । प्रकीर्णकगणना । नृपयात्रादिनिरूपणं ।

---

## No. 1634. सिद्धान्तचिन्तामणिः ।

Substance, country-made paper, 17 × 4 inches. Folia, 24. Lines, 7 on a page. Extent, 1,298 s'lokas. Character, Bengali. Date, ? Place of deposit, Gopálapura, Post Khayarás'úla, Zillá Bírabhúma, Bábu S'ríkaṇtha Kavirája. Appearance, old. Prose. Incorrect.

*Siddhánta-chandriká.* A commentary on Mádhava Kara's treatise on diagnosis called *Rugvinis'chaya.* The MS. is incomplete, and the author's name cannot be made out.

Beginning. ईशमनीशं कारणमकारणं कारणमव्यक्तं ।
आदिमनादिं शाश्वतमशाश्वतमहमच्युतं वन्दे ॥
आयुर्वेदमहोदधिं सुकृतिभिर्वैद्यैर्विमथ्योद्धृता
ये व्याख्यामणयो नितान्तकुमतिध्वान्तौघविध्वंसिनः ।

तेभ्यः केवलरामकृष्णकृपया व्यक्तीकृतः केनचित्

+ +सोऽयमुपास्यतामनुदिनं सिद्धान्तचिन्तामणिः ॥

यद्यपि सुमनोवृन्दे + + सदालिरामोदेत्!

तथापि कदाचित् मन्दं कुन्दं न किं भजते ॥

अथ खलु निखिलतत्त्वज्ञानमहामहिमा++धिया मार्जितसन्ततस्वान्तसन्ताप-सन्ततिः यशोदयानन्दबलेन च कलितकलेवरो माधवकरः सर्व्वेषां सुखेन प्रकृतिविकारादितत्त्वज्ञानार्थं रोगनिर्णयस्वष्टिमाविश्चकार । तत्र प्रथमं परम-प्रामाणिकपरिप्राप्तकर्त्तव्यताकप्रारिप्सितविघ्नविघातफलकं कृतेष्टदेवताशिवप्रणाम-रूपं मङ्गलं ग्रन्थाध्येतॄणामपि शिवाय शिष्यशिक्षार्थञ्च ग्रन्थादौ तन्निबद्धवान् । प्रणम्येत्यादि ।

End. चरके, ग्रहणीदुष्टत्वेनाग्निमान्द्यादीनामपि ग्रहणीरोगत्वेनाभिधानात् । यदाह,–यस्याग्निः पूर्व्वमुद्दिष्टो रोगानीके चतुर्व्विधः । (इतः खण्डितं ।)

विषयः । माधवकृतरुग्विनिश्चयाभिधग्रन्थस्य व्याख्यानं ।

---

## No. 1635. नानौषधविधिः ।

Substance, country-made yellow paper, 13 × 3½ inches. Folia, 14. Lines, 10 on a page. Extent, 420 s'lokas. Character, Bengali. Date, ? Place of deposit, Gopálapura, Post Khayarás'úla, Zillá Vírabhúma, Bábu S'ríkantha Kaverája. Appearance, new. Prose and verse. Incorrect.

*Nánaushadha-vidhi.* A treatise on Indian materia medica, treating principally of metallic medicines. Author's name unknown.

Beginning. अथ धातूनां शोधनं वक्ष्यामः । स्वर्णं रौप्यं ताम्रं सीसकं रङ्गं गन्धकाभ्रपित्तलं खर्प्परञ्च । इत्यादि ।

End. सप्ताहदीप्तमिव जठराग्नेः शालीषष्टिकदर्भेषु ।

Colophon. इति नानौषधिविधिः समाप्तः ।

विषयः । सर्व्वेषां धातूनां शोधनोपायकथनं । स्वर्णमारणविधिः । रौप्यमारणविधिः । ताम्रमारणविधिः । सीसकमारणविधिः । रङ्गमारणविधिः । मुक्तामारणविधिः । हीरकमारणविधिः । मण्डूरशोधनं । हिङ्गुलशोधनं । हिङ्गुलस्य मारणाभाव-कथनं । हरितालशोधनं । मनःशिलाशोधनं । तुत्थकशोधनं । पारदशोधनं । पारदमारणविधिः । गन्धकशोधनं । तन्मारणकर्त्तव्यता । कज्ज्वलीकरणविधिः । अभ्रकशोधनं । अभ्रकमारणविधिः । पारदमारणप्रक्रिया । पारदबन्धनोपाय-कथनं । सद्यो हरितालमारणप्रक्रिया । पञ्चामृतरसः । माक्षिकशोधनं । नाग-रङ्गशोधनं ।

---

## No. 1636. सुबोधिनी ।

Substance, palm-leaf, 15 × 2 inches. Folia, 115. Lines, 5 on a page. Extent, 4,061 s'lokas. Character, Bengali. Date, ? Place of deposit, Gánguṭe, Post Purendrapura, Zillá Vírabhúma, Gopínátha Bhaṭṭáchárya. Appearance, old. Prose. Correct.

*Subodhiní.* A commentary on the Bhaṭṭi Kávya. By Kumudánanda. This is not near so well-known as the work of Bharata Mallika. The author follows the rules of Páṇini in explaining the text.

Beginning. श्रीकृष्णगिरिशौ नत्वा धर्म्मकामार्थमोक्षदौ ।
चक्रे श्रीकुमुदानन्दो भट्टिटीकां सुबोधिनीं ॥
अत्र कविना श्रीस्वामिसूनुना सर्गबन्धलक्षणं प्रकीर्णकाण्डं प्रथमं दर्शयितुं तस्य विषयव्यापकत्वात् तत्रादौ वस्तुनिर्देशं कुर्व्वन् इष्टदेवतास्मरणात्मकं मङ्गलं विघ्नोपशान्तये करोति । रुचिरनाम छन्द आदौ निबध्य पश्चाज्जात्यादिच्छन्दसा सर्गनिर्व्वाहः । यथा छन्दोमञ्जर्य्यां ।——जभौ सजौ रुचिरेत्यादि । अभूदिति ।

End. इतः समुद्रात् उत्तरा या दिक् तस्याः । उत्तरा हि वसन् रामः लवणतोयतो दक्षिणतः ।

Colophon. इति श्रीकुमुदानन्दकृतायां सुबोधिन्यां भट्टिटीकायामष्टमः सर्गः ।

विषयः । भट्टिकाव्यस्य अष्टमसर्गान्तं व्याख्यानं ।

---

## No. 1637. भट्टिबोधिनी ।

Substance, palm-leaf, 15 × 2 inches. Folia, 108. Lines, 4 on a page. Extent, 2,268 s'lokas. Character, Bengali. Date, ? Place of deposit, Gáṅguṭe, Post Purendrapura, Zillá Vírabhúma, Gopínátha Bhaṭṭáchárya. Appearance, old. Prose. Correct.

*Bhaṭṭibodhiní.* A commentary on the Bhaṭṭi Kávya. By Naranáráyaṇa Vidyávinoda A'chárya, son of Vánes'vara, who was brother of Jaṭádhara of the family of Púrvagráma. The object of this work is to explain all grammatical references by citing the authority of the Sañkshiptasára grammar.

Beginning. नत्वा रामपदद्वन्द्वमरविन्दं भवच्छिदं ।
विद्याविनोद आचार्य्यः कुरुते भट्टिबोधिनीं ।

पूर्व्वग्रामिकुले कलानिधिनिभश्चक्री सुमेरुस्थितो
भ्राता यस्य जटाधरो द्विजवरो वागीश्वरस्तत्सुतः।
तत् पुत्रः प्रथितोऽभवत् कविवरो नारायणो नामतः
सोऽभूदभ्यसनेन शास्त्रनिच+ विद्याविनोदार्थतः॥
सन्ति यद्यपि भूयांसः शब्दलक्षणचक्षुषः।
तथापि जौमराभ्यासविशेषायैव शिष्यते॥
प्रायो हि मत्सरधियः कवयः पृथिव्यां सन्ति क्वचित् क्वचिदपि प्रियसाधुवादाः।
एकं प्रियाप्रणयिकर्म्म करोमि नित्यं मध्ये द्वयोरपरमादरवत्तयैव॥
अथ पाणिनिप्रहतलक्षणार्थानवगन्तुमशक्नुवतां भाष्यकारजिनेन्द्रप्रभृतिनानामतानुसारिणां सन्देहसन्दोहव्याधिपीड़ितानां शिष्यप्रशिष्याणामुद्दिधीर्षुर्भगवान् श्रीधरस्वामिसूनुर्भट्टहरिः काव्यच्छलेन समस्तं व्याकरणार्थं दर्शयन् रामकथयैवात्र मङ्गलान्तरमनादृत्य काव्यमिदमारब्धवान्। तत्र शब्दलक्षणं धातुमूलकत्वात् सकलपादानां धातुपादं प्रथममेव अभिधास्यामीति सत्यां चिकीर्षायां भवतेः क्रियासामान्यवाचित्वादाह,—अभूदिति।

End.. प्रतिदिशं धीरमन्द्रमुच्चैर्निस्वनमुदस्यन् क्षिपन् तड़िल+ + + ++++ + जलदोऽप्येवं।

Colophon. भट्टिकाव्यस्य एकादशसर्गान्तं व्याख्यानं।

---

## No. 1638. काव्यप्रकाशविस्तारिका।

Substance, country-made paper, 13 × 4 inches. Folia, 128. Lines, 10 on a page. Extent, 6,400 s'lokas. Character, Bengali. Date, ? Place of deposit, Sájiná, Post Purendrapura, Zillá Vírabhúma, Rames'chandra Bhaṭṭáchárya. Appearance, old. Prose. Correct.

*Kávyaprakás'a-vistáriká.* A commentary on the Kávyaprakás'a, a treatise on rhetoric. By Paramánanda Chakravartí. Incomplete. This is a little-known work.

Beginning. प्रियायाः पद्मायाः प्रणयकुपितायाः स्तुतिपरः
प्रसादं निर्म्मित्सुर्जलधिजनिवाणीपरिदृढः।
परस्याः कौटिल्यात् कटुनि वचसि प्रेर्यति भृशं
प्रदीप्तायां तस्यां जयति विनमद्वक्त्रकमलः॥

काव्यैः कदर्थ्यैरिव नो भवद्भिर्नवेति हेला कृतिनः कृतौ नः।
निवारितान्तःकलुषः किशोरतां दधत् कलाभृन्न पुनः पुरातनः॥
न्यायाचार्य्यमनङ्गीकृतपरपक्षं बहुज्ञमीशानं।
गुरुमिह नत्वा काव्यप्रकाशविस्तारिकां तनुमः॥
प्रधने द्रोणजवाणैः क्षतविक्षतमुत्तरोदरगं।
रक्षतु परीक्षितं मे वचनं विबुधः सुदर्शनेनाशु॥
अथाविगीतविशिष्टाचारपरम्पराप्राप्तप्रारिप्सितसमाप्तिप्रतिबन्धकदुरितध्वंसहेतु-
भूतमङ्गलाचारपरां प्रथमकारिकामवतारयति हत्त्विकृत्। ग्रन्थेत्यादि।

End. प्रभेोरिति। इदानीमेषां दोषाणां यथा योगमित्यस्यार्थमुपसंहृत्य दर्शयति
तद्देत इति। सम्पूर्णमिदं काव्यलक्षणमिति 'तद्दोषौ' इत्यादि यत् काव्य-
लक्षणमुक्तं तद्विशेषणानां दोषगुणालङ्काराणां कथनात् सम्पूर्णमित्यर्थः॥

Colophon. इति श्रीपरमानन्दचक्रवर्त्तिकृतौ काव्यप्रकाशविस्तारिकायां अर्थालङ्कारविवे-
चनो नाम दशम उल्लासः। समाप्तोऽयं ग्रन्थः।

विषयः। काव्यप्रकाशस्य व्याख्यानं।

---

## No. 1639. हर्षहृदया।

Substance, country-made paper, 14 × 4 inches. Folia, 73. Lines, 8 on a page. Extent, 2,610 s'lokas. Character, Bengali. Date, ? Place of deposit, Sájiná, Post Purendrapura, Zilla Vírabhúma, Rámachandra Bhaṭṭáchárya. Appearance, old. Prose. Correct.

*Harsha-hṛidaya.* A commentary on the Naishadha of S'rí Harsha. By Gopinátha A'chárya. No. 1205 notices a commentary by a different author.

Beginning. नमामि वाचामधिदेवतां तां त्रिलोकनाथैकनिकेतनस्थां।
प्रसादमासाद्य यदीयमेव वागीश्वरस्यापि कवित्वशक्तिः॥
सन्त्येव सम्प्रति महाकविभिः प्रणीता नानार्थबोधमधुरा विवृतिस्त्वनेका।
तेषां तदत्र तुलना न तथा ममैषा खद्योतकीटतुलनैव यथेन्दुकान्तेः॥
वक्तुं सुधीरपि गुरूननुपास्य यस्य शक्नोति किञ्चिदपि नैव रहस्यमस्य।
काव्ये श्रमोऽत्र विवृतौ कविपण्डितस्य मोहाय किन्नु मम सम्प्रति बालकस्य॥
तथापि बाल्याच्चपलत्वमुच्चैरस्य प्रवृत्तोऽस्मि विधातुमेतत्।

+ + + + + विधुरोऽपि काव्ये बालस्य किं छत्यविधौ विचारः ॥
निपीय इति ।

End. विजयसेननाम्नो गौड़ेश्वरस्य प्रशस्तिरचनायास्तस्य श्रीहर्षकवेः काव्यस्य नैषधस्य चरिते पञ्चमः सर्गोऽगमत्। पञ्चानां पूरणः पञ्चमः। पुरुष्कृतस्य कैतवं कपटो यत्र सर्गे ।

Colophon. इति गोपीनाथाचार्य्यकृतौ हर्षहृदयाख्यायां नलचरितटीकायां पञ्चमः सर्गः ।

विषयः । श्रीहर्षकृतनैषधचरिताभिधानकाव्यस्य पञ्चमसर्गान्तं यावद् व्याख्यानं ।

---

## No. 1640. धातुपारायणः ।

Substance, country-made paper, 16 × 4 inches. Folia, 17. Lines, 8 on a page. Extent, 426 s'lokas. Character, Bengali. Date, ? Place of deposit, Bhímagaḍa, Post Khayarás'úla, Zilla Vírabhúma, Vámácharaṇa Bhaṭṭáchárya. Appearance, new. Prose. Incorrect.

*Dhátupáráyaṇa.* The classification and conjugation of the Sanskrit roots. By Jumaranandi, the author of the exposition of the aphorisms of the Saṅkshiptasára grammar. The work is intended to serve as an appendix to his grammar.

Beginning. धातवोऽतिप्रसिद्धा ये पठ्यन्ते च गणे गणे ।
तेषामेव निबन्धोऽयं शिशूनां प्रतिपत्तये ॥ तत्रादौ भ्वादिगणः ।

End. प्रोच्छालयति अवगुण्ठालयति अवधीरयति । इत्यादिः ।

Colophon. इति श्रीमज्जुमरनन्दिकृतौ धातुपारायणः समाप्तः ।

विषयः । भ्वादिगणादिधातुनिरूपणं ।

---

## No. 1641. भागवतकौमुदी ।

Substance, country-made paper, 13 × 4 inches. Folia, 22. Lines, 16 on a page. Extent, 1,512 s'lokas. Character, Bengali. Date, ? Place of deposit, Bhímagaḍa, Post Khayarás'úla, Zilla Vírabhúma, Gopálachandra Vidyálaṅkára. Appearance, old. Prose. Incorrect.

*Bhágavata-kaumudí.* Notes on some difficult passages on the Bhágavata Puráṇa. By Rámakṛishṇa. The MS. is incomplete.

Beginning. प्रणम्य परमं ब्रह्म दुरूहार्थस्वरूपिणा ।
तन्यते रामकृष्णेन श्रीभागवतकौमुदी ॥
अथ तमेव विदित्वा इति श्रुतौ परमपुरुषार्थं मोक्षं प्रति तत्त्वज्ञानस्य हेतुता दर्शिता ।

End. अतो विप्रस्य प्रमाणमयत्नेन प्रमेयात् मत्तः श्रेष्ठत्वं ॥ श्रीः ।

विषयः । श्रीमद्भागवतीयविषमस्थानोद्घाटनपूर्वकं तत्र तत्र समाधानकीर्त्तनं ।

---

## No. 1642. स्मृतिसारः ।

Substance, palm-leaf, 19 × 1¼ inches. Folia, 107. Lines, 3 on a page. Extent, 1,590 s'lokas. Character, Bengali. Date, Sk. 1610. Place of deposit, Mayanádal, Post Khayarás'úla, Zilla Vírabhúma, Vishṇuchandra Bhaṭṭáchárya. Appearance, very old. Prose. Correct.

*Smṛitisára.* An epitome of the Smṛitis. The MS. is confined to expositions for omissions and irregularities in the performance of ceremonies, and for offences and sins. By Yádava Vidyábhushaṇa Bhaṭṭáchárya. The author belongs to the school of Raghunandana. Nos. 649 and 1077 bear the name of this work, but they are separate works.

Beginning. भूयः प्रणम्य रघुनाथपदारविन्दं मन्वादितन्त्रनिवहानभिवीक्ष्य यत्नैः ।
उद्धृत्य सारमखिलं निखिलस्मृतीनां श्रीयादवेन विदधे स्मृतिसार एषः ॥
अथ प्रायश्चित्तनिरूपणं । पापक्षयमात्रसाधनं कर्म्म प्रायश्चित्तमिति तच्चिन्त्यं ।

End. श्राद्धदिने स्त्रीगमने अहोरात्रमभोजनं । दिवामैथुने दिनमेकं व्रती भवेदिति ।

Colophon. इति श्रीमहामहोपाध्यायस्मार्त्तानुयायिश्रीयादवविद्याभूषणभट्टाचार्य्यविरचितस्मृतिसारे प्रायश्चित्तप्रकरणं समाप्तं । शकाब्दाः १६१०

विषयः । प्रायश्चित्तनिरुक्तं । प्रायश्चित्तपूर्व्वोक्तकृत्यं । गोवधप्रायश्चित्तनिरूपणं । व्यवस्थापत्रलेखनप्रकारः । एकहायनादिगोवधप्रायश्चित्तं । गोवधापवादः । क्षत्रियादिगोवधप्रायश्चित्तं । स्त्रीवधप्रायश्चित्तं । व्यभिचारिणीवधप्रायश्चित्तं । गर्भिणीवधप्रायश्चित्तं । धेनुसङ्कलनकथनं । चण्डालाद्यन्नभक्षणप्रायश्चित्तं । चण्डालादिस्पृष्टान्नभोजनादिप्रायश्चित्तं । अज्ञानतः कुक्कुराद्युच्छिष्टभोजनप्रायश्चित्तं । अन्त्यजस्त्रीगमनप्रायश्चित्तं । शूद्रादिस्पृष्टान्नकेशकीटाद्युपहतान्नादिभोजनप्रायश्चित्तं । गोमांसभक्षणप्रायश्चित्तं । रेतोमूत्रपुरीषादिभक्षणप्रायश्चित्तं । विण्मूत्रदूषितफलादिभक्षणप्रायश्चित्तं । म्लेच्छोच्छिष्टभक्षणप्रायश्चित्तं । पतितान्नभोजनप्रायश्चित्तं । देवा-

र्थोपकल्पितहव्यापायसभोजनप्रायश्चित्तं। वाग्दुष्टादिभोजनप्रायश्चित्तं। शूद्र-भाजने तथा भिन्नकांस्यभाजने भोजनप्रायश्चित्तं। सूतकाद्यन्नभोजनप्रायश्चित्तं। दुस्तदन्तादिदूषितभोजनप्रायश्चित्तं। भोजनकाले रेतोमूत्रपुरीषाद्युत्सर्गे प्रायश्चित्तं। कृततैलाभ्यङ्गस्य भोजनादिप्रायश्चित्तं। स्वकीयोच्छिष्टादिभोजनप्रायश्चित्तं। कुत्सितपङ्क्तिभोजनप्रायश्चित्तं। ब्रह्मवधसुरापानादिमहापातकप्रायश्चित्तं। क्षत्रि-यादिस्वामिकसुवर्णस्तेयादिप्रायश्चित्तं। पतितसंसर्गप्रायश्चित्तं। चण्डालादिसंसर्ग-प्रायश्चित्तं। यज्ञोपवीतच्छेदादिप्रायश्चित्तं। अनातुरस्य सन्ध्याद्यकरणप्रायश्चित्तं। शूद्रपरिग्रहप्रायश्चित्तं। मिथ्याभाषणप्रायश्चित्तं। स्वभार्य्यायां मातृभगिन्यादि-कथनप्रायश्चित्तं। उच्छिष्टस्य चण्डालादिदर्शनप्रायश्चित्तं। विप्रादिसध्यगमन-प्रायश्चित्तं। मिथ्याशपथप्रायश्चित्तं। अभिशापकर्त्तुः प्रायश्चित्तं। जलाग्न्यादौ अशुचिप्रक्षेपप्रायश्चित्तं। देवाभावे इष्टकादिना स्वगृहकरणप्रायश्चित्तं। ष्ठीवन-प्रायश्चित्तं। व्रतभङ्गप्रायश्चित्तं। रजकादिस्पर्शप्रायश्चित्तं। उच्छिष्टब्राह्मणस्य शूद्र-स्पर्शनप्रायश्चित्तं। सवर्णोच्छिष्टस्पर्शप्रायश्चित्तं। लशुनादिस्पर्शप्रायश्चित्तं। उच्छि-ष्टस्य नरादिपुरीषस्पर्शप्रायश्चित्तं। रजस्वलास्पर्शप्रायश्चित्तं। प्रायश्चित्तसङ्क्षेपः। व्रात्यप्रायश्चित्तकथनञ्च।

---

## No. 1643. सूर्य्यशतकटीका।

Substance, palm-leaf, 14 × 1½ inches. Folia, 42. Lines, 4 on a page. Extent, 976 s'lokas. Character, Bengali. Date, Sk. 1623. Place of deposit, Bhímagaḍa, Post Khayarás'úla, Zilla Vírabhúma, Vámácharaṇa Bhaṭṭáchárya. Appearance, old. Prose. Correct.

*Súryas'ataka-ṭiká.* A commentary on Mayúra Bhaṭṭa's century of verses in praise of the Sun. By Jayamaṅgala. The hymn is believed to possess the merit of curing leprosy.

Beginning. भक्तमयूरवक्त्राब्जपदविन्यासशालिनी।
नर्त्तकीव नरीनर्त्ति सभामध्ये सरस्वती॥ जम्भेत्यादि।

End. तावद् यो निर्णीयते स आदित्यः भवद्भ्योऽभीष्टं ददात्विति॥ १०० ॥

Colophon. इति श्रीमयूरभट्टविरचितसूर्य्यशतकस्य टीका जयमङ्गलविरचिता समाप्ता।
शाकेऽनन्तर्त्तुविमिते सपक्षवह्निके पुनः।
लिखिता सूरशतके टीकासौ यत्नपूर्व्विका॥

विषयः। मयूरभट्टकृतसूर्य्यशतकस्य व्याख्यानं।

---

## No. 1644. वैषम्योद्धरणी ।

Substance, country-made paper, 15 × 3 inches. Folia, 67. Lines, 9 on a page. Extent, 2,939 s'lokas. Character, Bengali. Date, Sk. 1594. Place of deposit, Bhímagaḍa, Post Khayarás'úla, Zillá Vírabhúma, Gopálachandra Vidyálaṅkára. Appearance, old. Prose. Correct.

*Vaishamyoddharaṇí.* A commentary on the Kírátárjuníya. By Vaṅkimadása. A little-known work.

Beginning. अथ वङ्किमदासेन प्रणम्य परमेश्वरीं ।
वैषम्योद्धरणी काव्ये भारवीये विधीयते ॥
काव्यं कुर्व्वन् कविस्तल्लक्षणं वस्तुनिर्द्देशं निद्धान आह,—श्रिय इति ।

End. श्रिया लोकान्तरसम्बन्धिन्या स्वतेजःसम्पदा च उपजगुः उपगीतवन्तः स्तुतवन्त इत्यर्थः ।

Colophon. इति वङ्किमदासकविराजकृतायां वैषम्योद्धरण्यां किरातार्ज्जुनीयटिप्पन्यामष्टादशः सर्गः ।
ब्रह्मास्यग्रहचन्द्रशेखरमुखच्चौणीमिते भूपतेः
शाके कार्त्तिकसञ्ज्ञके शनिदिने मासे सितायां तिथौ ।
अष्टम्यां लिखिता सुबोध-विषमा टीका मुदा भारवेः
श्रीदामोदरशर्म्मणा सुरवरं नत्वा हरिं कामदं ॥

विषयः । किरातार्ज्जुनीयकाव्यस्य व्याख्यानं ।

---

## No. 1645. क्रमदीपिका ।

Substance, palm-leaf, 19 × 1½ inches. Folia, 75. Lines, 3 on a page. Extent, 908 s'lokas. Character, Bengali. Date, Sk. 1609. Place of deposit, Bhímagaḍa, Post Khayarás'úla, Vámácharaṇa Bhaṭṭáchárya. Appearance, old. Verse. Correct.

*Kramadípiká.* A second copy of the work noticed under No. 1552. A Tántric compilation of details regarding the secret mantras of Vaishṇava deities.

Beginning. कला तु माया नवका तु मूर्त्तिः कलक्वणद्वेणुनिनादरम्यः ।
श्रितो हृदि व्याकुलयंस्त्रिलोकीं श्रियेऽस्तु गोपीजनवल्लभो वः ॥
गुरुचरणसरोरुहद्वयोत्थान् मधितरजःकणकान् प्रणम्य मूर्द्ध्ना ।
गदितमिह विरच्य नारदाद्यैर्यजनविधिं कथयामि शार्ङ्गपाणेः ॥

End. जगदिदमनुविद्धं येन यस्मिन् प्रसूते
यदनु ततमजस्रं याति चाधिष्ठिताया(?)।
यदुरुमहदुदर्च्चियों विधत्ते च गोपी'
तममितसुखबोधज्योतिषं नौमि कृष्णं॥

Colophon. इति श्रीक्रमदीपिकायामष्टमः पटलः। समाप्तश्चायं ग्रन्थः। शकाब्दाः १६०९।

विषयः। १ प्रथमपटले,—गोपालमन्त्रस्य सर्व्ववर्णस्त्रीपुरुषेषु शीघ्रफलदातृत्वकथनपूर्व्वकं तन्मन्त्रादिनिरूपणं। आसनभूतशुद्ध्यादिकथनं। केशवकीर्त्त्यादिन्यासप्रकारः। द्वारदेवताकथनं। तत्त्वन्यासादिप्रकारकथनं। प्राणायामप्रकारः। पीठन्यासादिकथनं।

२ये,—फलकथनपूर्व्वकं 'गोपीजनवल्लभाय स्वाहा' इति मन्त्रोद्धारप्रकारकथनं। अत्र कन्दकृष्यादिनिरूपणं। प्रद्युम्नजगन्मोहनमन्त्रशक्तिनिरूपणं। मन्त्रार्थनिरूपणं। कृष्णशब्दनिर्व्वचनं। तत्त्वदशकन्यासनिरूपणं। गृहिवनवासिप्रभृतीनां न्यासभेदकथनं। भूतिन्यासकथनं। विभूतिपञ्जरकथनं। वर्णन्यासादिनिरूपणं। नाराचादिमुद्रानिरूपणं।

३, ४र्थे,—श्रीकृष्णध्यानकथनं। श्रीकृष्णस्य ध्यानमालाकथनं। नारदस्य ध्यानकथनं। विशेषार्घ्यस्थापनादिविधिः। जपप्रकारकीर्त्तनं। शिष्यलक्षणं। दीक्षाविधानं। अत्र कलशादिस्थापनविधिः। अङ्गदेवताध्यानादिकथनं। रुक्मिण्यादीनां रूपादिकथनं। बलदेवस्य ध्यानं। सुभद्राया ध्यानं। विशेषार्घ्यदानमन्त्रादिकथनं।

५, ६ष्ठे,—दीक्षितस्य कर्त्तव्यतानिरूपणं। मन्त्रजपस्थानादिनिरूपणं। पुरश्चरणकथनं। तदुपसंहारनिरूपणं। श्रीकृष्णस्य प्रातःकालीनध्यानकथनं। मध्याह्नध्यानकथनं। सायाह्नध्यानकथनं। तर्पणविधिः। पायसादिषोड़शद्रव्यनिरूपणं। श्रीकृष्णमन्त्रनिर्म्माणप्रकारकथनं। शक्ति-माया-लक्ष्मीवीजाद्युद्धारप्रकारः। सिद्धमन्त्रप्रयोगः। विविधमन्त्रोद्धारप्रकारः। तत्र तत्र ध्यानकथनं। प्रत्येकं पुरश्चरणकथनं। उच्चाटनादौ मन्त्रादिनिरूपणं। जयकामादौ होमादिविधानं।

७, ८मे,—श्रीकृष्णस्य चतुर्व्वर्गसाधनध्यानकथनं। विंशत्यक्षरमन्त्रेण पूजाविधानं। अष्टचत्वारिंशदक्षरादिश्रीकृष्णमन्त्रनिरूपणादिकं। अष्टनिधिपूजा। राजोपचारकथनं। विविधमन्त्रकथनं। तत्र तत्र ध्यानादिकथनञ्च। गौर्य्यादौ पूजाविशेषकथनं। सिद्धमन्त्रस्य वश्यादिविधिः। स्त्रीवशीकरणादिकथनं। मुमुक्षूणाम् प्रक्रियानिरूपणं। त्रैलोक्यमोहनमन्त्रकथनं। ध्यानकथनं। गरुड़मन्त्रकथनं। मोहनगायत्रीकथनं। आत्मार्च्चनकथनं। योगकथनं। तत्फलकथनञ्च। चक्रबन्धश्लोकमध्ये केशवेति ग्रन्थकृन्नामोल्लेखनं॥

---

## No. 1646. शालहोत्र ।

Substance, country-made paper, 9 × 4¼ inches. Folia, 41. Lines, 7 on a page. Extent, 375 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*S'álahotra.* A Hindi translation of a treatise on the Veterinary Art. The original is ascribed to Nakula, one of the Páṇḍava brothers. The translator was one Chetana. The Sanskrit original is supposed to be the most ancient work extant on the subject. *Vide* No. 1648.

Beginning. श्रीगणेशाय नमः ॥ अथ शालहोत्रभाषा ॥ दोहा ॥

नमो निरञ्जनदेव गुरुमार्त्तण्डब्रह्माण्ड ।

रोगहरण आनन्दकर सुखदायक जगद्वन्द्य ॥ १ ॥

End. श्रीराम मासकार्तिककृष्णपक्षद्वितीया तिथि शुभा नाम ।

चेतनचन्द्रमो भाषित गुरुको किया प्रणाम ॥

Colophon. इति श्रीपण्डितचेतनकृतशालहोत्र समाप्त ॥

विषयः । अश्वचिकित्साकथनं ।

---

## No. 1647. अश्ववैद्यकं ।

Substance, English paper, 8½ × 7 inches. Folia, 261. Lines, 9 on a page. Extent, 1,615 s'lokas. Character, Nágara. Date, Sᴍ. 1933. Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

*As'va-vaidyaka.* A treatise on the Veterinary Art. By Jayadatta, son of Vijayadatta. Though professing to be an epitome, this is an elaborate work, treating, in considerable detail, of all the topics connected with the subject. It is divided into 68 sections. Contents: I. Introduction. II. Names and descriptions of the different parts of a horse's body. III. Characteristics of those parts. IV to VI. Effects of particular whirls of hair and marks on the body of a horse. VII. Motion of horses. VIII. Power and endurance of horses. IX. The voice of horses. X. Marks indicating defects. XI. Causes, other than disease, leading to weeping, refusal of food, &c. XII. Effects of particular shadows. XIII. Ditto of smell of the body. XIV. Size. XV. Span of life. XVI. Marks on the teeth indicating age. XVII. Ten stages in the life of a horse and its characteristics. XVIII. Mode of ascertaining the race of horses. XIX. Rules regarding riding. XX. Barren mares how to be made fruitful. XXI. Characteristics of a pregnant

mare. XXII. Rules to be observed during confinement. XXIII. Nursing of foals. XXIV. Rules regarding food for horses. XXV. Veterinary Materia Medica. XXVI. Modes of stabling, and feeding during different seasons. XXVII. Cautery with alkaline leys. XXVIII. Bleeding with a lancet. XXIX. Use of aromatics for promoting health. XXX. Fomentation. XXXI. Oleaginous drinks. XXXII. Medicated oils. XXXIII. Five bitters; medicines for fatigue. XXXIV. Decay not caused by disease. XXXV. Sickness from change of season. XXXVI. Worms. XXXVII. Diseases due to wind. XXXVIII. Names of certain diseases. XXXIX. Treatment of diseases of the mouth and the eyes. XL. Ditto of the head. XLI. Ditto of the ears. XLII. Ditto of coughs. XLIII. Ditto of hiccup. XLIV. Ditto of boils. XLV. Ditto of running from the nose. XLVI. Ditto of a disease called Ghrini: it is characterised by sores within the nostrils and running, and is apparently the same with glanders. XLVII. Ditto of diseases of the foot. XLVIII. Ditto of fevers. XLIX. Ditto of dyspepsia. L. Ditto of diarrhœa. LI. Ditto of dysentery. LII. Ditto of megrims. LIII. Ditto of worms and slime in the bowels. LIV. Ditto of frequent staling. LV. Ditto of leprosy. LVI. Ditto of Anasarca. LVII. Ditto of the diseases of the scrotum. LVIII. Ditto of the diseases of the belly. LIX. Ditto of piles. LX. Ditto of Utkarna, a disease in which the ears, tail and the skin of the body lose their power of action and swellings follow—apparently farcy. LXI. Ditto of diseases originating in excess of wind. LXII. Ditto of madness. LXIII. Ditto of fainting. LXIV. Curable and incurable diseases. LXV. Equine Toxicology. LXVI. Diagnostics from the breath. LXVII. and LXVIII. Equine vices.

Beginning. श्रीगणेशाय नमः। श्रीशालिहोत्राय नमः।

प्रणम्य शङ्करं भक्त्या शङ्करं सर्व्वदेहिनां।
शिवाय जगतो जातं शिवाञ्चापि विशेषतः॥ १॥
शिष्यावबोधं शब्दार्थं ग्रन्थं विस्तारवर्ज्जितं।
लक्षणं वाजिदेहस्थं सङ्क्षेपेण यथाक्रमं॥ २॥
चिकित्सा च समासेन सिद्धौषधसमन्विता।
मुनिप्रोक्तानि शास्त्राणि सम्यगालोक्य वाजिनां॥ ३॥
श्रीमद्विजयदत्तस्य पुत्रेण क्रियतेऽधुना।
श्रीमता जयदत्तेन वाहानां हितमिच्छता॥ ४॥

अध्यायानां यथायोगं षष्ट्यष्टादिकसङ्ख्यया ।
श्लोकानां हि सहस्रेण शताष्टसंयुतेन च ॥ ५ ॥
प्रदेशलक्षणञ्चैव जीवितञ्च वयस्तथा ।
दशाविभागं क्षेत्रञ्च देशज्ञानञ्च वाहनं ॥ ६ ॥
वन्ध्याक्रमं प्रसूतायाः शिशोश्च प्रतिपालनं ।
द्रव्यमात्राधिकञ्चैव निघण्टं शोषणक्रमं ॥ ७ ॥
विधिः क्षीराग्निशस्त्राणां शिरावेधविधिस्तथा ।
निरूहे च विधिश्चैव वस्तिश्चैवानुवासने ॥ ८ ॥
नस्यस्वेदविधिश्चैव स्नेहपानान्यविक्रमं ।
तैलपाकविधानञ्च घृतपाकविधिं तथा ॥ ९ ॥
आन्तोपचारं वाहानां तथारिष्टत्रयं पुनः ।
स्वगरोगचिकित्साञ्च चिह्नपूर्व्वां समासतः ॥ १० ॥
वातादीनाञ्च दोषाणां कोपहेतुन्तथैव च ।
निदानञ्चैव चिह्नञ्च रोगाणाञ्च चिकित्सितं ॥ ११ ॥
साध्यासाध्यविवेकञ्च कृच्छ्रसाध्येतिनिश्चयं ।
प्रकृतिञ्च तुरङ्गानां कथयाम्यनुपूर्व्वतः ॥ १२ ॥
रसोनादि तथा कल्कं मुनिभिः पूर्व्वचोदितं ।

End. रक्तपित्तज्वरं हन्ति कासं श्वासं तथा घृणिं ।
विद्रधिं क्षयरोगञ्च नाशयेद् वाजिनां ध्रुवं ॥ २५ ॥

Colophon. इति श्रीसामन्तयदत्तकृताश्ववैद्यकशास्त्रं समाप्तं ।

विषयः । अत्राष्टषष्ट्यध्यायाः सन्ति । तत्र १-मे,—ग्रन्थाभिधेयविवरणं । २,—वाजिदेहस्थ-प्रदेशाः । ३,—अश्वाङ्गलक्षणं । ४,—स्थानविशेषे आवर्त्तचिह्नेन वाजिनां शुभा-शुभप्रदत्वकीर्त्तनं । ५,—वाजिनां पुण्ड्रचिह्ननिरूपणं । (पुण्ड्रपदेन लोमराजि-विरचित-शङ्ख-गदा-धनुर्वानादिचिह्नमुच्यते') । ६,—वाजिनां पुष्पचिह्ननिरूपणं। ७,—वाजिनां गतिनिरूपणं। ८,—वाजिनां बलनिरूपणं। ९,—वाजिनां स्वरनिरूपणं । १०,—वाजिनां दोषज्ञापकचिह्ननिरूपणं । ११,—वाजिनामुत्पात-प्रकरणं । (उत्पातस्तु व्याधिरहितस्य वाजिनः ग्रासत्यागाश्रुपातादयश्च) । १२,—वाजिच्छायानां शुभाशुभप्रदत्वकीर्त्तनं । १३,—सुगन्धदुर्गन्धभेदेन वाजिनां शुभा-शुभप्रदत्वकीर्त्तनं । १४,—वाजिप्रमाणनिरूपणं । १५,—अश्वायुर्लक्षणं । १६,—वाजिनां दन्तोद्भेदादिना वयोनिरूपणं। १७,—वाजिनां दशविधदशापरिमाण-निरूपणं, दशविधक्षेत्रनिरूपणञ्च । प्रत्येकदशापरिमाणन्तु द्विसप्ततिदिनाधिकवर्षत्रयं।

विषयः। दशविधचेत्रन्तु गुह्यादिललाटपर्य्यन्तं प्रथमं चेत्रं। ललाटादिमस्तकं २-यं चेत्रं। ग्रीवास्कन्धादिकं ३-यं चेत्रं। उरोजानुककुदादिकं ४-र्थं चेत्रं। अंसकं ५-मं चेत्रं। दन्तिका ६-ष्ठं चेत्रं। स्फिक् ७-मं चेत्रं। स्फूरकौ (?) ८-मं चेत्रं। जङ्घा ९-मं चेत्रं। कूर्चसन्धिः खुरश्च १०-मं चेत्रं। १८,—वाजिनां जन्मदेशनिरूपणं। १९,—अश्वानां वाहनविधिः। २०,—बन्ध्याया वड़वाया गर्भधारणविधिः। २१,—सगर्भाया वड़वाया लक्षणं। २२,—सूतिकानियमः। २३—अश्वशिशुपालन-नियमः। २४,—चनकव्रीहिमुद्गयवादीनां वाजिभोजनद्रव्याणां परिमाणकथनं। २५,—वाजिरोगनाशकभेषजनामानि। २६,—वाजिनां सर्व्वर्तुपोषणविधिः। (कस्मिन् ऋतौ कीदृशनियमेन अश्वः पालितव्य इत्यस्य नियमः)। २७,—वाजिनां रोगनाशकक्षारदाहविधिः। २८,—वाजिनां शिरावेधविधिः। २९,—अश्वानुवास-नविधिः। (अपराह्णसमये सुगन्धद्रव्येण सुवासितकरणं अनुवासनं)। ३०,—वाजिनां स्वेदविधिः। ३१,—स्नेहपानविधिः। ३२,—वाजिरोगनाशकतैलविधिः। ३३,—पञ्चतिक्तघृतविधानं, वाजिनां श्रमशान्तिकरणोपायश्च। ३४,—स्वस्थारिष्टलक्षणं। (स्वस्थारिष्टस्तु रोगं विना यो वाजी दुर्मना हीनवर्णश्च स गतायुरित्यादिरूपः)। ३५,—वेधारिष्टलक्षणं। (ऋतौ शरदि, ग्रीष्मे च पानतः अश्वानां वेधाख्य उपसर्गो जायते, येनोपसर्गेन अश्वा अधोमुखाः सज्वराः श्वासकारिणश्च तिष्ठन्ति)। ३६,—अश्वानां कीटवेधारिष्टलक्षणं। (वर्षादिऋतौ तोयादिसेवनात् वाजिनां य उपसर्गो जायते स कीटवेधाख्य उपसर्गः)। ३७,—वातादीनां प्रकोपसमयनि-रूपणं। ३८,—वाजिरोगाणामवान्तरनामनिर्देशः। ३९,—वाजिनां मुखरोग-निदानचिकित्से, नेत्ररोगचिकित्सा च। ४०,—शिरोरोगनिदानचिकित्से। ४१,—कर्णरोगचिकित्सा। ४२,—कासरोगचिकित्सा। ४३,—हिक्काचिकित्सा। ४४,—व्रणचिकित्सा। ४५,—सिङ्घानकरोगचिकित्सा। ४६,—घ्राणिरोगचिकित्सा। ४७,—पादरोगचिकित्सा। ४८,—ज्वरचिकित्सा। ४९,—अजीर्णचिकित्सा। ५०,—अतिसारचिकित्सा। ५१,—उदावर्त्तचिकित्सा। ५२,—प्रस्कन्नचिकित्सा। ५३,—कृमिकोष्ठश्लेष्मकोष्ठचिकित्सा। ५४,—मूत्रचिकित्सा। ५५,—कुष्ठचिकि-त्सा। ५६,—शोथचिकित्सा। ५७,—मुष्करोगचिकित्सा। ५८,—उदररोग-चिकित्सा। ५९,—अर्शश्चिकित्सा। ६०,—उत्कर्णचिकित्सा। ६१,—वातव्याधि-चिकित्सा। ६२,—उन्मादचिकित्सा। ६३,—अपस्मारचिकित्सा। ६४,—वाजि-रोगाणां साध्यासाध्यत्वनिरूपणं। ६५,—विषचिकित्सा। ६६,—वाजिनां वातादि-प्रकृतिज्ञानं। ६७, ६८,—कल्कविधिनिरूपणं॥

## No. 1648. अश्वचिकित्सितं ।

Substance, English paper, 9 × 7 inches. Folia, 82. Lines, 9 on a page. Extent, 438 s'lokas. Character, Nágara. Date, Sm. 1933. Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

*As'va-chikitsita.* The Sanskrit original of the work, noticed under No. 1646. It comprises 18 Chapters. Contents: I. Introduction. II. Classification according to quality. III. Colors of horses—the white the best. IV. Whirls on eighteen places and their effects. V. Ascertainment of age from marks on the teeth. VI. Auspicious and inauspicious marks. VII. Of all qualities speed the most important. VIII and IX. On riders. X. Constitution of horses. XI. Seasonal influences. XII. Snuffs. XIII. Biliary complaints. XIV. Medicated butters. XV. Medicated decoctions. XVI. Poisonous drugs. XVII. Rules regarding stabling. XVIII. Not found in the MS. but it refers, according to the Introduction, to exercise. This work has been quoted largely in the Agni Puráṇa, chapter 288.

Beginning. श्रीगणेशाय नमः ।

जयति स पाण्डवनाथो धर्म्मनिधानो युधिष्ठिरो न्टपतिः ।
भीमार्ज्जुनसहदेवास्तदनुचरा ये वाजिशास्त्रतत्त्वज्ञाः ॥ १ ॥
दृष्ट्वा सम्यक् नकुलो ज्ञानं सर्व्वशालिहोत्रीयं ।
ब्रूते शास्त्रार्थमन्यच्छास्त्रं कृत्वा समासेन ॥ २ ॥
प्रश्नो जातिर्वर्णमावर्त्तदन्ता लक्षं वेगो वाहनं धातुरक्षं ।
कालो नस्यं पिण्डमाज्यं कषायं शालां चेष्टां वाजिनामत्र वक्ष्ये ॥ ३ ॥

End. अश्वस्याङ्गं प्रलिपेद्धरिद्रया वरिष्ठया मञ्जल्या च ।
सुपविचान् दोषघ्नैर्विभूषयेदलङ्कारैः ॥ १० ॥

Colophon. इति श्रीनकुलकृतेऽश्वचिकित्सिते अश्वशालाविधिः अष्टादशोऽध्यायः ।

विषयः । अत्र १-मे,—शालिहोत्रमुनेः समीपे शक्रस्य रथयोग्यवाजिविषयकप्रश्नः । २-ये,—उत्तममध्यमनीचकनीयसां भेदेन चतुर्द्धा वाजिनिरूपणं । ३-ये,—सप्तवर्णानां वाजिनां मध्ये श्वेतवर्णस्य वाजिनः श्रेष्ठत्वकथनं । ४-र्थे,—ललाटादिविंशतिस्थानेषु आवर्त्तचिह्नेन वाजिन उत्तमतानिर्देशः । ५-मे,—दन्तविशेषेण वाजिनामायुःसङ्ख्याविज्ञानं । ६-ष्ठे,—चिह्नभेदेन वाजिनां सुलक्षणत्वकथनं । ७-मे,—सर्व्वेषां वाजिगुणानां मध्ये वेगगुणस्य अधिकत्वकथनं । ८-मे, ९-मे,—

अश्वारोहिलक्षणं । १०-शे,—वाजिनां धातुपरीक्षा । ११-शे,—ऋतुविशेषे वाजिसेवाविशेषनिरूपणं । १२-शे,—वाजिनां रोगविशेषे नस्ययोगनिरूपणं । १३-शे,—वाजिनां पित्तादिदोषे तत् शमनार्थं पिण्डयोगनिरूपणं । १४-शे,—वाजिनां रोगनाशकाज्यनिरूपणं । १५-शे,—वाजिनां रोगनाशकक्वाथनिरूपणं । १६-शे,—वाजिनां रोगनाशकविषप्रयोगः । १७-शे,—अश्वशालाविधिः । (एतद्ग्रन्थशेषे अष्टादशोऽध्याय इति यदुक्तं तद्भ्रममूलकं गणनायामष्टादशाध्यायस्याप्राप्तत्वात् ) ।

---

## No. 1649. सङ्कल्पकौमुदी ।

Substance, country-made paper, 15 × 4 inches. Folia, 56. Lines, 6 on a page. Extent, 1,722 s'lokas. Character, Bengali. Date, ? Place of deposit, Guptipárá, Rámadhana Vidyálaṅkára. Appearance, old. Prose and verse. Correct.

*Sañkalpa-kaumudí.* Rules regarding religious resolution to perform a ceremony, and directions for particular duties on certain occasions. By Rámakṛishṇa.

Beginning. प्रणम्य कमलाकान्तं देववन्द्यपदाम्बुजं ।
तन्यते रामकृष्णेन रम्या सङ्कल्पकौमुदी ॥
यद्यपि सङ्कल्पपदं नानार्थं, तथापि 'सङ्कल्पः कर्म्ममानसम्' इत्यमरकोषात् मानसं कर्म्म मनःसङ्कल्पितं कर्म्म । मनःसङ्कल्पितत्वं आचार्य्यारोपविषयत्वं । यथा रुद्रयामले,——
न्यायेनोपार्ज्जितं द्रव्यं मनसोपार्ज्जितन्तु वा ।
निवेदयेदिष्टदेवे भक्तिश्रद्धासमन्वितः ॥ इत्यादि ।

End. अत एव मठच्छात्रादि + नम इति छात्रपाठाय कल्पितं गृहं मठो न तु छात्राणां स्वत्वं, तत्र आदिपदग्राह्यः अतिथ्यादिः । किञ्च मीमांसकैः विग्रहस्वीकारेऽपि विग्रहस्य देवतात्वं न स्वीक्रियते । इति शिवं ॥

Colophon. समाप्तेयं सङ्कल्पकौमुदी ।

विषयः । सङ्कल्पलक्षणं । सङ्कल्पविचारः । सङ्कल्पानुष्ठाने अशौचादिव्यवस्था । व्रतप्रतिष्ठादौ तद्व्यवस्था । सङ्कल्पितकाम्यादिश्राद्धव्यवस्था । महाभारतादिसङ्कल्पविशेषकथनं । विवाहे वरपित्रा कन्यापित्रा वा नान्दीश्राद्धे कृते नाशौचप्रतिबन्धकत्वं । आरब्धाकरणे निन्दाकीर्त्तनं । विवाहानन्तरम् अशौचेऽपि चतुर्थीहोमादिकं कार्य्यमिति

विषयः । कथनं । आरम्भशब्दार्थनिरूपणं । दम्भलक्षणनिरूपणं । सङ्कल्पेन विनेतिवचनस्य विशेषव्याख्यानं । अपवित्रः पवित्रो वेत्यस्य विशेषव्याख्यानं । सूर्य्यः सोमो यम इत्यादिमन्त्रस्य विष्णुस्मरणानन्तरमेव पाठ्यतेति कथनं । 'ॐ तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृत' इत्यस्य विशेषव्याख्यानं । जलाशयेतिशब्दार्थनिरूपणं । सङ्कल्पे दिङ्नियमः । 'मासपक्षतिथीनाञ्च' इत्यस्य विशेषव्याख्यानं । 'अद्य कृष्णाष्टमीं देवीम्' इत्यत्र अद्यपदपाठविचारः । उपवासलक्षणं । सङ्कल्पवाक्ये उपवासपदनिवेशविचारः । जन्मतिथिकृत्यनिरूपणं । गोत्रोल्लेखविचारः । आश्विने मासि शुक्ले पक्षे अष्टम्यां तिथौ महाष्टम्यामित्युल्लेखः । न तु महाष्टम्यां तिथाविति कथनं । स्नानलक्षणादिकं । गङ्गायां पतितं दृष्ट्वादिजलं गङ्गैवेति कथनं । चण्डीपाठसङ्कल्पविचारः । शष्कुलीशब्दार्थनिरूपणं । उपवासपारणादिनिरूपणं । एकादश्यादौ पितृश्राद्धोपस्थितौ तत्कर्त्तव्यता । अतिदेशलक्षणादिकथनं । उपवासदिने काम्यश्राद्धनिषेधः । श्रवणद्वादशीनिरूपणं । अस्याः पारणव्यवस्था । मठाद्युत्सर्गनिरूपणञ्च । इति ।

---

## No. 1650. श्राद्धचिन्तामणिः ।

Substance, palm leaves, $14\frac{1}{2} \times 2\frac{1}{4}$ inches. Folia, 133. Lines, 6 on a page. Extent, 3,491 s'lokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

*S'ráddha-chintámaṇi.* Rules regarding offerings to the manes on particular occasions. By Váchaspati Mis'ra.

Beginning. प्रणम्य परमं तेजो विचार्य्याचार्य्यसंहिताः ।
श्रीवाचस्पतिधीरेण श्राद्धस्य विधिरुच्यते ॥

End. न ब्रह्मचारिणः कुर्य्युरुदकं पतिता न च ।
पाषण्डमाश्रिताः स्तेना न व्रात्या न विकर्म्मिणः ॥
गर्भभर्तृद्रुहश्चैव स्वाप्यश्चैव योषितः ।
स्तेना हिरण्यमात्रापहर्त्तारः । स्वाप्य इति त्रैवर्णिकमात्रस्त्रीपरमिति सर्व्वचतुरस्रं॥

Colophon. इति महामहोपाध्यायमिश्रश्रीवाचस्पतिविरचितः श्राद्धचिन्तामणिः सम्पूर्णः ॥

विषयः । श्राद्धलक्षणं । तत्र प्राचीनमतं, नव्यमतञ्च । अत्र लक्ष्मीधर-वर्द्धमानादीनां नयकीर्त्तनं । श्राद्धभेदनिरूपणं । एकोद्दिष्ट-पार्व्वण-वृद्धिश्राद्धादीनां लक्षणादिकथनं । श्राद्धदेशनिरूपणं । पितृतीर्थादिकथनं । निषिद्धदेशकथनं । भूमि-

विषयः। संस्कारादिकीर्त्तनं। अग्रभागमदत्वा परकीयगृहे श्राद्धनिषेधः। अस्वामिकस्थाननिरूपणं। श्राद्धकालनिरूपणं। अष्टकाश्राद्धद्रव्यकथनं। सर्व्वत्रानादेशे पशुशब्देन छागस्यैव ग्रहणमिति कथनं। नवोदकश्राद्धादीनां नित्यत्वकथनं। अश्वयुक्कृष्णश्राद्धविचारः। अत्र श्राद्धविवेकादिमतकीर्त्तनं। मघात्रयोदशीश्राद्धनिरूपणं। शस्त्रादिहतानां चतुर्द्दशीकर्त्तव्यश्राद्धकथनं। काम्यश्राद्धनिरूपणं। चीणाद्यमावस्यानिरूपणं। पिण्डपितृयज्ञादिश्राद्धव्यवस्था। श्राद्धवेलानिरूपणं। मासलक्षणादिकथनं। अत्र हलायुधपारिजातादीनां मतकथनं। श्राद्धदेशस्थापनीयद्रव्यकथनं। दौहित्रघृतलक्षणं। श्राद्धदेशादपसारणीयद्रव्यादिकथनं। श्राद्धविहितब्राह्मणाः। पङ्क्तिपावनलक्षणं। त्रिमध्वादिलक्षणं। श्राद्धसम्यग्लक्षणं। श्राद्धनिषिद्धब्राह्मणलक्षणादिकथनं। हविष्यनिरूपणं। तत्र वार्द्धीणसलक्षणं। अक्षारलवणनिरूपणं। श्राद्धे वर्ज्जनीयद्रव्यकथनं। मांसनिरूपणं। फलानि। कन्दकथनं। शाककथनं। लवणकथनं। सहजतो निषिद्धद्रव्यकथनं। तीर्थश्राद्धविहितद्रव्यनिरूपणं। दर्भादिलक्षणं। निमन्त्रणप्रकारादिकथनं। अर्घ्यपात्रादिनिरूपणं। गन्धादिनिरूपणं। परिवेषणविधिः। पात्रविशेषे फलविशेषकथनं। श्राद्धीयभोजनं। वेदिकरणविधिः। याचकेभ्यः अन्नदानं। श्राद्धोत्तरकर्म्मविधानं। परिभाषा। पार्व्वणश्राद्धप्रयोगोल्लेखप्रकारः। आमश्राद्धविधिः। तीर्थश्राद्धविधिः। जीवत्पितृकश्राद्धविधिः। एकोद्दिष्टश्राद्धविधानं। षोड़शश्राद्धानि। वृषोत्सर्गविधिः। उदकुम्भनिर्णयः। मासिकापकर्षकथनं। सपिण्डनापकर्षकथनं। सपिण्डने निषिद्धनक्षत्राणि। सपिण्डीकरणविधिः। आभ्युदयिकश्राद्धविधिः। तत्कालनिरूपणं। श्राद्धाधिकारिनिरूपणं। द्वादशविधपुत्रकथनं। पुत्रत्वातिदेशकथनं। पुत्रपदनिर्व्वचनं। स्त्रीश्राद्धाधिकारिनिरूपणं। अनधिकारिनिरूपणञ्च।

---

## No. 1651. काव्यप्रकाशरहस्यप्रकाशः।

Substance, country-made paper, 17 × 3 inches. Folia, 185. Lines, 8—9 on a page. Extent, 7,076 s'lokas. Character, Bengali. Date, Sk. 1579. Place of deposit, Navadvípa, Harinátha Tarkasiddhánta. Appearance, old. Prose. Correct.

*Kávya-prakás'a-rahasya-prakás'a.* A commentary on the Kávya-prakás'a of Mammaṭṭa Bhaṭṭa. By Jadagís'a Tarkapañchánana.

Beginning. निद्राणेव मदेकमुद्रितमतौ पुष्पायुधे सायुधे
प्रीतेवार्पितलोचनाम्बुजबलौ चक्रायुधेऽनायुधे।
सैवासीत् कुपितेव किञ्च जगतां विद्रावणे रावणे
शम्भोः कापि कृपा दृगन्तकलिता भिद्यादविद्यामदं॥
सम्प्रति स्वमतिप्रीत्यै श्रीजगदीशद्विजो धीमान्।
काव्यप्रकाशकृत्तौ सरसरहस्यं प्रकाशयति॥
ग्रन्थारम्भे क्रियमाणस्य मङ्गलस्य निष्फलत्वशङ्कां निराकुर्व्वन् नियतिकृतनियम-
रहितामित्यादिश्लोकव्याख्यां ग्रन्थकृदारभते॥ ग्रन्थारम्भ——इत्यादि।

End. तत्र शिष्यजिज्ञासाक्रमेण तत्कथनात् शिष्यजिज्ञासानिवृत्तौ वक्तव्याभावेन
सम्पूर्णम् अनपेक्षितवाक्यान्तरं। श्रीः।
वाले! त्वं किमु कातरासि पिशुनव्यालावलीव्याहृतौ
हा मातः! सरलौषधव्यतिकरे कस्मादसौ व्याहृतिः।
तत् किं हन्त! तदौषधं प्रतिपदं मागास्त्वदीयास्पदं
तेषां तद्विषपूर्णकर्णकुहरे कोपीच्छया गच्छति॥

Colophon. इति श्रीजगदीशतर्कपञ्चाननभट्टाचार्य्यकृते काव्यप्रकाशरहस्यप्रकाशे अर्थालङ्कार-
निरूपको दशमोल्लासः समाप्तः।
कन्दर्पं दहते विधुञ्च वहते भागीरथीं बिभ्रते
मृत्युं वारयते विषं वशयते ब्रह्माणमुच्छासते।
वाणं वर्द्धयते हर्षं कलयते दक्षाधिमातन्वते
पापं खण्डयते जगन्नटयते कस्मैचिदस्मै नमः॥
शाके रन्ध्राद्रिवाणक्षितिपरिगणिते माघमासे नवम्यां
पक्षे चैवावलक्षे ग्रहपतिदिवसे जीवयुग्युग्मलग्ने।
न्यायालङ्कारधीरो निजगुरुरचितं पुस्तमेतत् समस्तं
स्वीयं स्वीयाङ्गजस्यो व्यलिखदनलसोऽध्यापनार्थं सुखेन॥
शुभमस्तु शकाब्दाः १५७९।

विषयः। काव्यप्रकाशस्य व्याख्यानं।

---

## No. 1652. उपमानखण्डः।

Substance, country-made paper, 14 × 4 inches. Folia, 22. Lines, 5 on a page. Extent, 261 s'lokas. Character, Bengali. Date, ? Place of deposit, Guptipáḍá, Khudiráma Nyáyabhúshaṇa. Appearance, fresh. Prose. Correct.

*Upamána Khanda* of the *Nyáya-chintámani.* A complete codex of the work noticed under No. 601, Vol. II, p. 50.

Beginning. तत्र सादृश्यप्रमाकरणमुपमानमिति केचित्। सादृश्यञ्च पदार्थान्तरं। तथापि सदृशव्यवहाराद्वाधितादस्ति सादृश्यं।

End. गोसदृशो न गवय इत्यत्रापि परम्परया तात्पर्य्यमस्त्येवेति सर्व्वमवदातं।

Colophon. इति महामहोपाध्यायश्रीगङ्गेशचिन्तामणिविरचिते श्रीतत्त्वचिन्तामणौ उपमानखण्डः समाप्तः। शुभं।

विषयः। उपमानलक्षणं। उपमानात्मकसादृश्यज्ञानविषयस्य सादृश्यस्य नैयायिकमतसिद्धषट्पदार्थातिरिक्तपदार्थत्वखण्डनं। उपमानस्य प्रमाणान्तरत्वव्यवस्थापनञ्च।

---

## No. 1653. श्राद्धदर्पणं।

Substance, country-made paper, 15 × 4 inches. Folia, 35. Lines, 7 on a page. Extent, 898 s'lokas. Character, Bengali. Date, ? Place of deposit, Guptipáḍá, Khudiráma Nyáyabhúshaṇa. Appearance, fresh. Prose and verse. Correct.

*S'ráddha-darpaṇa.* On periodical and occasional offerings to the manes. By Jayakṛishṇa Tarkavágís'a.

Beginning. प्रणम्य सच्चिदानन्दं भुक्तिमुक्तिप्रदायकं।
क्रियते जयकृष्णेन निर्म्मलं श्राद्धदर्पणं॥
तत्र पार्व्वणप्रसङ्गात् श्राद्धलक्षणमुच्यते,—सम्बन्धपदोपनीतान् पितॄनुद्दिश्य हविस्त्यागः श्राद्धमिति।

End. तत्र च अष्टमी नार्द्धरात्रे न वा पूर्व्वाह्ने,—तत्र पूजा कुत्र कार्य्या, तथा च अर्द्धरात्रे एव न कालान्तरे। इति शं।

Colophon. इति श्रीजयकृष्णतर्कवागीशकृतश्राद्धदर्पणं समाप्तं।

विषयः। पार्व्वणस्वरूपकथनं। तत्र पूर्व्वदिने निरामिषसकृद्भोजनादिविचारः। ब्राह्मणोपवेशनात् प्राक् यज्ञेश्वरस्य स्मरणमेव कर्त्तव्यं, न तु पूजनमिति मैथिलमतदूषणं। विष्णुमुद्दिश्य निवेदितान्नेन श्राद्धं कर्त्तव्यं न वेत्यत्र निवेदितशेषान्नेन तदनुष्ठानमिति सिद्धान्तः। अनुज्ञाग्रहणविचारः। पार्व्वणातिदेशकथनादिकं। अर्घ्यदानप्रकरणं। गन्धादिदानविधिः। दक्षिणावाक्यविचारः। श्राद्धे पाकविचारः। स्त्रीशूद्रकर्त्तृकश्राद्धविधिः। विघ्नपतितश्राद्धकालनिरूपणं। अशौचान्त-

कृत्यविचारः। अपकर्षसपिण्डननिरूपणं। एकोद्दिष्टविधिः। सपिण्डनक्रमनिरूपणं। मघात्रयोदशी। दीपान्विता। नवान्नश्राद्धविधिः। वारुणी। अम्बुवाची। जन्माष्टमीविचारः। इति।

---

## No. 1654. मुद्राराक्षसपूर्व्वपीठिका।

Substance, country-made paper, 16 × 4 inches. Folia, 40. Lines, 5 on a page. Extent, 575 s'lokas. Character, Bengali. Date, ? Place of deposit, Sántipura, S'rínátha Bhaṭṭáchárya. Appearance, new. Prose. Generally correct.

*Mudrá-rákshasa-púrvapíṭhiká.* A prose version of the well-known drama of *Mudrá-rákshasa*, or 'the Signet and the Minister' of Vis'ákha Deva. By Ananta Kaví. The author lived on the banks of the Godávarí River. The drama itself has been printed several times, and translated into English in Wilson's Hindu Theatre.

Beginning. सर्व्वे साधुजनाः सदायतहृदा सत्सम्प्रदायादलं
यज्ज्ञानाय कणादगौतममतान्यालोक्य, तत्त्वार्थदान्।
वेदान्तान् परिशीलयन्ति रहसि स्वानन्दकन्दाकरं
वन्दे तं जगदीश्वरं दयितया सानन्दमालिङ्गितं॥
पञ्चाशद्वर्णभेदैरपरिमिततरैरर्थजातैश्च युक्ता
नानालङ्काररम्या गणितगुणगणा साधुवृत्तैरुपेता।
वाक्स्थैर्य्यैत्प्रसादात् प्रसरति रसनोपान्तदेशे निमेषा-
न्नित्यं चित्तेऽनुरक्ते वसतु मम सुखं भारती सा रसाढ्या।
यद्वत्स्फारहाराऽभयवरदकरा स्रस्तधम्मिल्लभारा
मूलाधाराधिकारा निगमनिधिधरा काव्यकोटिप्रचारा॥
संसारानल्पकारा शयनभयहरा चिद्घनैकावतारा
तारा शृङ्गारधारा मनसि निवसतां सर्व्वदा सर्व्वसारा॥
अभूद् भवस्यातिसुखाय या भुवं विशाखदेवाभिधसद्बुधस्य।
कृतिस्तदीयामिह पूर्व्वसङ्कथां करोम्यनन्तो विदुषां सुखाय॥
अस्ति पुरन्दरसुन्दरदिग्भागे भगवद्भागीरथीपरिसरे समस्तवस्तुविश्रमविश्रान्तिभाजनजनजेगीयमाननिवासविराजमानं कुसुमपुरं नाम नगरं।——

End. मलयकेतुविरोधपुरःसरं मन्त्रिराक्षसेन सह चन्द्रगुप्तो मैत्रीं कर्त्तुमुद्यतः, तथा घटनार्थमुद्यममकरोत्।

Colophon. इति श्रीमद्गोदावरीपरिसरालङ्कृतपुण्यसम्बस्थितिमतिविलासशालिश्रीयुक्तानन्तकविविरचिता मुद्राराक्षसपूर्व्वपीठिका समाप्ता।

विषयः। कुसुमपुरवर्णनं। नन्दस्य उदग्रधन्व-तीक्ष्णधन्वेत्यादिनवपुत्रनामकीर्त्तनं। प्रतिपक्षभूपालानां नन्दसमीपे सुवर्णपट्टिकान्तःसंस्थापितारत्निमानदेवदारुकाष्ठप्ररणविवरणं। चामरग्राहिण्या सुमङ्गलया सह नन्दस्य वसन्तोत्सवदर्शनाय प्रमदवनप्रवेशः। तत्र च पिपीलिकापङ्क्तिसन्दर्शनेन राजमुखकमलं सस्मितमाकलय्य सुमङ्गलायां स्मितवदनायां वदन्त्याञ्च महाराजस्मितेनैव मम स्मितं सञ्जातमिति राज्ञो 'मत्स्मितहेतुं कथय नो चेत् त्वां निग्रहिष्ये' इति सुमङ्गलां प्रति निदेशकथनं। ततस्तु कस्यचित् ब्राह्मणस्य उपदेशेन सुमङ्गलया राज्ञः स्मितकारणकथनं। सुबुद्धिशर्म्माभिधेयाय द्विजाय मन्त्रिराक्षसपदवीं प्रदाय नन्दस्य स्वामात्यकृत्ये नियोजनवृत्तान्तः। नन्दस्य मृत्युः। गुरुदक्षिणासङ्ग्रहाय सुविद्यस्य कुसुमपुरप्रवेशः। तस्य पुनः विद्याबलेन नन्दमृतदेहप्रवेशः। राक्षसानुसन्धानेन सुविद्यस्य पूर्व्वदेहदाहनं। कुसुमपुरं परित्यज्य राक्षसस्य पर्व्वतेश्वरमन्त्रित्वप्राप्तिकथनं। कृत्रिमनन्दस्य शकटाराभिधेन मन्त्रिणा सार्द्धं मृगयानुष्ठानार्थं वनप्रयाणं। तत्र च कस्याञ्चित् दीर्घिकायां शिलापट्टलिखितं,

"अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य, तयोर्द्वयोरेकतरं जहाति॥
तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनं।
अर्द्धराज्यहरं विप्रं यो न हन्यात् स हन्यते"॥

इति श्लोकद्वयं निर्व्वर्ण्य कदाचित् स्वनिधनमाशङ्कमानेन शकटारेण पिपासितस्य राज्ञो निधनादिवृत्तान्तकथनं। उदग्रधन्वाभिधस्य नन्दकुमारस्य राज्याभिषेकादिविवरणं। नन्दनिधनकारणं तत्त्वतो निर्णेतुं करुणाकरनामकस्य तपस्विनो वीरसाधनप्रकारकथनं। शकटारमेव सुधन्वापरनामधेयस्य नन्दस्य घातकं ज्ञात्वा तद्वधाय राज्ञ आदेशः। पलपञ्चकमितचणकजलमात्राहारं दत्वा सपुत्रकलत्रस्य शकटारस्य भूमिगृहवासरूपदण्डविधानं। तावन्मात्राहारेण कथमपि धृतजीवितस्य विकटारस्य शकटारपुत्रस्य राजकारुण्येन मोचनकथनं। कुसुमपुरप्रत्यागमनपुरःसरं राक्षसस्य पुनरमात्यपदग्रहणविवरणं। राक्षसस्य विकटारं प्रति श्राद्धोपयोगिब्राह्मणनिमन्त्रणार्थमादेशः। कुशमूले माक्षिकप्रक्षेपणार्थं विक्षिप्तनयनेन श्रिदगुप्ततनयेन विष्णुगुप्तेन सह विकटारस्य साक्षात्कारविवरणादिकं।

श्राद्धकाले आसनापसारितस्य विष्णुगुप्तस्य शिखाबन्धनप्रतिज्ञा। राजसेन-भागुरायण-विजयवर्म्मादिभिः सार्द्धं चन्द्रगुप्तस्य विष्णुगुप्तानुगमनकथनं। पर्व्वतेश्वरेण सह तेषां मैत्र्यादिकथनं। कुसुमपुररोधादिकथनं। चन्द्रगुप्तस्य राज्यलाभः। पर्व्वतेश्वरेण सह राक्षसस्य सन्धिः, चन्द्रगुप्तनाशाय विषकन्याप्रेरणञ्च। पर्व्वतेश्वरहननं। मन्त्रिराक्षसेन सह चन्द्रगुप्तस्य मित्रताघटनञ्च।

---

## No. 1655. वृहन्नीलतन्त्रं।

Substance, some leaves of country-made yellow paper, and some of country-made white paper, 13 × 4½ inches. Folia, 215. Lines, 5 on a page. Extent, 3,225 s'lokas. Character, Bengali. Date, ? Place of deposit, Guptipáḍá, Rámadhana Vidyálaṅkára. Appearance, fresh. Verse. Incorrect.

*Vṛihannîla Tantra.* One of the 64 original Tantras, attributed to Mahádeva. Its subject is the ritual of the S'ákta divinities, giving special preeminence to the worship of a form of Máyá named Nílasarasvatí.

Beginning. कैलासशिखरासीनं भैरवं कालसञ्ज्ञितं।
प्रोवाच सादरं देवी तस्य वक्षःसमाश्रिता॥
पुरा प्रतिश्रुतं देव कालीतन्त्रप्रकाशने।
नीलतन्त्रप्रकाशाय तद्वदस्व सदाशिव॥
यस्य विज्ञानमात्रेण विजयी भुवि जायते।
यज्ज्ञात्वा साधकाः सर्व्वे विचरन्ति यथा तथा॥ इत्यादि।

End. मत्सान्निध्यं महेशानि तत्र तिष्ठति निश्चितं।
सर्व्वविद्या भवत्येव संशयो नास्ति कश्चन॥
अहं शिवः परात्मा च विना तासु महेश्वरि।
शव एव महेशानि कथितं दुर्लभं शिवे॥

Colophon. इति श्रीवृहन्नीलतन्त्रे सर्व्वतन्त्रोत्तमे भैरवपार्व्वतीसंवादे त्रयोविंशतिपटलं समाप्तं। समाप्तोऽयं ग्रन्थः।

विषयः। १ पटले,—शिवाशिवसंवादेन तन्त्रकथनप्रतिज्ञानिनिरूपणं। नीलसरस्वत्या वीजादिनिरूपणं। स्नानतिलकादिप्रकारकथनं। द्वादश्यादिष्वपि तान्त्रिकसन्ध्याया अनुष्ठानकर्त्तव्यतादिकं।

२ पटले,—एकलिङ्गस्थानलक्षणं। साधनयोग्यस्थाननिरूपणं। नीलसरस्वतीपूजा-

विषयः। विधानं। पुष्पनिरूपणं। त्रिविधगुरुनिरूपणं। बलिदानं। मन्त्रध्यानप्रकारः। नीलसरस्वतीस्तोत्रं। ताराष्टकं। अष्टाङ्गप्रणामलक्षणं।

३, ४ पटले,—दीक्षाविधिः। दीक्षाया आवश्यकता। सद्गुरुलक्षणादिकथनं। पितुरपि गुरोर्गरीयस्त्वकथनं। दीक्षाकालः। तत्स्थानं। तत्र नक्षत्रादिनिरूपणं। गुरोः सन्निधाने अन्यदेवपूजानिषेधः। पुरश्चरणविधिः।

५ पटले,—नैमित्तिक-काम्यपूजाविधानं। ब्राह्मण-राजन्य-वैश्यानां सुरापाननिषेधः। सुराभेदकथनं। अमन्त्रितसुरापाने प्रायश्चित्तविधानं। ऊर्व्वशी-भार्गवोपाख्यानं। वैधसुरापाने न दोष इति कथनं। अनुकल्पासवनिरूपणं। पीठार्च्चनविधिः। पीठनिरूपणं। सिद्धस्थानकथनं। महोत्तमस्थाननिरूपणं।

६ पटले,—कौलिकार्चनमाहात्म्यं। शक्तिपूजाप्रकारकथनं। कालीप्रयोगकथनं। शिवाबलिदानविधिः। शाक्तानामाचारक्रमकीर्त्तनं। कौलानां प्रायश्चित्तादिपञ्चकविवर्ज्जनावश्यकता। वैधहिंसातिरिक्तहिंसायां दोषः। समयाचारलक्षणं। कालिकापूजनविधिः। रटन्तीपूजाविधिः। अन्नपूर्णापूजाविधिः। ऋतुभेदे दैनिकऋतुभेदकथनं। तत्र षट्कर्म्मविधानं। आसनविनियोगः। ज्योतीरूपदर्शनोपायकीर्त्तनं। कौलिकाचारकथनं। होमविधानं।

७, ८ पटले,—निग्रहोपायकीर्त्तनं। वशीकरणं। शान्तिस्तोत्रं। महाचीनक्रमकीर्त्तनं। सारस्वतप्रयोगकथनं। अत्र सुरेन्द्रसुराचार्य्ययोः संवादकीर्त्तनं। पुनरन्नपूर्णापूजाविधानं। कुमारीपूजाविधिः। यन्त्रकथनं। रक्तादिदानयोग्यपशुनिरूपणं। दारुवनवृत्तान्तकीर्त्तनं। कलियुगे तारिण्यादिमन्त्राणां प्राधान्यकथनं। कालीमन्त्रकथनादिकं। मन्त्रसंस्कारप्रकारः। तत्र दशविधसंस्कारकथनं। त्रिविधशाम्भवचक्रकथनं। ब्रह्मस्वरूपकथनादिकं।

९, १०, ११ पटले,—प्रकारान्तरेण वीरसाधनकथनं। नायिकासाधनं। श्रीवीजादिसमुद्धारप्रकारः। विद्यारत्नकथनं। नीलसरस्वत्या आविर्भावकथनादिकं। हयग्रीवसोमकयोरुपाख्यानं। मत्स्यरूपेण विष्णुना सह तयोर्युद्धादिकीर्त्तनं। सर्व्वज्ञताकारणकथनं।

१२, १३, १४, १५ पटले,—विद्योत्पत्तिकथनं। स्त्रीपुरकथनं। प्रलयकाले वटपत्रशयानायाः कालिकायाः ब्रह्मादिकृतस्तोत्रादिकथनं। कामाख्यामन्त्रकथनं। चतुःषष्टियोगिनीकथनं। ब्रह्मपुत्रनदोत्पत्त्यादिकथनं। वरुणकुण्डादिकथनं। वायुकूट-चन्द्रकूटपर्व्वतादिकथनं। सोमकुण्डकथनं। भस्मकूटगिरिकथनं। ऊर्व्वशीकुण्डकथनं। मणिकूटादिकथनं। वासवकुण्डोपाख्यानं। ब्रह्मकूट-नीलकूटादिकथनं। ऊर्व्वशी-सिद्धगणेशादीनां ध्यानं।

१६, १७, १८ पटले,—सदाचारलक्षणं। सङ्क्षेपेण राजकर्म्मकथनं। महाष्टम्यादौ दुर्गापूजाविधानं। नीराजनविधिः। ज्यैष्ठपूर्णिमायां कालिकायाः स्नानयात्रा-विधानं। आश्विनकार्त्तिकमासादौ तस्याः स्नानादिविधानं। सारस्वतध्यानादि-कथनं। होमार्थं कुण्डनिर्म्माणविधानं। होमविधिः। तारानामसहस्रस्तोत्रं। हरि-नामग्रहण-तुलसीस्पर्शनादिनिषेधः।

१९, २०, २१, २२, २३ पटले,—ताराकवचकथनं। गुप्तमन्त्रादिकीर्त्तनं। तारा-शतनामस्तोत्रं। ज्ञानोपायकीर्त्तनं। सीसकप्रयोगेन रौप्यकरणप्रकारः। पारद-भस्मीकरणप्रकारः। त्रिविधभावनिरूपणं। कालीनामसहस्रस्तोत्रं। कालीशत-नामस्तोत्रं। अन्नदामन्त्रकथनं। अन्नदाशतनामस्तोत्रं। दृहन्नीलतन्त्रफलश्रुतिः।

---

## No. 1657. भागवतसन्दर्भे क्रमसन्दर्भः।

Substance, country-made paper, 13 × 4 inches. Folia, 52. Lines, 12—15 on a page. Extent, 2,437 s'lokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Pandit Kálidása Vidyávagís'a. Appearance, old. Prose. Correct.

*Krama Sandarbha.* The philosophy of the Bhágavata Puráṇa illustrated, supplying omissions and deficiencies in the commentary of the Bhágavata by S'rídhara Svámi. By Jíva Gósvámí. The work is in seven parts, and is known under the collective name of Bhágavata Sandarbha ; the codex under notice comprises a portion of the last part, entitled *Krama Sandarbha.*

Beginning. अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥
श्रीमद्भागवतं नौमि यस्यैकस्य प्रसादतः।
अज्ञातानपि जानाति सर्व्वः सर्व्वागमानपि॥
श्रीभागवतसन्दर्भान् श्रीमद्वैष्णवतोषणीं।
दृष्ट्वा भागवतव्याख्या लिख्यतेऽत्र यथामति॥)
जयेतां मथुराभूमौ श्रीलरूपसनातनौ।
यौ विलेखयतस्तत्त्वज्ञापकौ पुस्तिकामिमां॥

यस्य ब्रह्मेति सञ्ज्ञां क्वचिदपि निगमे याति चिन्मात्रसत्ता-
प्यंशो यस्यांशकैः स्वैर्विभवति वशयन्नेव मायां पुमांश्च ।
एकं यस्यैव रूपं विलसति परमव्योम्नि नारायणाख्यं
स श्रीकृष्णस्वरूपः स्फुरतु भगवान् प्रेम दद्यात् भजद्भ्यः ॥
अथैवं सूचितानां श्रीकृष्णवाच्यवाचकतालक्षणसम्बन्धतद्भजनलक्षणाभिधेय-
तत्प्रेमलक्षणप्रयोजनानां निर्णयाय पूर्व्वं तत्त्वसन्दर्भादिषट्सन्दर्भा निरूपिताः।
अधुना तु श्रीमद्भागवतक्रमव्याख्यानाय तत्रापि सम्बन्धाभिधेयप्रयोजननिर्णय-
प्रदर्शनाय च सप्तमः क्रमसन्दर्भोऽयमारभ्यते ।
श्रीभागवतसिद्धार्थो टीका हृष्टिवदा + + ।
श्रीधरस्वामिपादांस्तान् वन्दे भक्त्यैकरक्षकान् ॥
स्वामिपादैर्न यद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित् ।
तत्र तत्र च विज्ञेयः सन्दर्भः क्रमनामकः ॥
अथात्र परिभाषेयं ज्ञातव्या यद्यपेक्ष्यते ।
मूलं सटीकमङ्काद्यैः परिच्छेद्यं सदानया ॥
अङ्का वाक्यान्त-एवात्र देयाः पद्यान्ततो न तु ।
बहुपद्यैकवाक्यत्वे गर्भाङ्का विन्दुमस्तकाः ॥
यस्मिन् पद्ये नास्ति टीका तदप्यङ्केन योजयेत् ।
एकपद्यान्यवाक्यत्वे सङ्ख्याशब्दास्तु कान्तकाः ॥
बहुपद्यैकवाक्यत्वेऽप्यमी ज्ञेयास्तथाविधाः ।
यथाद्यैकं युग्मकञ्च त्रिकमित्याद्युदाहृतिः ॥
जन्माद्यस्येत्यत्र श्रीस्वामिचरणानामयमभिप्रायः । परं परमेश्वरमिति न पुन-
रभेदवादिनामिव चिन्मात्रं ब्रह्मेत्यर्थः । इत्यादि ।

End. ततो निमित्ताभावे नैमित्तिकस्याप्यभावात् । टेलोपाच्च सिध्यन्ति ॥ ३३ ॥ ३० ॥

Colophon. इति प्रथमक्रमसन्दर्भे एकोनविंशोऽध्यायः ॥
इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवत्कृष्णचैतन्यदेव-
चरणानुचरविश्ववैष्णवराजसभासभाजनश्रीरूपसनातनानुशासनभारतीगर्भे सप्त-
सन्दर्भात्मकश्रीभागवतसन्दर्भे प्रथमस्कन्धस्य क्रमसन्दर्भः समाप्तः ॥

विषयः । श्रीधरस्वामिकृताया भागवतटीकायाः परिशिष्टरूपेयं विवृतिः । किञ्च यत्र यत्र
स्वामिना व्याख्या न कृता कृताप्यस्फुटा वा तत्र तत्र विशदीकरणं ।

## No. 1657. भागवतसन्दर्भे परमात्मसन्दर्भः ।

Substance, country-made paper, 13 × 4 inches. Folia, 67. Lines, 8—9—10 on a page. Extent, 2,010 s'lokas. Character, Bengali. Date, Sk. 1593. Place of deposit, S'ántipura, Pandit Kálidása Vidyávágís'a. A second copy at Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, old. Prose and verse. Correct.

*Paramátma-sandarbha.* The third part of the work noticed under the last preceding No. 1656. It treats of the Divine spirit.

Beginning. तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितं ।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥
अथ परमात्मा विव्रियते । यद्यपि परमात्मत्वं वैकुण्ठेऽपि प्रभोरस्ति । इत्यादि ।

End. यथेन्द्रियैः पृथग् द्वारैरर्थो बहुगुणाश्रयः ।
एको + + यते तद्वद्भगवान् शास्त्रवर्त्मभिः ॥
इत्येव उदाहरणीयं । अनेनैव गतिसामान्यञ्च सिध्यतीति । २ । २ । श्रीशुकः ।
प्रत्यवस्थापितं वदन्तीत्यादि पद्यं ।

Colophon. इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे परमात्मसन्दर्भो नाम तृतीयः सन्दर्भः । शुभमस्तु शकाब्दाः १५९३ ।

विषयः । परमात्मनिरूपणादिकं । गुणावताराणां तारतम्यविवेचनं । जीवमायादीनां स्वरूपादिनिरूपणं । विवर्त्तसमाधानं । परमात्मप्रपञ्चयोरभेदकीर्त्तनं । परमात्मनो जगद्भिन्नत्वकथनञ्च । जगतोऽसत्यत्वकथनं । श्रीधरकृतटीकाया अभिप्रायप्रकाशनं । निर्गुणे परात्मनि कर्त्तृत्वादीनां समन्वयः । लीलावतारप्रयोजनकीर्त्तनं । वेदान्तसूत्रादीनामभिप्रायकथनं । भागवतप्रशंसा । भगवत्येव सर्व्वेषां शास्त्राणां तात्पर्य्यप्रदर्शनं । ग्रन्थस्यास्य श्रीमद्भागवतीयानां केषाञ्चित् श्लोकानां गूढार्थप्रकाशनमुखेन निर्म्मिततया तट्टीकास्थानीयः ।

---

## No. 1658. श्रीकृष्णसन्दर्भः ।

Substance, country-made paper, 13 × 4 inches. Folia, 77. Lines, 13 on a page. Extent, 3,816 s'lokas. Character, Bengali. Date, ? Place of

deposit, S'ántipura, Kálidása Vidyávágís'a. A second copy at Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, fresh. Prose and verse. Correct.

*S'ríkṛishṇa-sandarbha.* The fourth part of the work noticed under No. 1656. It treats of Krishṇa as the divine spirit.

Beginning. तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितं।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥
अथ पूर्व्वं सन्दर्भत्रयेण यस्य सर्व्वपरत्वं साधितं तस्य श्रीभगवतो निर्द्धारणाय सन्दर्भोऽयमारभ्यते। इत्यादि।

End. अपि परिपाटीरिति। पूर्णं सम्बन्धः।
गौरश्यामरुचोज्ज्वलाभिरसनैरक्ष्णोर्विलासोत्सवै-
र्न्नृत्यन्तीभिरशेषमादनकलावैदग्ध्यदिग्धात्मभिः।
अन्योन्यप्रियतासुधापरिमलस्तोमोन्मदाभिः सदा
राधामाधवमाधुरीभिरभितश्चित्तं समाक्रम्यतां ॥

Colophon. इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीकृष्णसन्दर्भो नाम चतुर्थः सन्दर्भः।

विषयः। ग्रन्थः खल्वयं श्रीमद्भागवतीयानां केषाञ्चित् श्लोकानां गूढार्थप्रकाशनमुखेन निर्म्मिततया तट्टीकास्थानीयः। तत्र श्रीकृष्णस्य भगवत्तानिरूपणं। चतुर्व्यूहकथनं। भगवत्स्वरूपनिरूपणं। अंशबोधकवाक्यानां समाधानं। श्रीकृष्णस्य पूर्णतासंस्थापनं। अवतारप्रसङ्गः। श्रीकृष्णनाममाहात्म्यकीर्त्तनं। अन्यान्यशास्त्रेभ्यो भागवतस्य श्रैष्ठ्यकथनं। अभ्यासनिरूपणं। प्रतिनिधिवाक्यनिरूपणं। सर्व्वशास्त्रसमन्वयः। श्रीकृष्णरूपपरिच्छदादीनां नित्यत्वकीर्त्तनं। असुरेषु यद्रूपं स्फुरति तत्तस्य स्वरूपं न भवति, किन्तु मायाकल्पितमेवेतिकथनं। अनिरुद्धप्रद्युम्नादिलोकनिरूपणं। गोलोकवर्णनं। वृन्दावनवर्णनं। गोलोकगोकुलयोरभेदकथनं। मथुरावर्णनं। द्वारकादीनां नित्यधामत्वनिरूपणं। गोकुलवासिनामप्राकृतदेहत्वादिकथनं। प्रकटाप्रकटद्विविधलीलाव्यवस्था। रुक्मिण्यादीनां श्रीकृष्णस्वरूपशक्तिरूपत्वकथनं। ताभ्यो गोपीनां श्रेष्ठत्वकथनं। तासु च राधिकाया एव श्रेष्ठतमत्वकीर्त्तनञ्च। श्रीकृष्णस्य सर्व्वत्र प्रकाशेऽपि श्रीवृन्दावने वरपरमाद्भुतप्रकाश इति कथनं।

---

## No. 1659. द्वितीयस्कन्धक्रमसन्दर्भः ।

Substance, country-made yellow paper, 14 × 5 inches. Folia, 44. Lines, 10 on a page. Extent, 1,210 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávagís'a. A second copy in Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, old. Prose. Correct.

*Krama-sandarbha*. The second book of the last part of the work noticed under No. 1656.

Beginning. द्वितीयक्रमसन्दर्भे सन्दर्भानां समाहृतिः ।
क्रियते यन्निदेशेन स मेऽनन्यगतेर्गतिः ॥
अथ द्वितीयस्कन्धस्य क्रमसन्दर्भः । अथ शुकदेवस्य । अपि मे भगवान् प्रीतः कृष्णः पाण्डुसुतप्रिय इत्यादिना श्रीकृष्ण एव स्वरतिं अस्य म्रियमाणानां श्रोतव्यादिप्रश्नेनैवान्तकाले श्रीकृष्ण एव मय्युपदिश्यतामिति राजाभिप्रायानन्तरं ।

End. तथा च तृतीये वक्ष्यते,—कुत्र तत्तभगवत इत्यादिना ।

Colophon. इति द्वितीये दशमः । समाप्तश्चायं द्वितीयस्कन्धक्रमसन्दर्भः ।

विषयः । श्रीधरस्वामिकृतश्रीमद्भागवतीयद्वितीयस्कन्धटीकाया अस्फुटादिस्थानविशदीकरणरूपेयं विवृतिः ।

---

## No. 1660. तृतीयस्कन्धक्रमसन्दर्भः ।

Substance, country-made yellow paper, 14 × 5 inches. Folia, 81. Lines, 11 on a page. Extent, 2,561 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávagís'a. A second copy in Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, old. Prose. Correct.

*Krama-sandarbha*. The third book of the seventh part of the work noticed under No. 1656.

Beginning. तृतीयक्रमसन्दर्भे सन्दर्भाणां समाहृतिः ।
क्रियते यन्निदेशेन समेऽनन्यगतेर्गतिः ॥
अथ तृतीयस्कन्धस्य क्रमसन्दर्भः ॥ १ ॥ यद्वेत्यत्र यदाश्रयमिति चित्सुखः ॥ १ ॥

End. योऽभिधत्तेमात्रं यो वा शृणोतिमात्रं किमुत अनुतिष्ठति, यः, किमुततरां श्रीदेवहूतिरित्यर्थः ।

Colophon. इति श्रीभागवते तृतीयक्रमसन्दर्भे त्रयस्त्रिंशत्तमोऽध्यायः । समाप्तोऽयं तृतीयस्कन्धक्रमसन्दर्भः ।

विषयः। श्रीधरस्वामिकृतश्रीमद्भागवततृतीयस्कन्धटीकाया अस्फुटस्थानादिविशदीकरण-रूपे विवृतिः।

---

## No. 1661. सदुपहाररत्नाकरः।

Substance, country-made yellow paper, 15 × 2½ inches. Folia, 41. Lines, 5 on a page. Extent, 820 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, fresh. Verse. Correct.

*Sadupahára-ratnákara.* A collection of small poems by distinguished authors, classified and arranged under different heads. By Sarvánanda Kavi. The MS. is incomplete.

Beginning. तिर्य्यग्बद्धाङ्गयष्टिद्वितयभुजलताश्लेषसम्मोदद्दीनं
यावज्जन्मैव तादृङ्मिलदधरसुधास्वादसम्बन्धगन्धं।
अन्योन्यप्रेक्षितोद्यत् स्मितसुभगमुखं पातु वश्चन्द्रमौलेः
स्त्रीपुंरूपात्मदेहप्रणयनघटनापाटवं कामुकस्य॥
अर्थप्रौढिमगाढबन्धघटनापाद्यावरोद्यक्रम-
श्रव्यं यद् यदकारि सत्कविकुलैरन्यापदेशाभिधं।
तत्तत् पद्यमतीव हृद्यमधुना सञ्चित्य यत्नादसौ
सर्व्वानन्दकविः करोति कुतुकादेकत्र सत्प्रीतये॥
सभाहृदयरञ्जकस्फुरदनेकपद्यावली-
मणिप्रकरजन्मभाक् स्फुटरसास्ततस्यन्दभूः।
प्रसादशमिसम्भवभ्रमदनेककीर्त्तिर्मया
व्यधायि बुधसम्मुदे सदुपहाररत्नाकरः॥

End. न चुम्बति मनागपि भ्रमर एष पुष्पान्तरं
परिभ्रमति पार्श्वतो विटपपद्मिनीलम्पटः।
प्रयाति यदि यामिनी त्यजति मौनमुद्राञ्च सा
निपीय मधु निर्भरं मुदमुपैति पुष्पन्धयः॥
इतः खण्डितत्वात् परिशेषवाक्यं नास्ति।

विषयः। प्रायः प्रास्ताविकश्लोकानाहृत्य व्रज्याक्रमेण रचितोऽयं ग्रन्थः। तत्र दुर्ज्जननिन्दा-सज्जनस्तुती। शङ्करव्रज्या। गौरीव्रज्या। शिवगणव्रज्या। विष्णुव्रज्या। लक्ष्मी-व्रज्या। सरस्वतीव्रज्या। मदनव्रज्या। दशावतारव्राज्य। सूर्य्यव्रज्या। चन्द्र-

व्रज्या। सूर्य्याचन्द्रव्रज्या। पवनव्रज्या। कल्पवृक्षव्रज्या। मेघव्रज्या। दैवव्रज्या। गृहव्रज्या। प्रदीपव्रज्या। सुजनव्रज्या। दुर्ज्जनव्रज्या। सुजनदुर्ज्जनव्रज्या। गुणिव्रज्या। पामरव्रज्या। धनिव्रज्या। दरिद्रव्रज्या। वीरव्रज्या। स्त्रीव्रज्या। अलङ्कारव्रज्या। सुवर्णव्रज्या। मृगमदव्रज्या। गिरिव्रज्या। अगुरुव्रज्या। चन्दनव्रज्या। श्रीफलव्रज्या। चूतव्रज्या। पनसव्रज्या। वदरीव्रज्या। अशोकव्रज्या। किंशुकव्रज्या। अश्वत्थव्रज्या। वटव्रज्या। शाल्मलिव्रज्या। भ्रमरव्रज्या।

इतः खण्डितं।

---

## No. 1662. अलङ्कारकौस्तुभः।

Substance, country-made paper, 13 × $4\frac{1}{2}$ inches. Folia, 103. Lines, 9—10 on a page. Extent, 4,120 s'lokas. Character, Bengali. Date, Sk. 1681. Place of deposit, S'ántipura, Kálidása Vidyávágís'a. A second copy in Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, very old. Prose and verse. Correct.

*Alañkára-kaustubha.* A treatise on Rhetoric. By Kavikarṇapura, one of the followers of Chaitanya. The work is divided into ten chapters, or "rays" (*kiraṇa*), and illustrates every figure of speech and rhetorical ornament by a verse in praise of Krishṇa. The MS. is dated S'aka 1681 = A. D. 1760. The author was a renowned Vaishṇava, and wrote several works on the Vaishṇava faith. Vide Introduction to Dr. Mitra's edition of the Chaitanya Chandrodaya Náṭaka.

Beginning. ग्रन्थारम्भे स्वाभीष्टदेवतानामगुणकीर्त्तनात्मकं मङ्गलमङ्गीकुर्व्वन् ग्रन्थकारो ग्रन्थस्य निर्व्विघ्नां परिसमाप्तिमाशास्ते।

स्वानन्दरसघटघणः कृष्णचैतन्यविग्रहो जयति।

आपामरमपि कृपया सुधया स्नपयाम्बभूव भूमौ यः॥

स जयति येन प्रभवति सुदृशां दृशि व्यञ्जनावृत्तिः।

अतिशयितपदपदार्थो ध्वनिरिव मुरलीध्वनिर्मुरारातेः।

जयतिरत्राकर्म्मकः सर्व्वोत्कर्षवाचकः, तेन नमस्कारोऽपि व्यज्यते, स्वापकर्षबोधानुकूलव्यापारविशेषो नमस्कार इति न्यायात्॥ इत्यादि।

End. शान्तस्य न्यक्कृतत्वात् शृङ्गारः पुष्ट एव। प्रागुक्तलक्षणस्य रसस्य आनन्दस्वरूपत्वेन प्रतिपादिते चैक्ये रसस्य रसेन विरोध इति यदिह प्रतिपाद्यते,—तत्त सामग्रीभूतस्य स्थाय्यादेरेव न तु रसस्य।

Colophon. इत्यलङ्कारकौस्तुभे दोषप्रदर्शनो नाम दशमः किरणः ॥ समाप्तश्चायं ग्रन्थः ।
श्रीमतः कर्णपूरस्य चरणावनिशं भजे ।
निर्म्मितः कृष्णकण्ठार्थं येनालङ्कारकौस्तुभः ॥ शुभमस्तु शकाब्दाः १६८१ ।
माधवे च सिते पक्षे चतुर्दश्यां गुरौ दिने ।
शशिवसुतुकृष्णा+ सङ्ख्ये संवत्सरागते ॥

विषयः । १ प्रथमकिरणे,—काव्यस्य शरीरादिस्वरूपं । काव्यलक्षणं । प्रकाशमतदूषणं । दर्पणमताक्षेपः । वामनमतदूषणं । काव्यत्वजातिः । कवित्वलक्षणं । वीजलक्षणं । प्रतिभालक्षणं । काव्यभेदः । काव्यस्य प्रयोजनादिकथनञ्च ।

२ ये,—शब्दस्वरूपं । वर्णानां नित्यत्वं । नादविन्दुप्रभृतीनामुत्पत्तिप्रकारः । स्फोटवादः । जात्यादिना शब्दभेदकथनं । वाचकः शब्दः । अभिधाविचारः । योगरूढादयः । प्रत्ययशक्तिविचारः । समासशक्तिनिरूपणं । सिद्धसाध्यादिभेदकथनं । लक्षणालक्षणं । तद्विचारः । सारोपा । साध्यवसानिका । उपादानलक्षणा । गूढव्यङ्ग्या लक्षणा । गतव्यङ्ग्या । व्यक्तव्यङ्ग्या । व्यञ्जनापेक्षणादिविचारः । अर्थादीनां व्यञ्जकत्वं । संयोगादयः । असंलक्ष्यक्रमव्यङ्ग्यादयः ।

३ ये,—ध्वनिलक्षणतद्भेदादिकथनं । कविप्रौढोक्तेश्चातुर्विध्यकथनं । अविवक्षितवाच्यध्वनिः । अर्थान्तरसङ्क्रमितवाच्यध्वनिः । अत्यन्ततिरस्कृतवाच्यध्वनिः । विवक्षितान्यपरवाच्यध्वनिः । संलक्ष्यक्रमव्यङ्ग्यध्वनिः । शब्दशक्त्युद्भवध्वनिः । अर्थशक्त्युद्भवादयश्च ।

४ र्थे,—गुणीभूतव्यङ्ग्यकथनं । तत्र स्फुटं । अपराङ्गं । वाच्यप्रपोषकं । कष्टगम्यं । सन्दिग्धप्राधान्यादीनि च ।

५ मे,—रसलक्षणं । स्थायिविभावादीनां लक्षणं । भोजमतेन वात्सल्यप्रेमरसयोर्लक्षणं । रत्यादिलक्षणं । रसस्वरूपविचारः । तत्रायं सारः,—चित्रोत्कीर्णाभिरूपप्रतिमादिषु इमौ रामलक्ष्मणौ रामोऽयं सीताशोकाकुलः, सिंहोऽयं मृगोपघातकः- श्मशानमिदं शवसमूहार्द्रमांसादिसङ्कुलमिति कृत्रिमेष्वपि तेषु विभावादिषु अकृत्रिमवत् प्रतीयमानेषु स्वगतरसवासनाधौतरजस्तमस्तया स्वच्छतरेषु सचेतसां चेतःसु एक एव आनन्दो जायते स एव रसः, किञ्च एकस्यैव उपाधिभेदेन रत्यादिव्यपदेश इति । वीरादीनां लक्षणं । भक्तिरसलक्षणं । सम्भोगविप्रलम्भौ । पूर्व्वरागादीनां लक्षणं । दशदशाकथनं । नायकादिलक्षणं । नायकसहायनिरूपणं । सत्त्वजगुणकीर्त्तनं । नायिकाभेदकथनं । आसामलङ्काराः । मुग्धामध्याप्रभृतीनामिङ्गितानि । सखीप्रियसख्यादीनां लक्षणं । उद्दीपनविभावः । अनुभावाः । तत्र सात्त्विकभावः । सन्धिशरलतादयः । व्यभिचारिणः ।

६ ष्ठे,—गुणलक्षणं। गुणानां रसधर्म्मत्वव्यवस्थापनं। माधुर्य्यादीनां लक्षणं। वामनोक्तश्लेषादिगुणानां लक्षणकथनपूर्व्वकं केषाञ्चित् माधुर्य्यादिष्वेव अन्तर्भावनं। माधुर्य्यादिव्यञ्जकाः वर्णाः।

७ मे,—अलङ्कारलक्षणं। तस्य शब्दार्थधर्म्मत्वसंस्थापनं। पुनरुक्तवदाभासचित्रादिशब्दालङ्कारनिरूपणं।

८ मे,—उपमादिव्याघातान्तद्विषष्टिविधार्थालङ्कारनिरूपणं। सङ्करादिभेदकथनं। अलङ्कारदोषनिरूपणञ्च।

९ मे,—रीतिलक्षणं। वदर्भ्यादिचतुर्व्विधरीतिलक्षणं।

१० मे,—दोषलक्षणं। श्रवणकट्वादिषोड़शविधपददोषकथनं। प्रतिलोमाक्षराद्येकविंशतिविधवाक्यदोषनिरूपणं। नूपुरादिषु रणितादिप्रसिद्धिकथनं। कष्टादित्रयोविंशतिविधार्थदोषकथनं। रसदोषनिरूपणं। इति शम्।

---

## No. 1663. अलङ्कारकौस्तुभटीका।

Substance, country-made paper, 14 × 4½ inches. Folia, 60. Lines, 8 on a page. Extent, 2,400 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, old. Prose. Correct.

*Alaṅkára-kaustubha Tíká.* A commentary on the work noticed under the last preceding No. 1662. By Lokanátha Chakravartí.

Beginning. अद्वैतप्रकटीकृतो नरहरिप्रेष्ठः स्वरूपप्रियो-
नित्यानन्दसखः सनातनगतिः श्रीरूपहृत्केतनः।
लक्ष्मीप्राणपतिर्गदाधररसोल्लासी जगन्नाथभूः
साङ्गोपाङ्गसपार्षदः सदयतां देवः शचीनन्दनः॥
अथ सोऽयं कविमुकुटमणिः श्रीकर्णपूरगोस्वामी स्वकृतश्लोकानां स्वयमेव व्याख्यामाह। ग्रन्थारम्भ इति।

End. पारक्योऽधरराग इति मत्वा मत्प्रतिपक्षरमणधरसम्बन्धिताम्बूलराग इति मत्वेत्यर्थः। अतः खण्डितं।

विषयः। कविकर्णपूरगोस्वामिकृतालङ्कारकौस्तुभस्य व्याख्यानं।

---

## No. 1664. सत्कृत्यमुक्तावली ।

Substance, country-made yellow paper, 15½ × 3½ inches. Folia, 83. Lines, 7 on a page. Extent, 1,525 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávagís'a. Appearance, fresh. Prose and verse. Correct.

*Satkṛitya-muktávalí.* A compilation of all the leading facts regarding astronomy and astrology, and their bearings on human destiny. By Raghunátha Sárvabhauma Bhaṭṭáchárya.

Beginning. नत्वा भानुगणेशशम्भुगिरिजा ज्ञात्वा मुनीनां मतं
ज्योतिःसद्ग्रहसंहितार्थमवधार्य्याचार्य्यवाक्येन च ।
सारं तेषु निगूढमाहृतवता प्रज्ञावतामाज्ञया
सङ्क्षिप्ता रघुनाथकेन रचिता सत्कृत्यमुक्तावली ॥

End. यदाह्नि मेषसङ्क्रान्तिस्तुलासङ्क्रमणं निशि ।
तदा प्रजा विवर्द्धन्ते धनधान्यसमृद्धिभिः ॥
धीराः प्रणम्य भवतो विनिवेदयामि श्रीकामदेवचरणीतलवासवस्य ।
आज्ञामवाप्य रचितो रुचिरो निबन्धो दोषो न मे बलवतीह यतो नृपाज्ञा ॥

Colophon. इति रघुनाथसार्व्वभौमभट्टाचार्य्यरचिता सत्कृत्यमुक्तावली समाप्ता ॥

विषयः। राश्यादिनिरूपणं। राशिनक्षत्रभेदकथनं। राश्यधिष्ठात्रीदेवताकथनं। राशिपर्य्यायः। तेषां वर्णकथनं। तेषां विशेषसञ्ज्ञा। द्विपदचतुष्पदादिभेदकथनं। कीटसरीसृपकथनं। ग्राम्यारण्यकथनं। जलजराशिकथनञ्च। राशीनां वश्यत्वादिविवेकः। ह्रस्वत्वादिविवेकः। तेषां रात्रिबलित्वादिकथनञ्च। दिगधिपलग्नकथनं। उच्चनीचकथनं। मूलत्रिकोणकथनं। लग्नमानं। भोगविवेकः। दिवादण्डादिज्ञानं। होरा। द्रेक्काणादयः। षड्वर्गविवेकः। राशिभावविवेकः। केन्द्रादिविभागः। दृष्टिज्ञानं। ग्रहपर्य्यायः। पापादिग्रहविवेकः। ग्रहाणां वर्णनिरूपणं। दिगधिपग्रहकथनं। दिग्बलित्वविवेकः। पुरुषाद्यधिपाः। जात्यधिपाः। वेदाधिपाः। गुणाधिपाः। रसाधिपाः। नैसर्गिकमित्रकथनं। नैसर्गिकशत्रुकथनं। तत्कालमित्रादिकथनं। अधिमित्रादिकथनं। बलविवेकः। साण्ड्यगोचरः। गोचरफलकालः। तदपवादः। वारवेला। कालवेला। अष्टवर्गः। नन्दादयः। अवमदिनादिनिरूपणं। शतपदचक्रं। नक्षत्राधिदेवता। ध्रुवगणादिकथनं। अधोमुखगणकथनं। ऊर्द्ध्वमुखगणकथनं। पार्श्वमुखगणकथनं। यात्रादिनक्षत्रनिरूपणं। राज्याभिषेकोप-

योगिनचत्रकथनं। नाड़ीनचत्रं। अशुभचन्द्रादिप्रतीकारः। ग्रहणं। भूकम्पः। वेलामण्डलः। कालाशुद्धिः। विवाहः द्विरागमनं। निषेकः। पुंसवनं। पञ्चामृतं। सीमन्तोन्नयनं। जातकर्म्म। नामकरणं। अन्नप्राशनं। नवान्नं। चूड़ाकरणं। विद्यारम्भः। कर्णवेधः। उपनयनं। यात्रा। गृहारम्भः। शङ्खादिधारणं। देवप्रतिष्ठा। परीचा। राजादिदर्शनं। आयव्ययफलकथनं। रोगशान्तिज्ञानं। होमविधिः। औषधकरणं। आरोग्यस्नानं। पञ्जिकासाधनं। महाविषुवादिफलकथनं। वृहस्पतिसञ्चारफलकथनञ्च इति॥

---

## No. 1665. प्रीतिसन्दर्भः।

Substance, country-made paper, 12 × 5 inches. Folia, 172. Lines, 10 on a page. Extent, 4,515 s'lokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Madangopála Goswámí. A second copy at Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, old. Prose and verse. Correct.

*Príti-sandarbha.* The sixth part of the work described under No. 1656. It is devoted to love for the Divinity as personified in Krishṇa.

Beginning. तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ।
दाचिणात्येन भट्टेन पुनरेतद्विविच्यते॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितं।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः॥
अथ प्रीतिसन्दर्भो लेख्यः। इह खलु शास्त्रप्रतिपाद्यं परमतत्त्वं हि सन्दर्भचतुष्टयेन पूर्व्वं समबध्यत, तदुपासना च तदनन्तरसन्दर्भेणाभिहिता। इत्यादि।

End. तदन्ते श्रीराधादेव्या महिमा। इति षष्ठः सन्दर्भः।

Colophon. इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे प्रीतिसन्दर्भो नाम षष्ठः सन्दर्भः।

विषयः। ग्रन्थोऽयं तत्त्वसन्दर्भवत् श्रीमद्भागवतटीकास्थानीयः। तत्र,—भगवत् प्रीतेः पुरुषार्थत्वनिरूपणं। परतत्त्वमात्रसाचात्कारस्य परमपुरुषार्थत्वकथनं। तस्य मुक्तित्वकथनं। तत्रैव सविशेषनिर्व्विशेषभेदकथनं। जीवन्मुक्त्युत्क्रान्तिमुक्तिभेदः। ब्रह्मसाचात्कारस्वरूपं। मुक्त्यपेचया प्रीतः प्राधान्यकथनं। सद्योमुक्तिकथनं। क्रममुक्तिनिरूपणं। ब्रह्मसाचात्काररूपजीवन्मुक्तिकथनं। ब्रह्मसाचात्काररूपा-

त्क्रान्तिमुक्तिः। भगवत्साचात्कारस्य मुक्तित्वं। तत्रचणजीवन्मुक्तिः। तत्रचणोत्क्रान्तिमुक्तिश्च। सालोक्यादिमुक्तिभेदः। तत्रैव सामीप्यस्य आधिक्यकथनं। भगवद्भक्तेर्मुक्तित्वं। भक्तेरुपादेयत्वं। तत्र उपपत्तिप्रदर्शनं। अन्यथोदाहरणसमाधानञ्च। भगवत्प्रीतिस्वरूपलचणं। तस्या गुणातीतत्वादिकं। तत्तटस्थलचणं। तदाविर्भावभेदाः। प्रीतिलचणवाक्यानां निष्कर्षः। श्रीकृष्णप्रीतेः श्रीकृष्णाविर्भावपूर्णत्वेन श्रेष्ठत्वकथनं। प्रीतेः रत्यादिभेदनिरूपणं। अभिमानभेदेन प्रीतिभक्त्योः प्रभेदकथनं। व्रजदेवीनां कामस्य शुद्धप्रेमत्वस्थापनं। ज्ञानभक्त्यादीनां क्वचिन्मिश्रत्वनिरूपणं। रत्याद्युदाहरणं। ज्ञानिभक्तादिषु रत्यादिव्यवस्था। तत्तारतम्ये परिकराभिमानिनां प्रीत्युत्कर्षः। भगवतोऽपि तत्तदभिमानत्वं। ऐश्वर्य्यमाधुर्य्यानुभवयोस्तारतम्यं। तत्र गोकुलवासिनां श्रेष्ठत्वं। तत्रापि सखीनां। तदन्ते पित्रोः। ततो गोपीनां। तत्रापि श्रीराधायाः। भगवत्प्रीतेः रसत्वस्थापनं। अनुकार्य्येऽपि तस्या रसत्वं। लौकिकरसात् श्रेष्ठत्वकथनं। आलम्बनविभावाः। तत्र सन्देहनिरासः। उद्दीपनविभावाः। गुणकथनं। विरोधिगुणकथनं। भगवत्कामविशेषस्य प्रेमविशेषत्वं। धीरोदात्तादिभेदाः। ऐश्वर्य्यमाधुर्य्यमय्योर्माधुर्य्यमय्या लीलायाः श्रेष्ठत्वं। धर्म्मज्ञानलीलयोः समाधानं। उद्दीपने द्रव्याणि कालाश्च। प्रकाशलीलाया आधिक्यं। अनुभावसञ्चारिभावविवेचनं। रसस्य पाञ्चविध्यस्थापनञ्च। सप्तविधगौणरसकथनं। रसाभासाः। मुख्यरसनिरूपणप्रसङ्गेन शान्त्याख्यभक्तिरसकथनं। आश्रयभक्तिरसः। दास्यभक्तिरसः। प्रश्रयभक्तिरसः। वत्सलरसः। मैत्रीमयः। वल्लभानां भेदाः। मदमानादीनां समाधानं। उद्दीपनविभावाः। अनुभावाः। व्यभिचारिणः। स्थायी। सम्भोगात्मक-मोदात्मकभावविचारः। भावभेदाः। सम्भोगविप्रलम्भादिभावभेदाः। पूर्व्वरागः। मानः। प्रेमवैचित्त्यं। प्रवासः। सम्भोगभेदाः। श्रीराधाया महिमा च॥

---

## No. 1666. भगवत्सन्दर्भः।

Substance, some country-made and some English-made paper, 12 × 4 inches. Folia, 137. Lines, 9—10 on a page. Extent, 3,767 s'lokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Madangopála Gos'vámí. A second copy at Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, some leaves old and some new. Prose and verse. Generally correct.

*Bhagavat-sandarbha.* The second part of the work described under No. 1656. It is devoted to the attributes of the Divinity.

Beginning. तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितं ।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥ इत्यादि ।

End. ब्रह्मभगवन्तौ ।

Colophon. इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवच्चैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनभाजनश्रीरूपसनातनानुशासनभारतीगर्भे भागवतसन्दर्भे भगवत्सन्दर्भो नाम द्वितीयः सन्दर्भः ।

विषयः । ब्रह्मत्वपरमात्मत्वादिना तत्त्वनिरूपणं । ब्रह्मादीनामाविर्भावयोग्यता । वैकुण्ठनिरूपणं । विशुद्धसत्त्वनिरूपणं । ब्रह्मस्वरूपस्य स्वशक्तिकत्वं । विशुद्धशक्तेराश्रयत्वस्थापनं । शक्तेरचिन्त्यत्वकथनं । स्वाभाविकशक्तिनानात्वकथनं । शक्तेरन्तरङ्गादिभेदकथनं । मायाशक्तिः । स्वरूपशक्तिः । गुणानां स्वरूपभूतत्वं । श्रीविग्रहस्य नित्यत्वं । तस्य विभुत्वकथनं । सर्व्वाश्रयत्वकथनं । स्थूलसूक्ष्मातिरिक्तत्वं । प्रत्यग्रूपत्वं । स्वप्रकाशत्वञ्च । जन्मकर्म्मरूपगुणानामप्राकृतत्वं । श्रीविग्रहस्य पूर्णस्वरूपत्वं । तत्परिच्छदानां स्वरूपांशत्वं । वैकुण्ठपार्षदादीनां वर्णनं । सनकाद्यनुभवेन तेषां पूर्व्वं ज्ञानां ब्रह्मानन्दतोऽपि उत्कर्षनिरूपणं । ब्रह्मभगवत्तारतम्यं । भगवत एव पूर्णतत्त्वाकारत्वं । सर्व्ववेदाभिधेयत्वं । श्रुतिस्मृतिसङ्गतिः । स्वरूपशक्तिविवरणं । सर्व्वप्रकरणार्थसङ्ग्रहेण भगवल्लक्षणनिरूपणं । भगवतो वेदभक्त्यैकगम्यत्वकथनञ्च । इति ।

---

## No. 1667. चतुर्थक्रमसन्दर्भः ।

Substance, country-made yellow paper, 12 × 4 inches. Folia, 36. Lines, 12 on a page. Extent, 1,026 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávagísa. A second copy at Calcutta, in the Family Library of Dr. Rájendralála Mitra. Appearance, fresh. Prose. Correct.

*Krama-sandarbha.* The fourth book of the seventh part of the work described under No. 1656. It expounds the fourth book of the Bhágavata Puráṇa.

तस्यायं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितं।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः॥
यः श्रीकृष्णपदाम्भोजभजनैकाभिलाषवान्।
तेनैव दृश्यतामेतदन्यस्मै शपथोऽर्पितः॥
श्रीमद्भागवतं श्रीमन्मन्त्रदेश्किमीश्वरं।
अथ नत्वा मन्त्रगुरून् गुरून् भागवतार्थदान्॥
श्रीभागवतसन्दर्भं वक्ष्यमाणेन लेखितुं।
श्रीमद्भागवतार्थानां सन्दर्भं काण्डमाश्रये॥ इत्यादि।

End. ततश्च ईहायास्तदनुशीलनव्यतिरिक्तचेष्टायाः॥ १२॥ १०॥ श्रीसूतः। उद्दिष्ट-सम्बन्धः।

Colophon. इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनभाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे तत्त्वसन्दर्भो नाम प्रथमः सन्दर्भः। समाप्तश्चायं तत्त्वसन्दर्भः।

विषयः। ग्रन्थोऽयं श्रीमद्भागवतीयानां केषाञ्चित् श्लोकानां व्याख्यानप्रसङ्गेन निर्म्मिततया तट्टीकास्थानीयः। तत्र प्रमाणनिरूपणप्रसङ्गेन प्रत्यक्षादीनां सदोषत्वकथनं। शब्दप्रमाणस्य निर्दोषत्वसंस्थापनं। तत्रापि श्रीमद्भागवतस्य प्राधान्यकथनं। श्रीमद्भागवतस्य सङ्क्षेपेण तात्पर्य्यकथनं। सामान्यतस्तत्त्वनिरूपणं। महापुराणलक्षणं। सर्गप्रतिसर्गादिव्याख्यानञ्च।

---

## No. 1671. दायदीपः।

Substance, country-made paper, 12 × 3½ inches. Folia, 18. Lines, 9 on a page. Extent, 688 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávagís'a. Appearance, old. Prose and verse. Correct.

*Dáya-dípa.* An exposition of the law of Inheritance. By Jaya-kṛishṇa.

Beginning. गोविन्दचरणद्वन्द्वं देवदेवाभिवन्दितं।
प्रणम्य जयकृष्णेन दायदीपः प्रकाश्यते॥
तत्र दायपदार्थमाह।
विभागोऽर्थस्य पित्र्यस्य पुत्त्रैर्यत्र प्रकल्प्यते।
दायभाग इति प्रोक्तं तद्विवादपदं विदुः॥ इत्यादि।

End. प्रभोरिति कर्तृषष्ठी, प्रभुः समर्थः ।

Colophon. इति जयकृष्णभट्टाचार्य्यविरचितो दायदीपः समाप्तः ।

विषयः । दायस्वरूपविचारः । पितृकृतविभागः । पितृधनोपष्टम्भनव्यवस्था । भ्रातृकृतविभागः । पितृऋणादिशोधनं । ज्येष्ठकनिष्ठमध्यमनिरुक्तिः । पितामहधने विशेषकथनं । विभागकाले निह्नुतादिधनविभागः । स्त्रीधननिरूपणादिकं । अनपत्यस्त्रीधनाधिकारः । अनपत्यपुरुषधनाधिकारः । विभागानर्हकथनं । विभाज्याविभाज्यधनकथनं । पुस्तकविभागाभावकथनं । संसृष्टधनविभागः । भूमिव्यवस्था । त्रैपुरुषिकभोगकथनं । अस्वामिदत्तविचारः ।

---

## No. 1672. गोविन्दवल्लभनाटकं ।

Substance, country-made paper, 12 × 4 inches. Folia, 28. Lines, 7 on a page. Extent, 462 s'lokas. Character, Bengali. Date, ? Place of deposit, Korḍe, Thánà Siuḍí, Zelá Virbhum, Kuladánanda Sen. Appearance, fresh. Prose and verse. Correct.

*Gavindaballabha Náṭaka.* A drama on the youthful sports of Kṛishṇa, designed, like the " Passion Plays" of Europe, to place before the faithful the early life of the divinity in the most attractive form possible. The author's name is not known, and the MS. being incomplete, the extent of the drama cannot be ascertained. The codex closes with the fourth Act.

Beginning. (प्रथमतः त्रीणि पत्राणि न सन्ति । ) ——खिलगोपालबालप्रेरितं श्रीयशोदासविधं पशुपालनविधावादेशग्रहणार्थं धावन्तं श्रीकृष्णं स्मारयसि । नेपथ्ये ।
प्रातरुत्थाय गोविन्दो रङ्गस्थानं सह प्रियैः ।
समानैर्मल्लीलायै जगाम कुतुकान्वितः ॥ इत्यादि ।

End. गङ्गागोविन्दकहृदि विलसतु केशवविपिननिवेशः।
द्वारमुखान्तिकनायकाव्यसदुक्तसुगीतविशेषः ॥

Colophon. इतः परमलिखिततया परिसमाप्तिवाक्यं नास्ति । (अत्र चतुर्थाङ्कस्य कियदंशपर्य्यन्तमस्ति । )

विषयः । (गीताभिनययोग्यं नाटकमिदं । ) ( अत्र तु मुख्यया संस्कृतभाषयैव ) (सर्व्वासां प्रकृतीनां कथोपकथनादिकमस्ति । )

प्रथमेऽङ्के;—यशादारोहिण्योरभिनयेन श्रीकृष्णस्य मल्लयुद्धादिकीर्त्तनं । गोचा-

र्णं। वृन्दावनशोभावर्णनं। बलदेवस्य मधुपानोन्मत्तस्य यशोदासमीपे वन-वृत्तान्तवर्णनं।

१ ये,—नन्देन श्रीदाम-सुदाम मधुमङ्गलप्रभृतिभिः श्रीकृष्णबलरामयोर्लालनं। ज्योतिर्विदाभिनयः। कृष्णस्य गोष्ठोचितवेशविन्यासादिकं।

२ ये,—गोष्ठयात्रायां मङ्गलगीतिः। श्रीदामादिभिः सार्द्धं श्रीकृष्णस्य विश्रम्भालापवर्णनं। कयाचित् राधिकासमीपे श्रीकृष्णरूपादादिकीर्त्तनं। राधाकृष्णयोरन्योन्यदर्शनं। श्रीकृष्णादीनां भोजनवर्णनं। राधिकया सह श्रीदाम्न सम्बन्धः।

४र्थे,—राधिकावयस्यया समं श्रीकृष्णस्य कथोपकथनं। बलदेवेन सह श्रीकृष्णस्य वृन्दावनप्रवेशवर्णनं। इतः परं नास्ति।

---

## No. 1673. गोविन्दविरुदावली।

Substance, country-made paper, 11 × 4 inches. Folia, 19. Lines, 6 on a page. Extent, 371 s'lokas. Character, Bengali. Date, ? Place of deposit, Kendográma, Thána Siudi, Zelá Virbhum, Mahendranátha Mukhopádháy. Appearance, old. Prose and verse Incorrect.

*Govinda-virudávalí.* Hymns in praise of the appearance and career of Kṛishṇa. By Rúpa Gos'vámí.

Beginning. अथ गोविन्दविरुदावली।

इयं मङ्गलरूपा स्याङ्गोविन्दविरुदावली।
यस्याः पठनमात्रेण श्रीगोविन्दः प्रसीदति।
ब्रह्मा ब्रह्माण्डभाण्डे सरसिजनयनः सत्रुमाक्रीड़नानि
स्थाणुर्भक्तश्च खेला खुरलितमतिना तानि येन न्ययाजि।
तादृक् क्रीड़ाण्डकोटिव्रतजलकुड़वा यस्य वैकुण्ठकुल्या
कर्त्तव्या तस्य का ते स्तुतिरिह कृतिभिः प्रोञ्झ्य लीलायितानि॥ इत्यदि।

End. रम्यया विरुदावल्या प्रोक्तलक्षणयुक्तया।
स्तूयमानः प्रमुदितो वासुदेवः प्रसीदति॥
यः स्तौति विरुदावल्या मथुरामण्डले हरिं।
अन्यया रम्यया तस्मै तूर्णमेव प्रसीदति॥

Colophon. इति श्रीमद्रूपगोस्वामिविरचिता श्रीगोविन्दविरुदावली समाप्ता।

विषयः। स्तोत्रव्याजेन श्रीकृष्णस्य रूपलीलादिवर्णनं।

---

## No. 1674. ललितरहस्यं ।

Substance, country-made yellow paper, 9 × 5 inches. Folia, 102. Lines, 22—24 on a page. Extent, 1,466 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, S'rínátha Chaṭṭopádhyáya. Appearance, fresh. Prose and verse. Incorrect.

*Lalita-rahasya.* Dissertations on the leading topics of the Tantra cultus. By Rájendra Tarkavágís'a Bhaṭṭáchárya. The work is in nine chapters, and its leaning is in favour of the supremacy of Krishṇa.

Beginning. सुखयति नखचन्द्रैराधिसन्तप्तविश्वं मदयति मकरन्दैरिन्दिरेशामरेशान् ।
कवयति कविमूढं गुञ्जमञ्जीरशब्दैर्जयति जयति काचिन्नाथपादाम्बुजश्रीः ॥

End. कामेन कामितं क्तत्वा कामस्थं चोभयेज्जगत् ।
अविचार्य्य वि + + + सुदक्षः कर्हिचिद्बुधैः ॥
इति राजेन्द्रवन्द्येन भूयो विरचितोऽञ्जलिः ।

Colophon. इति राजेन्द्रतर्कवागीशभट्टाचार्य्यसङ्कलितललितरहस्ये नवमोल्लासः ।

विषयः । (पुराणतन्त्रशास्त्राणि सङ्गृह्य विरचितोऽयं ग्रन्थः ।)

तत्र प्रथमोल्लासे,—गुरुतत्त्वकथनं । ब्रह्मतत्त्वं । दुर्गायास्त्रिगुणात्मकत्वादिकथनं । हंसतत्त्वनिरूपणं । तत्स्वरूपकथनादिकं । ऋष्यादिनिरूपणं ।

२ ये,—कामकलातत्त्वकथनं । चिच्छक्तिस्वरूपादिनिरूपणं । कामकलाध्यानादिकथनं ।

३ ये,—नादतत्त्वकथनं । नादविन्द्वादीनामुत्पत्तिकथनं । शब्दब्रह्मनिरूपणं । योनिमुद्राकथनं । योगसाधनप्रकारः ।

४ र्थे,—कुण्डलिनीतत्त्वनिरूपणं । तत्स्वरूपं । ध्यानादिकथनञ्च । षट्चक्रकथनं । महामुद्रालक्षणं । महाबन्धमुद्रा । महावेधमुद्रा । खेचरीमुद्रा । मूलबन्धमुद्रा । उड्डीयनमुद्रा । जालन्धरमुद्रा । करणीमुद्रा । विपरीतमुद्रा । शक्तिचालनमुद्रा ।

५ मे—मन्त्रतत्त्वविवेचनं । मन्त्राणां स्त्रीपुंनपुंसकत्वकथनं । स्वापकालादिकथनं । निशाचार-दिवाचार-पल्लव-वीजसंयोग-भावसंयोगादिनिरूपणं । उपांशु-जपादिलक्षणं । अन्तरात्मवृत्तिकथनं । काम्यसाधननिरूपणं । वर्णमालातत्त्वकथनं ।

६ ष्ठे,—अन्तर्यागविवेचनं । ज्ञानाम्बुस्नानं । शिवशक्तिमेलनरूपसन्ध्याकथनं ।

चन्द्राचत-परानन्दादीनां पानपात्र-मांस-मद्यत्वादिना योगिषु नियमनं। अन्तर्मातृकान्यासः। मालारहस्यकथनं।

७ मे,—योगतत्त्वकथनं। योगलक्षणं। यमनियमादिनिरूपणं। अहिंसा-सत्यादिदशविधसाधनकथनं। पद्म-सिद्ध-वीरप्रभृतीनामासनानां लक्षणं। प्राणायामप्रक्रिया। तत्त्रिविधभेदनिरूपणं। तत्र साधकावस्था। घटसिद्धिः। निःश्वासगतिनिरूपणं। प्रत्याहारादीनां लक्षणं। भगवतो विशुद्धसत्त्वात्मकत्व-कथनं।

८ मे,—(अयन्तु प्रायः खण्डितः) दिव्यवीरादिभावतत्त्वनिरूपणं।

९ मे,—कामेश्वरतत्त्वनिरूपणं। श्रीकृष्णस्य कामेश्वरत्वकथनं। तत्र ध्यानादि-निरूपणञ्च।

---

## No. 1675. योगतारावली।

Substance, country-made yellow paper, 8 × 5 inches. Folia, 5. Lines, 14 on a page. Extent, 65 s'lokas. Character, Bengali. Date, Sk. 1760. Place of deposit, S'ántipura, S'rínátha Chaṭṭopádhyáya. Appearance, old. Verse. Correct.

*Yoga-táráralí.* On the importance of Yoga for the regeneration of the soul, and on the mode of performing various kinds of Yoga, the most important being the Rája Yoga. By S'añkara A'chárya.

Beginning. वन्दे गुरूणां चरनारविन्दे सन्दर्शितस्वात्मसुखावबोधे।
निःश्रेयसे जाङ्गलिकायमाने संसारहालाहलमोहशान्त्यै॥

End. ब्रह्मरन्ध्रगते वायौ गिर+श्रवणं भवेत्।
शृणोति श्रवणायातं नादं मुक्तिर्न संशयः॥

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्कराचा-र्य्यविरचिता योगतारावली समाप्ता। शकाब्दाः १७६०।

विषयः। योगाभ्यासप्रकारकीर्त्तनं। पूरककुम्भकादीनां प्रत्येकफलकथनं। राजयोगकथ-नादिकञ्च।

---

## No. 1676. कपिलगीता ।

Substance, country-made paper, 10 x 6 inches. Folia, 97. Lines, 16 on a page. Extent, 582 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, S'rínátha Chaṭṭopádhyáya. Appearance, fresh. Verse. Correct.

*Kapila-gíta.* Dissertations on the importance of Yoga meditations, and the mode of performing them. By Kapila. The work is divided into five chapters.

Beginning. नत्वा श्रीगुरुपादाब्जं स्मृत्वा मोक्षार्थसिद्धिदं ।
तारकाभ्यन्तरे पञ्चब्रह्मतत्त्वं तदुच्यते ॥
पञ्चब्रह्मपञ्चदेवाः पञ्चस्थानेषु सप्तधा ।
पञ्च मातृकाः पञ्च वाक्यं पञ्च शून्यं तथैव च ॥

End. राजराजेश्वरं योगं शेषमास्ये प्रशस्यते ।
यः पठेद् भक्तियुक्तेन स मुक्तो नात्र संशयः ॥

Colophon. इति कपिलगीतायां पञ्चमोऽध्यायः । समाप्तश्चायं ग्रन्थः ।

विषयः । ( शिवाशिवसंवादेनाध्यात्मयोगनिरूपणं । )
१, २ अध्याये,—पञ्चब्रह्म-पञ्चदेव-पञ्चस्थान-पञ्चमातृका-पञ्चवाक्य-पञ्चशून्य-पञ्चावस्था-पञ्चदेह-पञ्चवेदादीनामुद्देशः । एषां प्रपञ्च-प्रपञ्चनञ्च ।
३, ४ अध्याये,—प्रणवस्थपञ्चदेवताकथनं । प्रणवसंस्थानकथनपूर्व्वकं तत्र वेदानामवस्थितिकीर्त्तनं । सृष्टिप्रकारः । पृथक् पृथक् मातृकायां वर्णविन्यासनिरूपणं । वैष्णव-शाम्भवविद्यादिभ्यः शक्तिविद्यायाः श्रेष्ठत्वकथनं । परिच्छिन्नारदादीनां क्रमेण श्रवणकीर्त्तनादिभक्त्यङ्गाधिकारित्वं । इड़ापिङ्गलादीनां स्थानादिनिरूपणं । तत्त्वज्ञानोपायकथनं । तीर्थादीनां निन्दावादपूर्व्वकं आत्मतीर्थस्य मुख्यत्वकथनं ।
५ अध्याये,—योगाधिकारिनिरूपणं । राजराजेश्वरयोगः । कर्म्मज्ञानयोः विरोधसमन्वयः । सर्व्वत्र मनसः कर्त्तृत्वकथनं । हृदयस्थितं परतत्त्वं विहाय शिलामृत्तिकाचित्रादिषु देवताबुद्धेर्निन्दनं । जीवस्य रूपकथनं । परमात्मज्योतिर्निरूपणं । तदाधारस्थानादिकीर्त्तनं । अन्तर्द्देहनिरूपणं । इति ।

---

## No. 1677. आत्मबोधटीका ।

Substance, country-made yellow paper, 14 × 4 inches. Folia, 8. Lines, 7 on a page. Extent, 189 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, S'rínátha Chaṭṭopádyáya. Appearance, new. Prose. Correct.

*A'tmabodha Ṭíká.* A commentary on Sañkara's *A'tmabodha* or essence of Vedánta spiritualism. By Madhusúdana Sarasvatí.

Beginning. अतमखपूजितपादं अतपथमनसोऽप्यगोचराकारं ।
विकसितजलरुहनेत्रं सीतावामाङ्गमाश्रये रामं ॥
तत्र भगवान् शङ्कराचार्य्य उत्तमाधिकारिणे वेदान्तप्रस्थानत्रयं निर्म्माय तदव-
लोकनासमर्थानां मन्दबुद्धीनामनुग्रहार्थं सर्व्ववेदान्तसिद्धान्तसङ्ग्रहनात्मबोधार्थ-
प्रकरणं दिदर्शयिषुः प्रतिजानीते, तपोभिरिति ।

End. तस्मादात्मतीर्थे स्नातस्य न किञ्चिदवशिष्यते—इति भावः ।

Colophon. इति श्रीमधुसूदनसरस्वतीकृतात्मबोधप्रकरणटीका समाप्ता ।

विषयः । शङ्कराचार्य्यकृतात्मबोधस्य व्याख्यानं ।

---

## No. 1678. वायुपुराणं ।

Substance, country-made paper, 13½ × 5¼ inches. Folia, 275. Lines, 10—11—12 on a page. Extent, 1,200 s'lokas. Character, Nágara. Date, Sk. 1689. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

*Váyu Puráṇa.* One of the eighteen great Puráṇas attributed to Vyása. The work is divided into 2 Parts, the 1st comprising 52 chapters, and the 2nd, 40 chapters. Contents of First Part: Introduction; 2, Places meet for Satras; 3 to 7, Creation; 8, Relation of the present to the past Kalpas; 9, The four conditions of life; 10, Origin of the Asuras; 11, Description of a kind of Yoga called Pas'upata; 12, The use of regulation of breath (Práṇáyáma); 13, Accidents to Yoga; 14, Majesty of Yoga; 15, Nature of Parabrahma; 16, Adoration of the fiery essence of the soul; 17, Purification; 18, Rules regarding the religious staff; 19, expiations for Yatis; 20, Sensations at the time of death; 21, Letters and accents; 22, Duration of Kalpas; 23, A kind of Yoga called Máhes'varávatára; 24, Form of Vishṇu at the time of a

deluge; 25, Nature of hymns to Mahádeva; 26, Mahádeva's advice to Vishṇu and Brahmá; 27, Origin of vowels; 28, The body of Mahádeva described; 29, Genealogy of Ṛishis; 30, The mind-created sons of Brahmá; 31, Daksha's hymn to Mahádeva; 32, The race of Svayambhuva; 33, The regents of the seven Dvípas; 34 to 38, Sumeru and other mountains; 39 and 40, The mountains, rivers and countries of the earth; The Kailás'a mountain; 42, Descriptions of Plaksha and other continents; 43, The size of the earth; 44 and 45, Motions of Planets; 46, Hymn to Nílakaṇṭha; 47, Origin of Liṅgams; 48, Names of the Pítris; 49, Yajñas; 50, The four Yugas; 51, Characteristics of the four Yugas; 52, The descendants of Prajápati.

Contents of Part Second: 1, Churning of the earth; 2, The descendants of Prithu; 3, The eight kinds of Devas; 4, The descendants of Prajápati; 5, The birth of the Devas in the Vaivasvata Manantara; 6 and 7, The race of Daityas; 8, The descendants of Ṛishis; 9 to 18, S'ráddhas; 19, 20 and 21, Birth of Vaivasvata, and his descendants; 22, The descendants of Ikshâku; 23, The tribes of Mithilá; 24, 25 and 26, Birth of Soma, and his descendants; 27 and 28, The clan of the Yadus; 29, The attributes of Vishṇu; 30, Royal races; 31, Account of future Manvantaras; 32, The mansion of S'iva described; 33 to 40, The origin and merits of Gayá.

Beginning. नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥
जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः।
यस्यास्यकमलगलितं वाङ्मयमम्टतं जगत् पिबति॥
प्रपद्ये देवमीशानं शाश्वतं पदमव्ययं।
महादेवं महात्मानं सर्व्वस्य जगतः पतिं॥ १॥
ब्रह्माणं लोककर्त्तारं सर्व्वज्ञमपराजितं।
प्रभुं भूतभविष्यस्य साम्प्रतस्य च सत्पतिं॥ २॥

End. सूत उवाच। सनत्कुमारो मुनिपुङ्गवाय पुण्यां कथाञ्चाथ निवेद्य भक्त्या।
स्वमाश्रमं पुण्यवनैरुपेतं विसृज्य सङ्गीतगुरुं जगाम॥

Colophon. इति श्रीवायुपुराणे वायुप्रोक्ते गयामाहात्म्यं। समाप्तञ्चेदं वायुपुराणं।

विषयः। १मे,—अनुक्रमणिका। २ये,—नैमिषीयऋषिकृतसत्रस्य स्थानादिकथनं।
३, ४, ५, ६, ७,—प्रजापतिसृष्टिकथनं। ८,—अतीतकल्पवर्त्तमानकल्पयोर॰

विषयः। न्तरात्मकप्रतिसन्धिकीर्त्तनं। ९,—चतुराश्रमविभागः। १०,—ब्रह्मणो जघनादिदेशात् असुराद्युत्पत्तिवर्णनं। ११,—पाशुपतयोगवर्णनं। १२,—प्राणायामप्रयोजनं। १३,—योगोपसर्गवर्णनं। १४,—योगैश्वर्य्यगुणविस्तारकथनं। १५,—परब्रह्मणः सूक्ष्मत्वादिवर्णनं। १६,—हृदयस्थितस्याग्नेरुपासनविधिः। १७,—शौचाचारलक्षणं। १८,—विदण्डिव्यवस्थापनं। १९,—यतीनां प्रायश्चित्तानि। २०,—मृत्योर्नैकट्यज्ञापकअरुन्धत्यादिदर्शननिरूपणं। २१,—अक्षरमात्रादिनिरूपणं। २२,—कल्पप्रमाणादिकथनं। २३,—माहेश्वरावतारयोगः। २४,—प्रलयकाले विष्णुरूपवर्णनं। २५,—महादेवस्तववर्णनं। २६,—विष्णुब्रह्माणौ प्रति महादेववाक्यं। २७,—स्वरवर्णोत्पत्तिवर्णनं। २८,—महादेवतनूनां नामभिः परिकीर्त्तनं। २९,—ऋषिवंशानुकीर्त्तनं। ३०,—ब्रह्मणो मानसपुत्रादिवर्णनं। ३१,—दक्षकृतमहादेवस्तोत्रं। ३२,—स्वायम्भुववंशवर्णनं। ३३,—सप्तद्वीपाधिपतिवर्णनं। ३४, ३५, ३६, ३७, ३८,—सुमेरुपर्व्वतादीनां वर्णनं। ३९, ४०,—सप्तकुलाचलानां, नदीविशेषाणां, जनपदविशेषाणाञ्च वर्णनं। ४१,—कैलासपर्व्वतवर्णनं। ४२,—प्लक्षादिद्वीपवर्णनं। ४३,—पृथिवीप्रमाणनिरूपणं। ४४, ४५,—ज्योतिःपदार्थानां गतिनिरूपणं। ४६,—नीलकण्ठस्तवः। ४७,—लिङ्गोत्पत्तिवर्णनं। ४८,—पितृवर्गाणां नामकथनं। ४९,—यज्ञप्रवर्त्तनं। ५०,—चतुर्युगाख्यानं। ५१,—युगधर्म्मकथनं। ५२,—प्रजापतिवंशानुकीर्त्तनं। प्रथमखण्डः समाप्तः।

द्वितीयखण्डे १,—पृथिवीदोहनं। २,—पृथुवंशवर्णनं। ३,—अष्टविधदेवगणकथनं। ४,—प्रजापतिवंशानुकीर्त्तनं। ५,—वैवस्वतमन्वन्तरे देवादीनां उत्पत्तिकथनं। ६, ७,—दैत्यवंशवर्णनं। ८,—ऋषिवंशवर्णनं। ९, १०, ११, १२, १३, १४, १५, १६, १७, १८,—श्राद्धकल्पकीर्त्तनं। १९,—वैवस्वतोत्पत्तिः। २०,—वैवस्वतवंशकीर्त्तनं। २१,—वैवस्वतपुत्राणां निसर्गवर्णनं। २२,—इक्ष्वाकुवंशवर्णनं। २३,—मैथिलवंशवर्णनं। २४,—सोमजन्मवर्णनं। २५, २६,—सोमवंशवर्णनं। २७, २८,—यदुवंशवर्णनं। २९,—विष्णुमाहात्म्यं। ३०,—उर्व्वस्यादिराज्ञां वंशकीर्त्तनं। ३१,—भविष्यन्मन्वन्तरादीनां सङ्क्षेपेण वर्णनं। ३२,—शिवपुरवर्णनं। ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०,—गयामाहात्म्यं।

### No. 1679. गृह्यविवरणं, वा कर्कभाष्यं ।

Substance, country-made paper, 12½ × 4½ inches. Folia, 35. Lines, 11 on a page. Extent, 1,200 s'lokas. Character, Nágara. Date, Sm. 1879. Place of deposit, Calcutta, Government of India. Appearance, old. Prose Incorrect.

*Gṛihya Vivaraṇa* alias *Karka-bháshya.* A commentary on the Gṛihya Sútras of A'pastambha. The MS. is incomplete, being limited to that portion which refers to Sthálipáka.

Beginning. श्रीगणेशाय नमः। श्रौताधानादीनि उक्तानि तदनन्तरं स्मार्त्तान्यभिधीयन्ते।
तदादिमं सूत्रं अथातो गृह्यस्थालीपाकानां कर्म्म ॥ व्याख्यास्यत इति सूत्रशेषः।
तत्रायमथशब्द आनन्तर्य्ये। श्रौतानुविधानसमनन्तरं स्मार्त्तान्यनुविधीयन्त इति।

End. अथातः सभाप्रवेशनमित्येवमादि+++सर्व्वं निगदव्याख्यातमेव ॥

Colophon. इति कर्क्कोपाध्यायकृतं गृह्यविवरणं समाप्तं ॥

विषयः। अथातो गृह्यस्थालीपाकानां कर्म्मेत्यादिगृह्यसूत्राणां व्याख्यानं।

---

### No. 1680. नारदपुराणं पूर्व्वोत्तरभागौ ।

Substance, country-made paper, 13¾ × 6 inches. Folia, 808. Lines, 10 on a page. Extent, 2,148 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

*Nárada Puráṇa.* One of the eighteen great Puráṇas attributed to Vyása. The work is divided into two parts, the first comprising 125 chapters, and the second 82. It treats of the topics common to the Puráṇas, as shown below in Sanskrit.

Beginning. ॐ श्रीगणेशाय नमः।
वन्दे वृन्दावनासीनमिन्दिरानन्दमन्दिरं।
उपेन्द्रं सान्द्रकारुण्यं परानन्दं परात्परं ॥
ब्रह्मविष्णुमहेशाख्या यस्यांशा लोकनायकाः।
तमादिदेवं चिद्रूपं विशुद्धं परमं भजे ॥

End. धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिर्लोकमङ्गलं।
यः स्मारितो हरिः साक्षात् सर्व्वकारणकारणं ॥

Colophon. इति श्रीनारदीयपुराणे उत्तरवादे मोहिनीचरितं नामाध्यायो द्व्यशीतितमः८२
समाप्तोऽयं उत्तरखण्डः।

विषयः। अत्र पूर्व्वभागे पञ्चविंशत्यधिकैकशततमध्यायाः सन्ति। तत्र १, २, ३, ४,—नारदसनत्कुमारसंवादः। ५मे,—भगवतो मृकण्डुपुत्ररूपताकथनं। ६, ७, ८, ९, १०, ११,—गङ्गोत्पत्तिमाहात्म्यादिवर्णनं। १२शे,—वर्णानां मध्ये ब्राह्मणस्य दानपात्रत्वकथनं। १३शे,—देवतायतनस्थापने पुण्यकथनं। १४शे,—धर्म्मशास्त्रनिर्द्देशः। १५शे,—नरकवर्णनं। १६शे,—भगीरथेन गङ्गानयनवृत्तान्तं। १७, १८, १९, २०, २१, २२, २३,—विष्णुव्रतकथनं। २४। २५,—वर्णाश्रमाचारकथनं। २६,—स्मार्त्तधर्म्मकथनं। २७, २८,—श्राद्धविधिः। २९,—तिथ्यादिनिर्णयः। ३०,—प्रायश्चित्तनिर्णयः। ३१,—यममार्गनिरूपणं। ३२,—भवाटवीनिरूपणं। ३३,—योगनिरूपणं। ३४,—हरिभक्तिलक्षणं। ३५,—ज्ञाननिरूपणं। ३६,—विष्णुसेवाप्रभावः। ३७, ३८, ३९, ४०,—विष्णुमाहात्म्य। ४१,—युगधर्म्मकथनं। ४२,—सृष्टितत्त्वनिरूपणं। ४३,—जीवतत्त्वनिरूपणं। ४४,—परलोकनिरूपणं। ४५,—मोक्षधर्म्मनिरूपणं। ४६—आध्यात्मिकादिदुःखत्रयनिरूपणं। ४७,—योगस्वरूपवर्णनं। ४८, ४९,—परमार्थनिरूपणं। ५०,—वेदाङ्गशिक्षाशास्त्रनिरूपणं। ५१,—कल्पशास्त्रनिरूपणं। ५२,—व्याकरणशास्त्रनिरूपणं। ५३,—निरुक्तशास्त्रनिरूपणं। ५४, ५५, ५६,—ज्योतिःशास्त्रनिरूपणं। ५७,—छन्दःशास्त्रनिरूपणं। ५८,—शुकोत्पत्तिवर्णनं। ५९,—ब्राह्मणकर्त्तव्यकर्म्मनिरूपणं। ६०,—वायूत्पत्त्यादिवर्णनं। ६१,—शान्तिकरशास्त्रनिरूपणं। ६२,—मोक्षशास्त्रसमादेशनं। ६३,—भागवततन्त्रनिरूपणं। ६४, ६५, ६६,—दीक्षाविधिः। ६७,—अभीष्टदेवपूजाविधिः। ६८,—गणेशमन्त्रनिरूपणं। ६९,—त्रयीमूर्त्तिनिरूपणं। ७०, ७१, ७२,—विष्णुमन्त्रनिरूपणं। ७३,—राममन्त्रनिरूपणं। ७४,—हनूमन्मन्त्रनिरूपणं। ७५,—हनूमद्दीपविधानं। ७६,—कार्त्तवीर्य्यार्जुनमन्त्रपूजादिनिरूपणं। ७७,—कार्त्तवीर्य्यकवचं। ७८,—हनमत्कवचं। ७९,—हनूमच्चरितं। ८०, ८१,—कृष्णमन्त्रनिरूपणं। ८२,—पूर्व्वजन्मनि नारदस्य महादेवात् कृष्णतत्त्वप्राप्तिवृत्तान्तकथनं। ८३,—राधांशावतारनिरूपणं। ८४,—मधुकैटभोत्पत्तिविवरणं। ८५,—कालीमन्त्रनिरूपणं। ८६,—सरस्वत्यवतारवर्णनं। ८७,—दुर्गांशावतारवर्णनं। ८८,—राधावतारचरितवर्णनं। ८९,—शक्तिसहस्रनामकथनं। ९०,—शक्तिपटलं। ९१,—महेशमन्त्रनिरूपणं। ९२,—पुराणाख्याननिरूपणं। ९३,—पद्मपुराणानुक्रमणिका। ९४,—ब्रह्मपुराणानुक्रमणिका। ९५,—वायुपुराणानुक्रमणिका। ९६,—भागवतानुक्रमणिका। ९७,—नारदपुराणानुक्रमणिका। ९८,—मार्कण्डेयपुराणानुक्रमणिका। ९९,—आग्नेयपुरा-

विषयः। णानुक्रमणिका। १००,—भविष्यपुराणानुक्रमणिका। १०१,—ब्रह्मवैवर्त्तपुराणानुक्रमणिका। १०२,—लिङ्गपुराणानुक्रमणिका। १०३,—वराहपुराणानुक्रमणिका। १०४,—स्कन्दपुराणानुक्रमणिका। १०५,—वामनपुराणानुक्रमणिका। १०६,—कूर्म्मपुराणानुक्रमणिका। १०७,—मत्स्यपुराणानुक्रमणिका। १०८,—गरुड़पुराणानुक्रमणिका। १०९,—ब्रह्माण्डपुराणानुक्रमणिका। ११०,—प्रतिपद्व्रतनिरूपणं। १११,—द्वितीयाव्रतनिरूपणं। ११२,—तृतीयाव्रतनिरूपणं। ११३,—चतुर्थीव्रतनिरूपणं। ११४,—पञ्चमीव्रतनिरूपणं। ११५,—षष्ठीव्रतनिरूपणं। ११६,—सप्तमीव्रतनिरूपणं। ११७,—अष्टमीव्रतनिरूपणं। ११८,—नवमीव्रतनिरूपणं। ११९,—दशमीव्रतनिरूपणं। १२०,—एकादशीव्रतनिरूपणं। १२१,—द्वादशीव्रतनिरूपणं। १२२,—त्रयोदशीव्रतनिरूपणं। १२३,—चतुर्द्दशीव्रतनिरूपणं। १२४,—पूर्णाव्रतनिरूपणं। १२५,—पुराणमहिमा।

उत्तरभागे द्व्यशीतिसङ्ख्यकाध्यायाः सन्ति। तत्र १मे,—द्वादशीमाहात्म्यं। २,—तिथिविचारः। ३,—विष्णोर्भक्त्यधीनत्वकथनं। ४,—नियोगाचरणनिरूपणं। ५,—यमविलापः। ६,—यमं प्रति ब्रह्मवाक्यं। ७,—लोकमोहनार्थं ब्रह्मणा मोहिन्याः प्रमदाया उत्पत्तिः। ८,—मोहिनीचरितं। ९,—रुक्माङ्गदेन राज्ञा मृगयार्थं धर्म्माङ्गदाय पुत्राय राज्यार्पणं। १०,—राज्ञ्या मृगयानिवारणार्थं रुक्माङ्गदाय राज्ञे अहिंसाधर्म्मोपदेशः। ११,—रुक्माङ्गदेन राज्ञा मृगयार्थं वनगमनं मोहिनीदर्शनञ्च। १२,—मोहिन्या सह रुक्माङ्गदस्य विवाहार्थं प्रतिज्ञाकरणं। १३,—रुक्माङ्गदेन मोहिनीविवाहः। १४,—रुक्माङ्गदेन राज्ञा गृहगोधाविमुक्तिः। १५,—रुक्माङ्गदस्य स्वनगरप्रस्थानं। १६,—पतिव्रतोपाख्यानं। १७,—मातरं प्रति धर्म्माङ्गदस्य प्रबोधवाक्यं। १८,—सन्तोषार्थं मातृभ्यो धर्म्माङ्गदेन विविधार्थप्रदानं। १९,—मोहिनीमुग्धस्य राज्ञः मोहिन्या सह पुनर्विहारार्थं पुत्रे राज्यार्पणं। २०,—धर्म्माङ्गदस्य दिग्विजयः। २१,—कामपीड़ितेन राज्ञा मोहिन्यै वित्तदानं। २२, २३, २४, २५, २६, २७,—हरिवासरदिने राज्ञो भोजने यत्नवत्या मोहिन्याः समीपे रुक्माङ्गदेन राज्ञा हरिवासरमाहात्म्यकथनं। २८, २९, ३०, ३१, ३२, ३३, ३४,—मोहिन्या भर्त्रे रुक्माङ्गदाय बहुतरक्लेशदानवृत्तान्तं। ३५, ३६, ३७,—मोहिन्यै वसुना शापदानं, तदुद्धरणाय तीर्थसेवोपदेशादिकञ्च। ३८, ३९, ४०, ४१ ४२, ४३,—गङ्गामाहात्म्यं। ४४, ४५, ४६, ४७,—गयामाहात्म्यं। ४८, ४९, ५०, ५१,—काशीमाहात्म्यं। ५२, ५३, ५४, ५५, ५६, ५७, ५८, ५९, ६०, ६१,—

पुरुषोत्तममाहात्म्यं । ६२, ६३,—प्रयागमाहात्म्यं । ६४, ६५,—कुरुक्षेत्रमाहात्म्यं । ६६,—हरिद्वारमाहात्म्यं । ६७,—वदर्य्याश्रममाहात्म्यं । ६८,—कामोदामाहात्म्यं । ६९,—कामाख्यामाहात्म्यं । ७०,—प्रभासतीर्थमाहात्म्यं । ७१,—पुष्करमाहात्म्यं । ७२,—गौतमाश्रममाहात्म्यं । ७३,—त्र्यम्बकमाहात्म्यं । ७४,—गोकर्णतीर्थमाहात्म्यं । ७५,—लक्ष्मणमाहात्म्यं । ७६,—सेतुमाहात्म्यं । ७७,—नर्मदातीर्थमाहात्म्यं । ७८,—अवन्तीमाहात्म्यं । ७९,—मथुरामाहात्म्यं । ८०,—वृन्दावनमाहात्म्यं । ८१,—वसोर्ब्रह्मान्तिकगमनवृत्तान्तं । ८२,—मोहिन्यास्तीर्थसेवनवृत्तान्तं ॥

---

## No. 1681. काव्यप्रकाशटीका, मूलसहिता ।

Substance, country-made paper, 15¼ × 7 inches. Folia, 354. Lines, 10—11—12—13 on a page. Extent, 11,318 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose and verse. Incorrect.

*Kávyálaṅkára-rahasya-nibandha* alias *Kávya-prakás'a-ṭíká.* A commentary on the *Kávya-prakás'a.* By Bháskara. The codex contains the whole of the text also.—See ante, pp. 115, 116, 210, and 224 for other commentaries on the Kávya-prakás'a.

Beginning. टी॰ । ॐ श्रीगणेशाय नमः । ॐ नमो नारायणाय । अत्र च साहित्यदीपि काव्यटीकाकारः श्रीभास्करः । न ते टीकाकाराः परिणमद्विद्यान्धतमसां प्रमेयं शास्त्राणां प्रतिफलति येषां न मतिषु ॥

मू॰ । ॐ श्रीगणेशाय नमः । ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति ॥

End. टी॰ । लिङ्गस्येति एकतरस्यैवेति यदि तु विपरिणामेन लिङ्गवचसोरपरस्यासम्बन्धस्तदान्यस्य लक्षणे वाक्यभेदः स्यात् ॥ २८८ ॥

मू॰ । इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्म्मिता संघटनैकहेतुः ॥

Colophon. इति श्रीसकलविपश्चिच्चक्रवर्त्तिश्रीमम्मटाचार्य्यविरचिते काव्यालङ्काररहस्यनिबन्धे काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम दशम उल्लासः ॥ समाप्तोऽयं काव्यप्रकाशः ।

विषयः । काव्यप्रकाशस्य व्याख्यानं ॥

---

## No. 1682. न्यायमकरन्दः सटीकः ।

Substance, country-made paper, 12 × 5¼ inches. Folia, 66. Lines, 15—16—17 on a page. Extent, 4,356 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Nyáya-makaranda.* The identity of the human and the divine souls. By Chits'ukha Muni.

Beginning. टी० । श्रीगणेशाय नमः । प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमन-
कामः शिष्टाचारपरिप्राप्ततया कृतमिष्टदेवतानमस्कारमाचारशिक्षार्थं प्रतिपाद-
यन् प्रकरणस्याभिधेयसम्बन्धप्रयोजनानि निदर्शयति यद्भासेत्यादिना श्लोकेन ।

मू० । यद्भासा निखिलं विभाति विषयो यो न स्वयं ज्योतिषां
यस्माद्भुर्वनोद्भवस्थितिलयान् लीलामयान् सूरयः ।
यद्वागोचरमामनन्ति मनसां वाचाञ्च विश्वात्मने
तस्मै शुद्धसुखाद्वितीयवपुषे शश्वन्नमो विष्णवे ॥

End. टी० । ग्रन्थस्य निर्दुष्टता प्रतिपादितेति मन्तव्यं दुष्टस्य तदानन्दहेतुत्वाभावात् ।

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्येण श्रीमच्चित्सुखेन
मुनिना विरचिता न्यायमकरन्दटीका सम्पूर्णा ।

मू० । स्तुतिं के नाभिनन्दन्ति नो चेदरुचिनिदानं मत्सरस्तु मद्यापित्तं (?) ।
इति श्रीआनन्दबोधभट्टारकविरचितो न्यायमकरन्दः समाप्तः ।

विषयः । जीवब्रह्मणोरेकत्वप्रतिपादनं ।

---

## No. 1683. तर्कसङ्ग्रहटीका ।

Substance, country-made paper, 12 × 5¾ inches. Folia, 23. Lines, 4—10 on a page. Extent, 920 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Tarka-sañgraha-dípiká.* A commentary on the Tarka-sañgraha of Anna Bhaṭṭa. Anonymous. Hall's "Contributions," pp. 68, 69.

Beginning. ॐ स्वस्ति श्रीगणेशाय नमः ।
विश्वेश्वरं साम्बमूर्त्तिं प्रणिपत्य गुरुं गिरं ।
टीकां शिशुहितां कुर्वे तर्कसङ्ग्रहदीपिकां ॥

चिकीर्षितस्य ग्रन्थस्य अविघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते निधायेति ॥

End. ज्ञानद्वारैव कर्म मोक्षसाधनं न साक्षात् तस्मात् पदार्थज्ञानान्मोक्षः परमप्रयोजनमिति सर्व्वं रमणीयं ।

Colophon. इति श्रीमदन्नभट्टोपाध्यायकृततर्कसङ्ग्रहटीका समाप्ता ॥

विषयः । तर्कसङ्ग्रहव्याख्यानं ॥

---

## No. 1684. अपरार्कः ।

Substance, country-made paper, $13\frac{3}{4} \times 7\frac{1}{2}$ inches. Folia, 557. Lines, 16 on a page. Extent, 21,700 s'lokas. Character, Nágara. Date, Sm. 1898. Place of deposit, Calcutta, Government of India. Appearance, new. Prose, and verse. Incorrect.

*Aparárka.* A commentary on the Code of Yájñavalkya. By Aparáditya Deva, a descendant of Jímútaváhana, the author of the Mitákshará.

Beginning. ॐ स्वस्ति श्रीगणेशाय नमः । श्रीगुरवे नमः ।

ॐ संसिद्ध्यर्थमिलत् सुरासुरनमन्मौलिस्थितः प्रोल्लसत्
सद्रत्नप्रभवप्रकृष्टविविधप्रेङ्खन्मयूखोज्ज्वलं ।
श्रेयो विघ्नसहामयप्रशमने दिव्यं यदेकौषधं
भूयान्नो द्विरदाननाङ्घ्रिकमलद्वन्द्वं तदिष्टाप्तये ॥
ॐ विश्वानुभूतिसम्भूतिस्थितिसंहृतिमुक्तयः ।
प्रभवन्ति यतस्तस्मै परस्मै ब्रह्मणे नमः ॥
ओं यो विश्वसर्गपरिपालनसंहृतीयो ब्रह्मा हरिस्त्रिनयनश्च भवत्यमेयः ।
तं शुद्धबोधमभयं सुखसत्स्वभावमात्मानमद्वयमनन्तमुपास्महेऽजं ॥
विश्वात्मनः शुक्लयजुंषि भानोरवाप यो योगिगणाग्रवर्य्यः ।
तं याज्ञवल्क्यं मुनिवृन्दवन्द्यं नमामि तत् कीर्त्तितधर्म्मबुद्ध्यै ॥
भक्त्या यस्य सविस्मयः पुररिपुर्ब्रह्मा च वाचस्पति-
र्विक्रान्त्या द्विषतां गणः शुचितया भास्वन् क्षमित्वेन भूः ।
जीमूतान्वयभूषणं सुविपुले योगीश्वरेणोदिते
शास्त्रे वाक्यनयानुगां वितनुते वाचं सतां सम्मतां ॥

धर्म्मसंहितामारभमानस्यास्याः पौरुषेयत्वसामान्याज्जायमानामप्रामाण्यशङ्कां महाजनस्य तदध्ययनधारणादिविषये परिपन्थिनीमपनेतुमाह ।
योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः ॥

End. श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितं ।
एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे ॥
स्वयम्भुवे ब्रह्मणे । अतिरोहितमन्यत् ॥

Colophon. इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्म्मशास्त्रनिबन्धे तृतीयोऽध्यायः ॥
सम्पूर्णश्चायमपरार्कः ॥

विषयः । याज्ञवल्कीयधर्म्मशास्त्रस्य व्याख्यानं ॥

---

No. 1685. आपस्तम्बसूत्रं, चतुर्व्विंशप्रपाठकादिसप्तविंशप्रपाठकपर्य्यन्तं ।

Substance, country-made paper, $10\frac{1}{2} \times 5\frac{1}{2}$ inches. Folia, 47. Lines, 9 on a page. Extent, 1,050 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

*A'pastamba Sútra.* The Kalpa Sútra of A'pastamba. The MS. contains only chapters 24 to 27.

Beginning. श्रीगणेशाय नमः ॥ श्रीलक्ष्मीनृसिंहाय नमः ॥ हरिः ॐ ॥ यज्ञं व्याख्यास्यामः ॥
स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च स त्रिभिर्वेदैर्विधीयते ।

End. प्रतिपद्यते परिषेचनान्तं कृत्वाभिमृतेभ्य उत्तरया दक्षिणतोऽश्मानं परिनिदधाति दधाति ॥ २२ ॥ अष्टमः पटलः ॥

Colophon. इत्यापस्तम्बसूत्रे सप्तविंशप्रश्नः ।
अत्र चतुर्व्विंशप्रपाठकादिसप्तविंशप्रपाठकपर्य्यन्तमस्ति । २४ प्रपाठके,—यज्ञव्याख्यानं । २५, २६, २७ प्रपाठके,—गृह्यविवरणं ।

---

## No. 1686. आपस्तम्बसूत्रं, त्रिंशप्रपाठकादिद्वात्रिंशप्रपाठकपर्य्यन्तं ।

Substance, country-made paper, 10½ × 5½ inches. Folia, 30. Lines, 9 on a page. Extent, 675 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

*A'pastamba Sútra.* The Kalpa Sútra of A'pastamba, The MS. comprises chapters, 30 to 32. Dr. Burnell says, the work comprises only 30 chapters. See ante Vol. III, p. 194.

Beginning. श्रीविघ्नहर्त्रे नमः ॥ हरिः ॐ ॥ विहारयोगान् व्याख्यास्यामो यावदायामं प्रमाणं तदर्धमभ्यस्यापरस्मिन् तृतीये षड्भागोने लक्षणं करोति ।

End. इति तिलोदकप्रदानमग्नौकरणमनुदेशनञ्च यथार्थमूहे यथाशक्ति दक्षिणां दद्यात् ॥ १४ ॥

Colophon. इत्यापस्तम्बसूत्रे द्वात्रिंशः प्रपाठकः ॥ समाप्तञ्चापस्तम्बसूत्रं ।

विषयः । अत्र ३० प्रपाठकादि ३२ प्रपाठकपर्य्यन्तमस्ति । तत्र ३० प्रपाठके, विहारयोगव्याख्यानं । ३१ प्रपाठके, पैतृमेधिकदहनविवरणं । ३२शे,—उत्तरपैतृमेधिकव्याख्यानं ॥

---

## No. 1687. शिवाष्टमूर्त्तितत्त्वप्रकाशः ।

Substance, country-made paper, 13¼ × 6¾ inches. Folia, 60. Lines, 14—17—18—20 on a page. Extent, 3,840 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

*S'ivásht̤amurti-tattva-prakás'a.* On the eight forms of S'iva and of his identity with Parabrahma. By Rámes'vara, a disciple of Sadás'ivendra Sarasvatí, who was a disciple of Gopalendra Sarasvatí.

Beginning. श्रीगणेशाय । यस्या देव्या वश्याः सर्व्वे सर्व्वा विद्या यस्या आत्मा ।
या खल्वास्ते शम्भोरङ्के तां वै वन्दे विश्वाकारां ॥ १ ॥
यस्य ह्याज्ञां नातिक्रान्ताः सर्व्वे देवा विश्वेशानाः ।
यो नो ह्यात्मा कर्त्ता शम्भुस्तेषामीशस्तं वै वन्दे ॥ २ ॥
यस्य ह्यबोधात् सकला विपत्तयो यो मायया भ्रामयतीह सर्व्वतः ।
व्याप्तञ्च येनेदमदोऽष्टमूर्त्तिभिर्वन्दे तमीशं शिवया समन्वितं ॥ ३ ॥
नास्त्यष्टमूर्त्तेरतिरिक्तमीशितुर्यस्यापि किञ्चित् श्रुतितोऽपि युक्तितः ।

क्षेत्रज्ञखं वाय्वनलेन्दुभास्करा भूमिर्जलं ये च तमाश्रये शिवं ॥ ४ ॥
सदा शिवेन्द्रवाण्याख्यं गुरुं हृदिमेश्वरं तथा ।
नत्वाष्टमूर्त्तितत्त्वं हि शिवस्याहं प्रकाशये ॥ ५ ॥

End. यः पञ्चमूर्त्तिः प्रणवात्मसर्व्वगः पञ्चाचरेशः सकलोऽपि निष्कलः ।
तस्मादयुग्मे हि समर्पयन्विभो रामेश्वरो दीपमनन्यभावगः ॥

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीपूज्यपादश्रीगोपालेन्द्रसरस्वतीशिष्यश्रीसदा-
शिवेन्द्रसरस्वतीशिवयोगीन्द्रशिष्यस्य रामेश्वरस्य कृतौ शिवाष्टमूर्त्तितत्त्वप्रकाशः ॥

विषयः । शिवस्य चित्याद्यष्टमूर्त्तीणां जडशक्तिरूपमायात्वकथनं । शिवस्य परब्रह्मत्वप्रति-
पादनञ्च ॥

---

## No. 1688. रत्नत्रयपरीक्षा सटीका ।

Substance, country-made paper, 13 × 5 inches. Folia, 9. Lines, 12 on a page. Extent, 580 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*Ratna-traya-paríkshá saṭíká.* The supreme divinity and unity of the "three jewels" Vishṇu, Brahmá and S'iva. By Apya Díkshita, son of Rañgarája Adhvarindra.

Beginning. श्रीगणेशाय नमः । सर्व्वज्ञतादिकं शम्भोर्यस्या रूपं विदुर्बुधाः ।
तां नमामि शिवां सत्यज्ञानानन्दस्वरूपिणीं ॥ १ ॥
अथ रत्नत्रयपरीक्षाख्यामष्टश्लोकीं संक्षेपेण व्याकुर्म्महे ।
नित्यं निर्द्दोषगन्धं निरतिशय सुखं ब्रह्मचैतन्यमेकं
धर्मो धर्म्मीति रूपद्वयमयति पृथक् भूयमायावशेन ।
धर्म्मस्तत्रानुभूतिः सकलविषयिणी सर्व्वकार्य्यानुकूला-
शक्तिश्चेच्छादिरूपा भवति गुणगणस्याश्रयस्त्वेक एव ॥ १ ॥
नित्यं कालत्रयाबाध्यं दोषगन्धेनापि रहितं निरतिशयसुखात्मकं । अद्वितीय-
मेकं ब्रह्मचैतन्यं मायया कल्पितभेदं सद्धर्म्मधर्म्मिभावं प्राप्नोति ।

End. आमथ्य भाष्यदुग्धाब्धिमाप्तं रत्नत्रयं ततः ।
शम्भुर्गौरी हरिश्चेति तच्च सम्यक् परीक्षितं ।

Colophon. इति श्रीमत् भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य्यविश्वजिद्याजिश्रीरङ्ग-
राजाध्वरीन्द्रसूनोरप्पदीक्षितकृतस्य कृतौ रत्नत्रयपरीक्षा समाप्ता ॥

विषयः । शम्भुगौरीहरिरूपस्य रत्नत्रयस्य परब्रह्मैकरूपताप्रतिपादनं ।

---

## No. 1689. तिथिनिर्णयः ।

Substance, country-made paper, 10¼ × 5½ inches. Folia, 30. Lines, 7—12—13 on a page. Extent, 870 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*Tithi-nirṇaya.* A dissertation on the lunar days and the religious duties appertaining thereto. By Bhaṭṭoji Díkshita, son of Lakshmidhara Súri.

Beginning. श्रीगणेशाय नमः । चैत्रशुक्लप्रतिपदि वत्सरारम्भः । तत्रौदयिकी तिथिर्ग्राह्या ।
चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तदा सूर्योदये सति ॥ इति हेमाद्रौ ब्राह्मोक्तेः ।

End. अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भवेति दिक् ॥ इति होलिकानिर्णयः ॥

Colophon. इति श्रीपदवाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन विरचितस्तिथिनिर्णयः समाप्तः ॥

विषयः । संवत्सरे पञ्चदशतिथिकृत्यनिरूपणं, तिथिद्वैधशङ्कानिराकरणादिकञ्च ॥

---

## No. 1690. श्राद्धकर्मविधिः ।

Substance, country-made paper, 12 × 6 inches. Folia, 9. Lines, 3—12 on a page. Extent, 2,750 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*S'ráddha-karma-vidhi.* Directions for performing S'ráddhas. Anonymous.

Beginning. श्रीरामाय नमः । श्रीशोऽनीशोऽपि योऽसौ विभुरपि सुगतिर्योऽगतीनां नराणां
यो सद्धेतुर्मुनीनामपि रुचिसुधियां बोधको निश्चितोऽपि ।
योऽसूतेऽपि प्रसूते फलमपि विमलं चापवर्गादि मोऽव्यात्
कर्त्ता कर्म्मापि चास्मत्कृतिरपि करणं कारणं कोऽपि कृष्णः ।

End. तस्य पित्रादिकस्य यद्वस्तु कदलीफलाम्रफलाज्यदधिसन्धिततण्डुलनिर्मितशष्कुल्यादिरूपं अत्र पुरा इह लोके जीवनावस्थायां मनस्यभीष्टं मनोऽभिलषितं ।

Colophon. इति श्राद्धकर्मविधिः समाप्तः ।

विषयः । श्राद्धविधिः ।

---

## No. 1691. तत्त्वसङ्ग्रहः, वा वेदान्ततत्त्वत्रयनिरूपणं ।

Substance, country-made paper, $12\frac{1}{2} \times 4\frac{3}{4}$ inches. Folia, 23. Lines, 6—10—11—13 on a page. Extent, 648 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Tattva-sañgraha* alias *Vedánta-tattra-traya-nirúpana.* An enquiry into the creator, the created, and the obstruction to the union of the two. By Náráyaṇa Muni. Hall's "Contributions," p. 163.

Beginning. पशूनां पतिमीशानं नत्वा सोमं सदाश्रयं ।
रामेश्वरशिवप्रीत्यै कुरुते तत्त्वसङ्ग्रहं ॥
अथ तत्त्वत्रयं श्रुत्यागमपुराणप्रसिद्धं सङ्गृह्यते तत्र पतिः पशुः पाशश्चेति त्रीणि तत्त्वानि प्रसिद्धानि तत्र च तत्त्वत्रयस्य सम्यग्बोधो मोक्षोपाय इत्यपि प्रसिद्धं ॥

End. सर्व्वजनानुजिघृक्षया संस्कृतभाषयास्माभी रचितोऽयं प्रबन्धः ।

Colophon. इति श्रीपरिव्राजकाचार्य्यश्रीमन्नारायणमुनिकृततत्त्वत्रये ईश्वरप्रकरणमस्तु शुभं॥

विषयः । मोक्षसाधनज्ञानविषयतत्त्वत्रयनिरूपणं । तत्त्वत्रयन्तु पतितत्त्वपशुतत्त्वपाश-तत्त्वरूपं ॥

---

## No. 1692. वाक्यवादः वाक्यदीपिकाख्यटीकासहितः ।

Substance, country-made paper, $14 \times 7$ inches. Folia, 16. Lines, 15—16—17—18 on a page. Extent, 960 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old Prose. Incorrect.

*Vákya-váda,* together with a commentary entitled *Vákya-dípiká.* A dissertation on Syntax, or the relation of the several elements of a sentence. By Hariyas'a Mis'ra. A rare work, but of great repute.

Beginning. टी॰ । ॐ स्वस्ति श्रीगणेशाय नमः । सुप्तिङन्तचयो वाक्यमिति प्रमाणानुसारेण सुबन्तचयत्वे सति तिङन्तचयत्वस्य मिलितस्य प्रत्येकं सुबन्तचयत्वादेर्वाक्यस्य लक्षणत्वे परस्परमव्याप्तिः पदसमूहत्वमित्यस्य गौरश्वः पुरुषो हस्तीत्यादावतिव्याप्तिरित्याशयेन शङ्कते अथेति ।

मू॰ । ॐ अथ किमिदं वाक्यं नाम एकतिङ्वाक्यमिति भाष्यात् एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमूहो वाक्यमिति वैयाकरणाः ।

End. मू॰। परन्तु पदार्थतावच्छेदकरूपविशेषणस्य क्वचिदपि न परामर्शः।

Colophon. इति वाक्यवादः समाप्तः।

टी॰। पटोलपत्रमित्यादौ पटोलादिसम्बन्धिनि लक्षणास्वीकारे पटोलादेः पदार्थतावच्छेदकत्वेऽपि तत्परामर्शानुपपत्तिरिति भावः।

स्ववत्त्वक्षणत्वव्यापकाविद्यातत्प्रयुक्तदृश्यांश्रयकालपूर्व्वत्वाभावकशुद्धविज्ञाननिरस्तविपरीतभावनीभूतश्रीमद्धरियशोमिश्रनिर्म्मितवाक्यदीपिका समाप्तिमगमत्॥

विषयः। क्रियासमभिव्याहृतस्यैव पदसमूहस्य वाक्यतावादिवैयाकरणमते वाक्यलक्षणं क्रियाविनिर्मुक्तस्यापि पदसमूहस्य वाक्यतावादिनैयायिकमतदूषणञ्च॥

---

## No. 1693. भगवद्गीताटीका गीतासहिता।

Substance, country-made paper, 12¼ × 5¾ inches. Folia, 100. Lines, 7—9—10 on a page. Extent, 2,000 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

*Bhagavad-gítá-ṭíká.* A commentary on the Bhagavadgítá. By Hariyas'a Mis'ra. It is commonly called Hariyaṣí.

Beginning. श्रीगणेशाय नमः। गुरुं नत्वा कुर्व्वे सततमनन्तब्रह्मविषयं
सुगीताप्राकट्यं परिमितनिजानन्दजनकं।
सुनिःक्लिष्टाहं वै विविधमतसारज्ञमधुसू-
दनीतो बोधार्थं अलसमनसां श्रं हरियशाः।

End. चिदानन्दघनं नत्वा पूर्णेन्दुसुन्दराननं।
शुक्लकृष्णद्वयं हि कृष्णं तत्त्वं परं मतं॥

विषयः। भगवद्गीताव्याख्यानं।

---

## No. 1694. मुहूर्त्तरत्नाकरं।

Substance, country-made paper, 13¼ × 5¾ inches. Folia, 84. Lines, 12 on a page. Extent, 2,500 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*Muhúrta-ratnákara.* An epitome of astrology relating to the performance of civil rites. By Ís'varadása.

Beginning. ओं नमः सरस्वत्यै । अथ मुहूर्त्तरत्नाकरं लिख्यते । ओं नमः शिवाय सशिवाय सदाशिवाय परमशिवाय ॥

ओं सोमसौम्यबृहगुभास्करभौमा देवपूज्यरविजावपि नित्यं ।
यं नमन्ति निजवाञ्छितसिद्धौ सिद्धिदो भवतु मे स गिरीशः ॥

End. असदप्यपरपद्यं सन्त एव प्रशंसन्ति स्वतकरकराणां तर्पयन्ताशचिपातः(?) ।
विमल अपि च पद्ये दूषिते दुष्टचित्तैर्विषधररसनायां कालकूटः सदैव ॥

Colophon. इति श्रीमज्ज्योतिषरायात्मजेश्वरदासविरचितो मुहूर्त्तरत्नाभिधो व्यवहारग्रन्थः समाप्तः ॥

विषयः । अत्र १ मे,—संवत्सरनिरूपणं । २,—तिथिनिरूपणं । ३,—वारनिरूपणं । ४,—नक्षत्रनिरूपणं । ५,—योगनिरूपणं । ६,—करणनिरूपणं । ७,—मुहूर्त्तनिरूपणं । ८,—उपग्रहनिरूपणं । ९,—सङ्क्रान्तिनिरूपणं । १०,—ग्रहाणां गोचरनिरूपणं । ११,—चन्द्रताराबलनिरूपणं । १२,—लग्ननिरूपणं । १३,—संस्कारनिरूपणं । १४,—समयशुद्धिनिरूपणं । १५,—लग्नादीनां दोषनिरूपणं । १६,—ब्राह्मणक्षत्रियविशां उपनयनकालनिरूपणं । १७,—समावर्त्तननिरूपणं । १८,—क्षुरिकाबन्धनं । १९,—विवाहकालनिरूपणं । २०,—चूडाकर्मकालनिरूपणं ; द्विरागमनकालनिरूपणञ्च । २१,—राज्याभिषेककालनिरूपणं । २२,—यात्राकालनिरूपणं । २३,—वास्तुनियमः । २४,—गृहप्रवेशनियमः । २५,—प्रतिष्ठाकालादिनिरूपणं । २६,—ग्रन्थकर्तृस्थानगोत्रादिवर्णनं ।

---

## No. 1695. शाब्दबोधप्रक्रिया ।

Substance, country-made paper, $10\frac{1}{2} \times 5$ inches. Folia, 20. Lines, 10—11—12 on a page. Extent, 580 s'lokas. Character, Nágara. Date. Sm. 1910. Place of deposit, Government of India. Appearance, old. Prose. Incorrect.

*S'ábdabodha-prakriyá.* The philosophy of grammar, or the logical relations of the several members of a sentence. By Rámakrishṇa.

Beginning. श्रीरामं सानुजं नत्वा रामकृष्णवशम्बदः ।
प्रक्रियां शाब्दबोधस्य कुर्व्वे मत्यनुसारतः ॥

End. एतदधिकरणको मत्स्वामिको विनियोगानुकूलो व्यापारः देवदत्ताभिन्नाश्रयवृत्तिः इति सप्तमी ।

Colophon. समाप्तिं गता शाब्दबोधप्रक्रिया ॥
विषयः । आख्यातार्थलड़ाद्यर्थकारकविभक्त्यर्थानां अन्वयबोधरीतिप्रदर्शनं ॥

---

## No. 1696. शान्तिरसनाटकं, वा द्वादशमहावाक्यसिद्धान्तः ।

Substance, country-made paper, $11\frac{3}{4}$ × 6 inches. Folia, 29. Lines, 8—12 on a page. Extent, 463 s'lokas. Character, Nágara. Date, SM. 1889. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*S'ántirasa-náṭaka*, alias *Dvádas'a-mahávákya-siddhánta.*

Explanations and dissertations on the twelve great maxims of the Upanishads on which the Vedánta doctrine is founded. By Vaikuṇṭha Puri. Hall's 'Contributions', p. 205.

Beginning. ओं अथ द्वादशमहावाक्यसिद्धान्तो लिख्यते । ओं नमः त्रिपुरसुन्दर्य्यै ।
ओं यदज्ञानप्रभावेण दृश्यते सकलं जगत् ।
यज्ज्ञानाल्लयमाप्नोति तस्मै ज्ञानात्मने नमः ॥
ओं वैकुण्ठपुरी परमहंसपरिव्राजकाचार्य्यः सङ्क्षेपतो वेदान्तसूत्रमहावाक्यार्थं प्रकटीकरोति ॥ प्रज्ञारहितसन्यासनिमित्तं तदुपकारहेतोर्वार्त्तिकशास्त्रतदर्थ-ग्रथितं शान्तिरसनाटकसञ्ज्ञकं निरूपयति ।

End. सङ्क्षेपाद् ब्रह्मस्वरूपनिरूपणवेदान्तप्रकरणेन ।

Colophon. इत्यथर्व्ववेदवाक्यब्रह्मशब्दनिर्णयो नाम द्वादशः सिद्धान्तः ॥ १२ ॥ इति द्वादश-महावाक्यः समाप्तः ॥

विषयः । परमहंसधर्म्मान्तर्गतब्रह्मविचारसाधनीभूतानां ऋग्यजुःसामाथर्व्ववेदान्तर्गत-प्रज्ञानमानन्दो ब्रह्मेत्यादिद्वादशमहावाक्यानां अर्थप्रकटीकरणं ॥

---

## No. 1697. यशवन्तभास्करः ।

Substance, country-made paper, 14 × $10\frac{1}{2}$ inches. Folia, 63. Lines, 5—18 on a page. Extent, 2,728 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose and verse. Incorrect.

*Yasavanta-bháskara.* A treatise on civil astronomy. By Bháskara, son of Ápájí Bhaṭṭa; compiled under the auspices of Prince Yasavanta Siñha, son of Mahárája Indramuni. Its subjects are : 1, Lunar months ; 2, Lunar days and religious duties enjoined on those days ; 3, Times meet for the performance of I'shṭi rites ; 4, I'shṭi rites ; 5, Religious calendar ; 6, calculation of eclipses ; 7, propriety of religious initiation during eclipses ; 8, religious observances during eclipses ; 9, expiations for eclipses.

Beginning. श्रीपुण्डरीनाथाय नमः। नित्यं गोकुलकेलिकौतुकजुषामुल्लासनावासभूः
सौभाग्यं सुमनोजनस्य विनतास्तूनुस्फुरद्वाहकः।
गीर्श्राणारितमोविदारणपटुर्ब्रह्माण्डमुल्लासयन्
पद्मानन्दविनोददानचतुरः पायादपायाद्धरिः॥

End. वन्दे तखण्डन्टपमण्डलमौलिमालाचञ्चत्किरीटतटरत्नमरीचिदीपैः।
नीराजितानुदिनसुन्दरपादपद्मः चौणीतले विजयते यशवन्तदेवः॥ १॥
त्र्यम्बकेश्वरपुरीकृतवासादग्निहोत्रिकुलनीरधिचन्द्रात्।
पुण्यपूर्णपुरुषोत्तमभट्टादुद्बभूव सुकृती हरिभट्टः॥ २॥
वेदवाक्यनिचयावचयेन प्रेक्षितो विधिरिवेह बुधौघैः।
लोकगीतविमलायतकीर्त्तिः सोऽपि सज्जनमणिर्जयति स्म॥ ३॥
तस्मादुद्भूतकीर्त्तिः कृतसुकृतभरान् मन्त्रतन्त्रः स्वतन्त्रः
साधूनामग्रगण्यो गदद्लनविधौ मानवानां शरण्यः।
काशीक्षेत्राधिवासी हतकठिनतरारातिषड्वर्गदम्भः
श्रीमानापाजिभट्टः सुरयजनरतः शुद्धधीराविरासीत्॥ ४॥
तत्सूनुना भास्करशर्म्मणास्मिन्नादेशतः श्रीयशवन्तभूपतेः।
विनिर्मिते श्रीयशवन्तभास्करे समाप्तिमायात् खलु वर्षकृत्यं॥ ५॥

Colophon. इति श्रीमन्महाराजाधिराजश्रीमदिन्द्रमणिन्टपतिनन्दनश्रीमत्कुमारयशवन्तसिंह-प्रेरितश्रीमत्काश्यपान्वयसम्भवाग्निहोत्रिकुलतिलकायमानश्रीमदापाजिभट्टसूनु-भास्करविरचिते यशवन्तभास्करे संवत्सरकृत्यप्रकाशः समाप्तोऽयं ग्रन्थः।

विषयः। अत्र प्रथमं चान्द्रादिमासनिर्णयः। ततः प्रतिपदादिपञ्चदशतिथिकृत्यं। तत इष्टिकालनिर्णयः। तत इष्टयः। ततः चैत्रादिद्वादशमासकृत्यं। ततो ग्रहण-निर्णयः। ततो ग्रहणे दीक्षाविधिः। ततो ग्रहणपुरश्चरणविधिः। ततो ग्रहण-शान्तिः।

## No. 1698. चण्डिकाभाष्यं, वा शान्तनवीचण्डीटीका ।

Substance, country-made paper, 13 × 6 inches. Folia, 112. Lines, 7—14 on a page. Extent, 4,675 s'lokas. Character Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Chandiká-bháshya* alias *S'ántanaví-chandiṭiká.* A commentary on the Chandí section of the Márkandeya Purána. By Santanu Chakravartí, son of Uddharana of the race of Rájádhirája Tomara.

Beginning. ब्रह्मा यस्मै हरिर्यस्मै रुद्रो यस्मै यथाक्रमः ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै नमो नमः ॥ १ ॥
अव्युत्पन्नमुखान्धकूपपतिता गावो मुनेः खिन्दते
ताः प्रोद्धर्त्तुमहो यतध्वमभितः स्वस्वार्थवत्सोत्सुकाः ।
सूत्रैः पाणिनिसम्भृतैरतितरामाकृष्यमाणाः पुन-
स्ता वः कामदुघा भवन्त्यभि तमस्तोमद्विषः सत्विषः ॥ २ ॥
ऐं श्रीं ह्रीं पदभावितं जगदद‌ः स्रष्टुं स्वयं रक्षितुं
संहर्त्तुं समये क्षमा++मयीं ब्राह्मीं श्रियं चण्डिकां ।
आराध्यादिमशक्तिमार्त्तिदलनीं श्रीतोमरः शन्तनु-
र्मार्कण्डेयपुराणसिद्धमहिमां व्याख्याय विख्यायते ॥ ३ ॥
मार्कण्डेयपुराणोक्तदेवीमाहात्म्यमद्भुतं ।
अल्पाक्षरमनल्पार्थमपपाठपराङ्मुखं ॥ ४ ॥
शुभंयुः शन्तनुः शंयुः सत्कीर्त्तिस्तोमरान्वयः ।
व्याकरोति पराकृत्य कुव्याख्यानपरम्परां ॥ ५ ॥

End. यावद्भूमिम्हदि त्वरद्द्युतिगणश्रेणिस्फुरन्मूर्द्धसु-
स्फारस्फारपयोधिकाननगिरिव्रातोल्लसत् सत्फलं ।
धत्ते शेषमिवाहिमद्भुतवचाः स्वस्वीकृताशेषगी-
स्तावच्छान्तनवी तदावयतु++++ श्रीचण्डिका ॥ ३ ॥

Colophon. इति श्रीराजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजश्रीशन्तनुचक्रवर्त्तिविरचितायां शान्तनव्यां चण्डीटीकायां राजवैश्यवरप्रदानविध्युपलक्षितस्त्रयोदशोऽध्यायः ॥१३॥
समाप्तश्चेदं चण्डिकाभाष्यं ।

विषयः । चण्डीव्याख्यानं ।

## No. 1699. स्मृतिसुधाकरः ।

Substance, country-made paper, 12½ × 5½ inches. Folia, 271. Lines, 11 on a page. Extent, 5,400 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*Smṛiti-sudhákara.* A miscellaneous compilation on Smṛiti rites, in two parts. By Odásañkara. Contents: 1st Part, creation. Praise of deities enjoined in the Puráṇas and the Smṛitis. Vice condemned. Praises of Bráhmaṇas and kings. Marriage. Qualities of bridegrooms and brides. Bráhma and other marriages. The great Dvípas or Continents. The nine Varshas or countries. Áryavarta defined. Duration of lunar days and months. Bathing and putting on sectarial marks before performing a rite. Night and duties appertaining to it. Fasts. Duties appropriate on the anniversaries of birth-days. Durations of Manvantaras, Yugas, and Lunar days. Mensual fasts. Memorial fasts. Second Part. Religious calendar.

Beginning. संसारतिमिरच्छेदे सत्परिच्छेदगोचरे ।
आविरास्तां मनसि मे महसी(?)खगगोचरे ॥
अन्तस्तापविमोचनमतिरोचनमसम्मोचनं पुंसां ।
नीलेन्दीवरलोचनमस्तु परं वस्तु नः सिद्ध्यै ॥

End. इति स्मृतिसुधाकरे फाल्गुने विंशत्कलाप्रकाशः ॥ २० ॥ समाप्तश्च फाल्गुनापरपक्षः । समाप्तश्च फाल्गुनो मासः । ऋतुरपि शिशिराभिधः पूर्णः समाप्तञ्च तृतीयचातुर्मास्यं ।

Colophon. इति श्रीओदाशङ्करकृतः स्मृतिसुधाकरः समाप्तः ।

विषयः । अत्र सृष्टिनिरूपणं । ततः पुराणस्मृतिधर्म्मादिप्रशंसा । ततो अधर्म्मनिन्दा । ततो ब्राह्मणप्रशंसा । ततो राजप्रशंसा । ततो विवाहविधिः । ततो वरकन्यापरीक्षाविधिः । ततो ब्राह्मविवाहादिलक्षणं । ततः प्लक्षद्वीपादिनवद्वीपवर्णनं । ततो नववर्षवर्णनं । तत आर्य्यावर्त्तदेशनिरूपणं । ततः चान्द्रमासाधिमासाहोरात्रादिनिरूपणं । ततो धर्मकर्मणि स्नानतिलकादीनां कर्त्तव्यताकथनं । ततो नक्तपदार्थनिरूपणं । ततो नक्तव्रतनियमाः । तत उपवासविधिः । ततः पारणदिननियमाः । ततो जन्मदिनकृत्यं । ततो मन्वन्तरायुगाद्यादिनिरूपणं । ततः तिथिद्वैधव्यवस्था । संवत्सरैकनक्तव्रतं । ततो मासोपवासव्रतं । इति पूर्व्वखण्डः । उत्तरखण्डे तु चैत्रादिद्वादशमासेषु पञ्चदशतिथिकृत्यनिरूपणं ।

## No. 1700. पञ्चकल्पटीका मूलसहिता ।

Substance, country-made paper, 14¾ × 6½ inches. Folia, 402. Lines, 10—11—12 on a page. Extent, 10,854 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose and verse. Incorrect.

*Pancha-kalpa.* With commentary. A treatise on religious duties, moral duties, political duties, and emancipatory duties, or S'ánti Yoga. Compiled in the kingdom of Káshmira during the reign, and under the auspices, of Ranabir Sinha.

Beginning. टी० । ॐ यद्देवासुरमौलिसन्मणिविभाज्वालाक्तमन्तसमो-
भारध्वंसकरं सदा नतियुजां निःशेषपापापहं ।
सर्व्वार्थैकनिधानमम्बुजभवा श्रीविष्णुना शम्भुना
सिद्धौ ध्यातमदोऽस्तु वो गणपतेर्भूत्यै पदाब्जद्वयं ॥

मू० । ब्रह्मक्षत्रविशो द्विजा इति वृषलेषां क्रमादध्ययः
शस्तास्था पशुपालताथ यजनाधीते समे चान्त्यगा(?) ।
सेवाध्यापनयाजनप्रतिग्रहक्षत्त्राणकृष्यादयः
शिल्पं वृत्तिरनन्तरापदि दयाद्यो वर्ग उक्तः समः ॥ १ ॥

End. मू० । प्रवृत्तं तत् सर्व्वं भवति भविनां सिद्धिघटनं
समापत्त्या यासां न खलु गणतां यात्यमरपः ।
निवृत्तं तत्किञ्चिद् भवति सुकृतां यत् करुणया-
ऽमूर्त्तिर्द्देवोऽसौ जयति भगवान् भूतिविशदः ॥

टी० । रणवीरमहाराजसौराज्योत्सवशालिषु ।
काश्मीरेषु निबद्धेयं पञ्चकल्पास्तु सन्मुदे ॥

Colophon. इति पञ्चकल्प्यां योगानुशासनाख्यो हरिचन्दनकल्पः पञ्चमः ॥ ५ ॥

विषयः । पञ्चकल्पीव्याख्यानं । पञ्चकल्प्यान्तु पञ्च कल्पाः सन्ति । तत्र १म–कल्पे, सदाचार-कथनं । २य–कल्पे, नीतिकथनं । ३य–कल्पे, न्यायकथनं, न्यायस्तु पुरीस्थापन-सामदानादिसाधनोपन्यासादिरूपो राजधर्म्मविशेषः । ४र्थ–५म–कल्पे, शान्तियोगकथनं ।

## No. 1701. श्राद्धकाण्डं ।

Substance, country-made paper, 10½ × 5¾ inches. Folia, 22. Lines, 13 on a page. Extent, 740 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*S'ráddha-káṇḍa.* A dissertation on Sráddhas, or periodical offerings to the manes. By Bhaṭṭojí Díkshita, son of Lakshmídhara Suri.

Beginning. अथ श्राद्धनिरूपणार्थं तृतीयोऽध्याय आरभ्यते, तत्र प्रेतोद्देशेन श्रद्धया द्रव्यत्यागविशेषः श्राद्धं तदाह मूले, मृतानान्तु भवेच्छ्राद्धं ब्राह्मणैर्वेदपारगैः ।

End. तेनैव प्रेरिता यद्दु यद्चरीकृत्य चापलं ।
चं भम्पि तु(?) स एवैनमन्तर्यामी महेश्वरः ॥

Colophon. इति पद्वाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन रचितायां चतुर्विंशतिमुनिमनुव्याख्यायां श्राद्धकाण्डं सम्पूर्णं ।

विषयः । मन्वाद्युक्तप्रमाणप्रदर्शनेन श्राद्धनिरूपणं ।

---

## No. 1702. पदचन्द्रिका, वा अमरकोषव्याख्या ।

Substance, country-made paper, 13½ × 6¾ inches. Folia, 379. Lines, 5—14 on a page. Extent, 15,160 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Padachandriká* alias *Amarakosha-vyákhyá.* A commentary on the Amarakosha. By Ráyamukuṭa.

Beginning. ॐ अध्यास्ते यः सर्व्वं ध्रुव ईश्वर इत्यगोचरो वचसः ।
अहमिति संविद्विषयः पुरुषः स परः पुरातनो जयति ॥
अभीष्टदेवतानमस्कारायुपनीतमदृष्टं हि विघ्नापरनामकसाध्यप्रतिबन्धकाधर्मतिरोधानद्वारा प्रारीप्सितं परिसमापयतीति प्रामाणिकं मतं, अतो निष्प्रत्यूहप्रारीप्सितपरिसमाप्तिहेतुविशिष्टदेवतासङ्कीर्त्तनादिशिष्टादृष्टमुत्पिपादयिषुर्ग्रन्थकारः प्रथमं नमस्कारश्लोकं निबध्नाति । यस्य ज्ञानदयासिन्धोरिति ॥

End. यथा गोधा पुंस्यपि स्त्री पोटा नपुंसकेऽपि स्त्रीत्यादिकमूहनीयं ।

Colophon. इ श्री य क ता मम को पं का पदचन्द्रिकायां लिङ्गादिसङ्ग्रहविवरणं समाप्तं ।

विषयः । अमरकोषव्याख्यानं ।

---

## No. 1703. पाञ्चोलीभगवद्गीताटीका गीतासहिता ।

Substance, country-made paper, 12¼ × 6¼ inches. Folia, 138. Lines, 9—12—14 on a page. Extent, 4,855 s'lokas. Character, Nágara. Date, Sm. 1890. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

*Páñcholi-bhagavadgítá-ṭíká.* A commentary on the *Bhagavadgítá.* Anonymous.

Beginning. सन्तोषञ्च गुरुं वन्दे परं संवित्प्रदायकं ।
शान्तिसिंहासनारूढमानन्दामृतभोगदं ॥

End. उत्तरोत्तरा वृद्धिर्ध्रुवा अव्यभिचारिणी नीतिरिति मे मतिः ।

Colophon. इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सन्न्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

विषयः । भगवद्गीताव्याख्यानं ।

---

## No. 1704. वृहन्नारदपञ्चरात्रं ।

Substance, country-made paper, 12½ × 6¼ inches. Folia, 444. Lines, 11 on a page. Extent, 10,000 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Incorrect.

*Vṛihannárada Pañcharátra.* An enlarged edition of the *Nárada-pañcharátra* of which an edition has been published in the Bibliotheca Indica of the Asiatic Society of Bengal. The Pañcharátras form a class of their own, and are in substance closely allied to the Tantras. They are Vaishṇavite in their character, and relate principally to Vaishṇava rituals, illustrated with tales, stories and descriptive poetry. Their author's names are not given.

Beginning. आसीनमाश्रमे कण्वं तदाश्रमनिवासिनः ।
निःश्रेयसकरं कर्म्म प्रष्टुमारेभिरे मुनिं ॥ १ ॥

End. प्रदास्यति स युष्माभ्यमपवर्गं तपोधनः ।
इत्यध्यायस्त्रयस्त्रिंशत् चर्य्यापादः प्रकीर्त्तितः ॥ २०८ ॥

Colophon. इति श्रीनारदपञ्चरात्रे महोपनिषदि पाञ्चे तन्त्रे चर्य्यापादे समाराधनाङ्गमन्त्रोद्धारो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

विषयः। ग्रन्थोऽयं ज्ञानयोगक्रियाचर्य्याख्यचतुर्भिः पादैर्विभक्तः। तत्र ज्ञानपादे १मे,—स्वाश्रमवासिऋषीन् प्रति कण्वमुनेरुपदेशः। २,—हरेर्मत्स्यादिदशविधमूर्त्त्युत्पत्तिकथनं। ३,—ब्रह्मादिसृष्टिकथनं। ४,—को जीवः संसारी कश्च मुक्त एतद्विवेचनं। ५,—ब्रह्मलक्षणप्राप्त्युपायकथनं। ६,—ब्रह्मणः सर्व्वतः पाणिपादत्वकथनं। ७,—ब्रह्मप्राप्त्युपायस्य ज्ञानस्योत्पत्तिकथनं। ८,—मुक्तिभेदतत्त्वनिर्णयः। ९,—भूगोलवर्णनं। १०,—भूलोकलक्षणं। ११,—पाताललोकवर्णनं। १२,—भुवर्लोकादिविस्तारः। इति ज्ञानपादः समाप्तः॥

योगपादे १मे,—आसनभेदविधिः। २,—नाड़ीस्वरूपकथनं। ३,—प्राणायामलक्षणं। ४,—पञ्चभूतस्थानभेदनिर्णयः। ५,—योगलक्षणं। योगपादः समाप्तः।

क्रियापादे १मे,—विष्णुस्थापनार्थं भूपरीक्षा। २,—ग्राम्यविन्यासः। ३, ४, ५, ६, ७, ८, ९, १०,—विष्णुमन्दिरनिर्म्माणं। ११, १२, १३, १४,—विष्णुप्रतिमाविधिः। १५,—प्रतिमास्थित्यासनभेदाः। १६,—विष्णुमूर्त्तिभेदाः। १७,—दशावतारलक्षणं। १८,—विष्णोः पुनर्मूर्त्तिभेदकथनं। १९,—पूजायां प्रतिमाविशेषस्य उत्तममध्यमाधमत्वनिर्णयः। २०,—प्रतिमामानलक्षणभूषणकथनं। २१,—श्रियादिदेवीलक्षणं। २२,—विष्णुपरिवारदेवतालक्षणं। २३,—पूजोपकरणविधिः। २४,—आचार्य्यलक्षणं। २५,—विष्णुप्रतिष्ठोपकरणं। २६,२७,—अधिवासनविधिः। २८, २९, ३०, ३१,—प्रतिष्ठाविधानं। ३२,—श्रियादिदेवीनां पाणिग्रहणं। ३३,—अक्षमालाप्रतिष्ठा। ३४,—ग्रहार्चास्थापनविधिः। क्रियापदः समाप्तः।

चर्य्यापादे १मे,—विष्ण्वाराधनाधिकारिनिरूपणं। २,—दीक्षाविधिः। ३,—नित्ययागविधिः। ४,—अग्निकार्य्यविधिः। ५,—उत्सवसमाराधनविधिः। ६,—नीराजनविधिः। ७,—आचार्य्याभिषेकविधिः। ८,—स्नपनविधिः। ९,—सहस्रकलसाभिषेकविधिः। १०,—ध्वजारोह विधिः। ११,—महोत्सवविधिः। १२,—विष्ण्वाराधने पुष्पहविर्विधानं। १३,—कर्म्मोपादानेज्यास्वाध्याययोगानां पञ्चानां पञ्चकालविधिः। १४,—उत्तमार्चनयोग्यनक्षत्रादिकथनं। १५,—मासविशेषे मूर्त्तिविशेषार्चनविधानं। १६,—देवद्रव्यापहरणदोषकीर्त्तनं। १७,—जीर्णप्रतिमोद्धारादिविधिः। १८,—प्रायश्चित्तविधिः। १९,—नारायणवलेः प्रायश्चित्तरूपताकथनं। २०,—ब्रह्महत्यादिपापनाशककर्मकथनं। २१,—चर्य्याधिकारिव्यवस्था। २२,—मुद्राविधिः। २३,—मन्त्राद्यर्थवर्णनं। २४,—द्वादशाक्षरमन्त्रकल्पः। २५,—अष्टाक्षरमन्त्रः। २६,—विष्णुगायत्र्यादिमन्त्रोद्धारः। २७,—

मत्स्यादिमूर्त्तिमन्त्रोद्धारः। २८,—अन्नसमयाधिपतिमन्त्रोद्धारः। २९,—श्रियादि-परिवारमन्त्रकल्पनं। ३०,—श्रियादिमन्त्रोद्धारः। ३१,—गणेशोत्पत्तिकथनं। ३२,—महामन्त्रविशेषकथनं। ३३,—समाराधनाङ्गमन्त्रोद्धारः॥

---

## No. 1705. जयसिंहकल्पद्रुमः।

Substance, country-made paper, 13 × 5 inches. Folia, 694. Lines. 9—11 on a page. Extent, 22,869 s'lokas. Character, Nágara. Date, Sm. 1876. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

*Jayasiñha Kalpadruma.* A Smṛiti compilation on the duties, feasts, fasts and observances meet for householders. By Ratnákara, son of S'rídeva Bhaṭṭa, and a Paṇḍita of Benares. The name of the work is due to its patron Jaya Siñha, son of Vishṇu Siñha who ruled in Mathurá. The father of Vishṇu was Kṛishṇa Siñha; grandfather, Ráma Siñha; great grandfather Jaya Siñha, and great-great-grandfather Jagat Siñha. The last was a descendent of Mána Siñha who traced his ancestry to Prithvíràja of the Kurma or Kachvaha race, and was a king of the Matsya-deva. The work, though modern, is of considerable repute, and often quoted.

Beginning. करीन्द्राननं चारुचन्द्रावतंसं स्वगण्डपालीमिलद्भृङ्गमालं।
अपर्णासुतं विघ्नपूगं हरन्तं गणेशं सुरेशं तमाद्यं प्रपद्ये॥
श्रीजानकीशं शरणागतैकदुखापहं श्रीगिरिजाधरञ्च।
नत्वाथ पूज्यौ पितरौ गुरुंश्च श्रीभ्रातरौ सूर्य्यसमानरूपौ॥
— — — — — — — — ।
तद्वंशे वितते महाभटनुते धर्म्मैकसेतुर्महान्
पृथ्वीराज इति प्रसिद्धमहिमा सत्या+नामयणीः।
राजा चक्रधुरन्धरः समभवद् यस्याभवद् गोचरो
वाचां यो मनसोऽथ गोचरतरो विष्णुः कृपावारिधिः॥
तद्वंशे मानसिंहः समभवदतुलः प्रत्यहं दानम+
++दं तान् गजेन्द्रानभिनवतुरगान् याचकेभ्योऽददद् यः।
यशोर्व्वीशाननेकानुदधिजलगतान् खण्डशः खैर्वैलौघैः
कृत्वा साम्राज्यलक्ष्मीं समवहदभितो भारतं मत्स्यदेशे॥

मानसिंहादभूत्तस्माज्जगत्सिंहो महाबलः ।
जगत्सिंहान्महासिंहो जयसिंहस्ततस्ततः ॥

- - - - - - - - - - ।

राजाग्रणीः श्रीजयसिंहपुत्रः श्रीरामसिंहोऽवनिपालपालः ।
कौर्म्मे कुलेऽभूद्विजितारिवर्गः श्रीरामपादाब्जविलग्नचित्तः ॥

- - - - - - - - - - - - - ।

तत् पुत्रः कृष्णसिंहः प्रथितगुणगणः कृष्णवत्सोत्सवो यो
जातः पृथ्व्यां पृथुश्रीररिगणतिमिरध्वंसने भानुरूपः ।
तस्मात् श्रीविष्णुसिंहः क्षयितरिपुगणः पालकः सज्जनानां
राजा राजीवनेत्रः समजनि मथुरा पालिता येन पूर्व्वं ॥
तस्मात् श्रीविष्णुसिंहाख्याद् राजा राजीवलोचनः ।
जातः श्रीजयसिंहोऽसौ क्षीराब्धेरिव चन्द्रमाः ॥

- - - - - - - - - - ।

तेन श्रीजयसिंहेन सर्व्वशास्त्रार्थसंविदा ।
सम्प्रार्थितस्त्रिथैः कृत्यं कुरुतेऽति सुसङ्ग्रहं ॥
रामाङ्घ्रिप्रवणः सुकर्म्मनिरतः शाण्डिल्यगोत्रोद्भवः
काशीस्थद्विजदेवभट्टतनयः सद्यात् सुविद्यान्वितः ।
संलब्धैर्धनसञ्चयैर्बहुविधैः सर्व्वान् क्रतूनाचरन्
तत्प्रीत्यै व्रतकल्पशाखिनममुं निर्म्माति रत्नाकरः ॥

- - - - - - - - - - ।

बहवो हि बुधाः सन्ति तन्निबन्धाः सहस्रशः ।
तथाप्यस्य तु वैदग्ध्यं सुहृद्भिः संविचार्य्यतां ॥
वक्ष्यमाणव्रतेषु कालस्य निमित्तत्वादादौ कालस्वरूपं तन्निर्णयश्च उच्यते ॥

**End.** सर्व्वतोमुखमखं क्रतूत्तमं संविधाय युगवेदिकायुतं ।
देवभट्टजनुषाग्रजन्मना कल्पवृक्षरचना त्वियं कृता ॥
शाके विक्रमपार्थिवस्य शुभदे व्योमर्षिसप्तेन्दुयुग्-
वर्षे शोभनसञ्ज्ञके शिवतिथौ मासे नभस्याख्यके ।
कूर्म्मे श्रीजयसिंहदेवनगरे पुण्येऽम्बिकेशाश्रिते
ग्रन्थः कल्पतरुः समाप्तिमगमत् सज्ज्ञानवित्तप्रदः ॥
रत्नाकरेण जयसिंहसमर्च्चितेन सद्वाक्यरत्ननिवहैः परिसंगृहीतः ।
ग्रन्थोऽर्थदः सफलकल्पमहीरुहाख्यः श्रीजानकीशपदपद्मयुगेऽर्पितोऽयं ॥

ग्रन्थान् बहून् सुविततान् सुचिरं विभाव्य कष्टेन यः कविवरैरधिगम्यतेऽर्थः ।
निर्मत्सरं बुधवराः परितो विचार्य्य ग्रन्थाद्दुरीकुरुत तं हि विना प्रयासं ॥
++पञ्चकल्पतरवः परं श्रुता जयसिंहवर्म्मनृपतेः समानते ।
कथमन्यथा सुरगणोऽम्बिकापुरे +++सदाध्वरमिषात् समाययौ ॥

Colophon. इति श्रीदेवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते श्रीजयसिंहकल्पद्रुमे अष्टादशः स्तवकः । समाप्तश्चायं ग्रन्थः । संवत् १८७६ ।

विषयः । १ प्रथमस्तवके,—कालस्वरूपनिरूपणं । निमेषादिलक्षणं । चान्द्रसावनसौरमानलक्षणादिकथनं । संवत्सरभेदनिरूपणं । अयननिरूपणं । शुद्धमासनिर्णयः । मलमासनिरूपणं । अत्र कर्त्तव्यकृत्यव्यवस्थादिनिरूपणं । क्षयमासादिनिरूपणं । मलमासादौ गयाश्राद्धादिकरणव्यवस्थाकथनं । मलमासाभिधानव्रतविधानकथनं । अन्यविधमलमासव्रतविधानं । सर्व्वत्र प्रयोगकथनं । (एवं परत्र ज्ञेयं ) ।

२ स्तवके,—सङ्क्रान्तिनिरूपणं । तत्र पुण्यकालादिव्यवस्थाकथनं । सङ्क्रान्तिकृत्यनिरूपणं । सङ्क्रान्तिविशेषे दानकथनं । तिथिशब्दार्थनिर्णयः । सामान्यतः सर्व्वतिथिनिरूपणं । एकभक्तकालनिर्णयः । नक्तव्रतकालनिरूपणादिकं । अयाचितव्रतनिर्णयः । दानहोमादिकालनिर्णयः । सामान्यतो व्रतप्रशंसाकीर्त्तनं । तत्र अधिकारिधर्म्मनिरूपणं । द्विराचमननिमित्तक्रियानिर्णयः । व्रतारम्भकालव्यवस्था । दानविभागनिरूपणं । नवरत्ननिरूपणं । पञ्चगव्य-पञ्चपल्लव-सप्तधान्य-सप्तधातु-सर्व्वौषधि-त्रिमधुप्रभृतिनिरूपणं । यक्षकर्दमादिलक्षणं । विविधधूपनिर्म्माणप्रकारकीर्त्तनं । व्रते सूतकादिव्यवस्थाकथनञ्च ।

३ये स्तवके,—प्रतिपन्निरूपणं । तत्र प्रतिपदो ध्यानकथनं । संवत्सरारम्भविधिकथनं। तत्र प्रयोगकथनञ्च । एवं परत्र । तिलकव्रतविधानकथनं । आरोग्यव्रतविधिकथनं । विद्याव्रतविधिः । ज्यैष्ठशुक्लप्रतिपदि करवीरव्रतविधानं । आश्विनशुक्लप्रतिपदि अशोकव्रतविधानं । तत्र नवरात्रव्रतारम्भकथनं । तत्कालनिरूपणादिकं । शरद्वसन्तयोः तुल्य एव दुर्गोत्सवः कार्य्य इति व्यवस्थापनं । तन्त्रशास्त्रस्य श्रुतिमूलकत्वसंस्थापनं । कलसस्थापनविधिकथनं । दुर्गोत्सवे पूजायाः प्राधान्यनिरूपणं । प्रतिमापरिमाणादिनिरूपणं । मूर्त्तिस्थापनायां दिङ्निरूपणं । प्रतिमागुणदोषनिरूपणं । पूजाविधिकथनं । ऋग्वेदिनां कलसस्थापनविधिः । कात्यायनानां कलसस्थापनविधिः । वलिदानविधानकथनं । नवरात्रे सूतकादिनिर्णयः । षष्ठ्यादिकृत्यनिरूपणं । विजयप्राप्तिकामेन लोहाभिसारिककर्म्मकर्त्तव्यताविधानं । राजचिह्नपूजनविधिकथनं । नवरात्रपारणादिनिर्णयः । दशमीकृत्यविधिः । विजयप्रस्थानोत्सवविधानकीर्त्तनञ्च ।

विषयः। ४ र्थे स्तवके,—कार्त्तिकशुक्लप्रतिपदि द्यूतविधिकथनं। दीपदानविधिः। मार्गपालीपूजाविधिः। गोपूजाविधानं। गोवर्द्धनपूजाविधानं। मार्गशीर्षशुक्लप्रतिपदि धन्यव्रतविधानं। सामान्यतो द्वितीयाव्यवस्थानिरूपणं। चैत्रशुक्लद्वितीयाया-मुमापूजाविधिरग्निपूजाविधानञ्च। बलीन्दुद्वितीयाव्रतकथनं। नेत्रव्रतविधानं। ज्यैष्ठशुक्लद्वितीयायां कल्किजयन्तीव्रतविधानं। आषाढ़शुक्लद्वितीयायां रथयात्रा-विधिकथनं। श्रावणकृष्णद्वितीयायामशून्यशयनव्रतविधानं। कार्त्तिकशुक्लद्विती-यायां यमद्वितीयाविधानकथनं। यमद्वितीयाव्रतविधानञ्च। मार्गशुक्लद्वितीयायां पितृपूजनविधिकथनं। पौषशुक्लद्वितीयायामारोग्यव्रतविधानं। वृहस्पतिवार-युक्तायां तस्यां ब्रह्मपूजनविधानं।

५मे स्तवके,—सामान्यतः तृतीयाव्यवस्थानिरूपणं। चैत्रशुक्लतृतीयायां दोलो-त्सवकथनं। तस्यामेव गौरीव्रतविधानकथनं। सौभाग्यशयनव्रतविधानं। मन्वा-दिश्राद्धविधानप्रसङ्गेन मन्वादिनिरूपणं। वैशाखशुक्लतृतीयायां युगाद्यानिमित्तक-श्राद्धविधानं। अक्षयतृतीयाव्रतविधानं। अन्यविधाक्षयतृतीयाव्रतविधिकथनञ्च। ज्यैष्ठशुक्लतृतीयायां रम्भाव्रतविधानं। समुद्रस्नानविधिः। श्रावणतृतीयायां विष्णु-पूजनविधिकथनं। श्रावणशुक्लतृतीयायां स्वर्णगौरीव्रतविधानं। भाद्रकृष्णतृती-यायां विशालाक्षीयात्राविधिकीर्त्तनं। तत्र शुक्लायां हरितालिकाव्रतविधानकथनं। हरिकालिकाव्रतविधानं। हस्तगौरीव्रतविधानं। कोटीश्वरव्रतविधिः। मार्ग-शीर्षशुक्लतृतीयायां रम्भाव्रतविधानं। पौषशुक्लतृतीयायां गिरिजापूजाविधानं। अवियोगतृतीयाव्रतविधानं। माघशुक्लतृतीययां गुड़लवणदानविधिः।

६ष्ठे स्तवके,—सामान्यतश्चतुर्थीनिरूपणं। चैत्रशुक्लचतुर्थ्यां गणेशपूजनविधिः। तत्र आश्रमव्रतविधानं। चतुर्मूर्त्तिव्रतविधिः। ज्यैष्ठशुक्लचतुर्थ्यां पार्व्वतीपूजनविधिः। श्रावणशुक्लचतुर्थ्यां सङ्कष्टचतुर्थीव्रतविधानं। सङ्कष्टनाशनव्रतविधिः। पार्थिव-गणेशव्रतविधिः। दूर्व्वागणपतिव्रतविधिः। भाद्रचतुर्थ्यां सिद्धिविनायकव्रतवि-धानं। अत्र चन्द्रदर्शननिषेधः। स्यमन्तकोपाख्यानकीर्त्तनञ्च। आश्विनशुक्लचतुर्थ्यां देव्या अभ्यङ्गादिसंस्कारविधानं। कार्त्तिशुक्लचतुर्थ्यां करकचतुर्थीव्रतविधानं। नागव्रतविधिः। मार्गशीर्षशुक्लचतुर्थ्यां कृच्छ्रचतुर्थीव्रतविधानं। वरचतुर्थीव्रत-विधिः। माघशुक्लचतुर्थ्यां वरदाचतुर्थीव्रतविधिः। कुन्दचतुर्थीव्रतविधानञ्च। सोमपूजाविधिकथनं। गणेशचतुर्थीव्रतविधिः। मनोरथविनायकचतुर्थीव्रत-विधिः।

७मे स्तवके,—सामान्यतः पञ्चमीनिरूपणं। चैत्रशुक्लपञ्चम्यां श्रीव्रतविधानं। संव-त्सरं यावत् लक्ष्मीव्रतविधिकथनं। सौभाग्यव्रतविधानं। पृथिवीव्रतविधिः।

विषयः। षष्ठपञ्चमीव्रतविधिः। श्रावणशुक्लपञ्चम्यां नागपूजनविधिः। भाद्रे ऋषिपञ्चमीव्रतविधानं। आश्विनशुक्लपञ्चम्यां शच्या सह नागानां पूजाविधिकीर्त्तनं। उपाङ्गललिताव्रतविधानं। कार्त्तिकशुक्लपञ्चम्यां जयापञ्चमीव्रतविधानं। मार्गशीर्षे नागपञ्चमीव्रतविधानं। माघे श्रीपञ्चमीव्रतविधानं। तत्र पञ्चम्यां रतिमदनपूजाविधिकथनं।

८मे स्तवके,—सामान्यतः षष्ठीनिरूपणं चैत्रशुक्लषष्ठ्यां कुमारव्रतविधानकथनं। वैशाखे पुत्रावाप्तिव्रतविधिकथनं। आषाढ़े स्कन्दषष्ठीविधानं। भाद्रे कपिलाषष्ठीविधानं। तत्र चन्द्रषष्ठीविधानं। कार्त्तिकषष्ठ्यां वह्निपूजनविधिः। मार्गशीर्षषष्ठ्यां स्कन्दार्चनविधिकथनं। चम्पाषष्ठीव्रतविधानं। माघे मन्दारषष्ठीव्रतविधानं। सामान्यतः सप्तमीनिरूपणं। चैत्रशुक्लसप्तम्यां सूर्य्यव्रतविधानं। वैशाखे कमलासप्तमीव्रतविधानं। शर्करासप्तमीव्रतविधानं। आषाढ़शुक्लसप्तम्यां विवस्वत्पूजाविधानं। श्रावणे अव्यङ्गसप्तमीव्रतविधानं। पापनाशनीव्रतविधानं। भाद्रकृष्णसप्तम्यां पुत्रव्रतविधिः। तत्र शुक्लायां फलसप्तमीव्रतविधिकथनं। अनन्तफलसप्तमीव्रतविधिः। शीतलाव्रतविधिः। आश्विनशुक्लसप्तम्यां मूलायोगे सरस्वतीपूजाविधिकथनं। शुभसप्तमीव्रतविधानं। कार्त्तिके शाकसप्तमीव्रतविधानं। मार्गशीर्षे मित्रसप्तमीविधानं। माघकृष्णपक्षे सर्व्वाप्तिसप्तमीव्रतविधानं। तत्र शुक्लायामचलासप्तमीव्रतविधानं। माघस्नानविधिः। रटन्तीस्नानविधिः। प्रयागस्नानविधिकथनादिकं। रथसप्तमीव्रतविधानं। पुत्रसप्तमीव्रतविधिः। जयासप्तमीव्रतविधिः। विजयासप्तमीव्रतं। जयन्तीसप्तमीव्रतं। अपराजितासप्तमीव्रतं। महाजयासप्तमीव्रतं। नन्दासप्तमीव्रतं। भद्रासप्तमीव्रतं। निकुम्भार्कसप्तमीव्रतं। विजयासप्तमीव्रतान्तरविधानं। विशोकसप्तमीव्रतविधानं। त्रिवर्गदासप्तमीविधिः। कामदासप्तमीव्रतविधिः। कल्याणसप्तमीविधिः। द्वादशसप्तमीव्रतविधिः। गोमयादिसप्तमीव्रतविधिः। उदकसप्तमीव्रतविधिः। सौरव्रतविधानं। सप्तम्यां वारनक्षत्रयोगे योगविशेषकथनादिकञ्च।

९मे स्तवके,—सामान्यतः अष्टमीनिरूपणं। सर्व्वासु अष्टमीषु भैरवयात्राविधानं। चैत्रकृष्णाष्टम्यां सन्तानाष्टमीव्रतविधानं। अशोकाष्टमीविधिः। ब्रह्मपुत्रस्नानविधिः। वैशाखाष्टमीव्रतविधानं। ज्यैष्ठाष्टम्यां त्रिलोचनपूजाविधानादिकं। आषाढ़ाष्टमीविधानं। जन्माष्टमीव्रतनिरूपणादिकं। जयन्तीव्रतविधानं। उमामाहेश्वरव्रतविधानं। दुर्व्वाष्टमीव्रतविधानं। ज्येष्ठाव्रतविधानं। महालक्ष्मीव्रतविधानं। आश्विनशुक्लाष्टम्यामुपवासविधानादिकं। अनघाष्टमीव्रतविधिः। कालभैरवपूजाविधिः। अष्टकाश्राद्धविधानं। पौषशुक्लाष्टम्यां महाभद्रविधिकथनं। फाल्गुन-

विषयः। कृष्णाष्टम्यां जानक्या जन्मतिथिनिमित्तकपूजादिविधानं। बुधाष्टमीव्रतविधानं। सोमाष्टमीव्रतविधानकथनं।

१०मे स्तवके,—सामान्यतो नवमीनिरूपणादिकं। श्रीरामनवमीव्रतविधानं। चैत्रशुक्लनवम्यां मातृव्रतविधानं। तस्यां भद्रकालीपूजाविधिः। वैशाखशुक्लनवम्यां चण्डिकापूजाविधानं। ज्यैष्ठे ब्राह्मणीनवमीविधानं। आषाढ़नवम्यामैन्द्रीपूजाविधानं। श्रावणकृष्णनवम्यां कुमारीपूजाविधिः। भाद्रादिषु नवम्यां नन्दापूजाविधानं। महानवमीनिर्णयः। तत्र भद्रकालीपूजाविधानं। रथनवमीव्रतविधानं। शौर्य्यव्रतविधानं। कार्त्तिकशुक्लनवम्यां गोदानादिविधिकथनं। महानन्दानवमीव्रतविधानं। फाल्गुनशुक्लनवम्यामानन्दनवमीव्रतविधानं। नक्षत्रयोगे नवम्यां योगादिनिरूपणञ्च।

११शे स्तवके,—सामान्यतो दशमीनिरूपणं। चैत्रशुक्लदशम्यां यमपूजनविधिः। दशहराविधिः। आषाढ़शुक्लदशम्यां श्राद्धादिविधानं। भाद्रशुक्लदशम्यां दशावतारव्रतविधानं। आश्विने नवरात्रपारणानिर्णयः। विजयादशमीकृत्यविधानं। तत्र राजप्रस्थानविधिकीर्त्तनं। कार्त्तिकशुक्लदशम्यां सार्व्वभौमव्रतविधानं। आशादशमीव्रतविधानं। आरोग्यव्रतविधानं। मार्गशीर्षे पदार्थव्रतविधानं। धर्म्मव्रतचयनिरूपणं। योगादिनिरूपणं।

१२शे स्तवके,—सामान्यत एकादशीनिरूपणं। एकादशीव्रतनिरूपणं। तत्र व्यवस्थाभेदादिनिर्णयः। अनुकल्पविधिः। पारणकालनिरूपणादिकं। सम्पूर्णादिलक्षणादिनिरूपणं। निन्दाभेदव्यवस्थाकथनं। एकादश्यां श्राद्धनिषेधकवचनानां निर्मूलत्वसंस्थापनं। द्वादशीकृत्यनिरूपणं। उन्मीलनीवञ्जुल्यादिव्रतनिरूपणं। पिशाचमोचनैकादशीव्रतविधिः। चैत्रशुक्लैकादश्यां दोलयात्राविधिकीर्त्तनं। दमनकारोपणविधानं। कामदैकादशीव्रतविधिः। वामनैकादशीव्रतविधिः। मोहिनीमाहात्म्यकीर्त्तनं। शयनोत्सवविधानादिकथनं। चातुर्मास्यव्रतविधिः। वासुदेवद्वादशीव्रतविधानं। पुत्रैकादशीव्रतविधिः। बुद्धद्वादशीव्रतविधानं। धरणीव्रतविधानं। पवित्रार्चनविधिः। पवित्रारोपणविधानं। भाद्रपदकृष्णैकादशीकथा। श्रवणैकादश्यां वामनावतारकथनं। तत्पूजादिविधानञ्च। विजयद्वादशीव्रतविधानं। कल्किद्वादशीव्रतविधिः। भाद्रे भगवतः कटिपरिवर्त्तनोत्सवविधिः। आश्विने इन्दिरैकादशीमाहात्म्यकीर्त्तनादिकं। पापाङ्कुशैकादशीमाहात्म्यं। पद्मनाभैकादशीव्रतविधानं। कार्त्तिके रमैकादशीव्रतविधानं। योगेश्वरद्वादशीव्रतविधानं। उत्थानमहोत्सवविधिः। मार्गशीर्षैकादशीकृत्यविधानं। पौषे पुत्रदायिन्येकादशीव्रतनिरूपणं। फाल्गुनैकादशीव्रतनिरूपणं।

विषयः। १३शे,—सामान्यतः द्वादशीनिरूपणं। नृसिंहद्वादशीव्रतनिरूपणं। आमर्द्दकीव्रतविधानं। श्रवणद्वादशीव्रतविधिः। चैत्रद्वादशीकृत्यनिरूपणं। योगविशेषनिरूपणादिकं। भाद्रशुक्लद्वादशीव्रतविधानं। आश्विनकृष्णैकादश्यां सन्न्यासिनां श्राद्धविधानं। वत्सद्वादशीव्रतविधिः। द्वादशादित्यव्रतविधिः। स्वरूपद्वादशीव्रतविधिः। जन्मद्वादशीव्रतविधानं। तिलद्वादशीव्रतविधानं। भीमद्वादशीविधिः।

१४शे,—सामान्यतः त्रयोदशीनिरूपणं। चैत्रकृष्णत्रयोदश्यां महावारुणीयोगादिविधिकीर्त्तनं। तत्र शुक्लायां मदनपूजाविधिकथनं। अनङ्गत्रयोदशीविधिः। वैशाखे कामदेवव्रतविधानं। ज्यैष्ठे सौभाग्यशयनव्रतविधानं। दौर्भाग्यनाशनव्रतविधानं। आश्विनकृष्णत्रयोदश्यां श्राद्धविधिकथनं। मघात्रयोदशीविधानं। युगाद्याव्रतविधिः। कार्त्तिके यमदीपदानविधिः। तत्र गोत्रिरात्रव्रतविधिः। मार्गशीर्षे अनङ्गत्रयोदशीव्रतविधानं। यमादर्शनव्रतविधानं। पौषे त्रयोदशीकृत्यनिरूपणं। फाल्गुने धनदव्रतविधानं। प्रदोषव्रतविधानं। तत्र प्रदोषस्वरूपादिनिरूपणञ्च। शनिप्रदोषव्रतविधानं। सम्पूर्णत्रयोदशीव्रतविधानं। कामत्रयोदशीव्रतविधानं।

१५शे,—सामान्यतश्चतुर्द्दशीनिरूपणं। चतुर्द्दशीषु वीरेश्वरपूजाविधानं। चैत्रकृष्णचतुर्द्दश्यां केदारोदकपानविधिः। भोजनचतुर्द्दशीविधिः। दमनकारोपणविधिः। पतिपूजाविधानं। वैशाखे नृसिंहजयन्तीव्रतविधानं। तत्र श्रोङ्कारेश्वरयात्राविधानं। हेमधेनुदानविधिः। श्रावणे पवित्रारोपणविधिः। भाद्रे अनन्तव्रतविधानकथनं। व्रतोद्यापनविधिकथनं। तत्र पालीव्रतविधिः। कदलीव्रतविधिः। आश्विनकृष्णपक्षे दुर्म्मरणस्मृतानां श्राद्धादिविधिः। कार्त्तिके तर्पणविधिः। दीपदानविधिः। प्रेतचतुर्द्दशीविधिः। शुक्लायां ब्रह्मकूर्च्चव्रतविधानं। पाषाणचतुर्द्दशीव्रतविधानं। वैकुण्ठचतुर्द्दशीविधिः। कार्त्तिकव्रतविधिः। मार्गशीर्षशुक्लचतुर्द्दशीमारभ्य शिवपूजाविधिकथनं। पौषे विरूपाक्षव्रतविधानं। माघे शिवचतुर्द्दशीव्रतविधिकीर्त्तनं। तत्र पारणादिव्यवस्थानिरूपणञ्च। शिवाय दानयोग्यकुसुमादिनिर्व्वाचनं। शिवरात्रिकृत्यनिरूपणं। फाल्गुनशुक्लचतुर्द्दश्यां महेश्वरव्रतविधानं। तत्र वृषदानादिविधिकथनं।

१६शे,—सामान्यतः पौर्णमासीनिरूपणं। चैत्रे दमनेन शिवपूजाविधिकथनं। तत्र इन्द्रपूजाविधिकथनं। वैशाखीकृत्यनिरूपणं। तत्र तिलकृष्णाजिनादिदानविधिः। सोमव्रतविधानं। गोदानविधानकीर्त्तनं। ज्यैष्ठे सावित्रीव्रतविधानकथनं। अत्र देशभेदे आचारभेदकथनञ्च। पूत्रकामव्रतविधिः। आषाढीकृत्यनिरूपणं। तत्र कोकिलाव्रतविधानं। शङ्करकृतव्यासपूजाविधिः। श्रावणे रक्षाबन्धनविधिकीर्त्तनं। उपाकर्म्मकालनिरूपणं। भाद्रपद्यां सावित्रीव्रतविधानं। ब्रह्मसावित्रीव्रतविधिः।

विषयः। लोकपालपूजाविधिः। भागवतदानविधिः। आश्विने कोजागरकृत्यविधानं। कोजागरव्रतविधानं। आश्वयुजिककर्म्मविधानं। हस्तिनां नीराजनविधिः। कार्त्तिके त्रिपूरोत्सवविधिः। काम्यवृषोत्सर्गविधिः। सन्तानव्रतविधिः। राशिव्रतविधिः। कृत्तिकाव्रतविधिः। मनोरथपूर्णिमाव्रतविधानं। सौभाग्यव्रतविधिः। भीष्मपञ्चकव्रतविधिः। मार्गशीर्षे चन्द्रपूजाविधिः। दत्तात्रेयजन्मोत्सवविधिः। चन्द्रव्रतविधिः। पौषे दूशानव्रतविधानं। माघीकृत्यनिरूपणं। प्रसङ्गात् माघस्नानविधानं। घृतकम्बलादिविधिः। फाल्गुनीकृत्यनिरूपणं। होलिकोत्सवविधानं। अशोकव्रतविधिः। लक्ष्मीनारायणव्रतविधिः।

१७शे,—सामान्यतः अमावस्यानिरूपणं। अमावस्याव्रतानि। तत्र पितृव्रतविधिः। अमाकृत्यनिरूपणं। कार्त्तिके कौमुदीमहोत्सवविधानं। दीपान्विताविधिः। गौरीकेदारव्रतविधानं। युगाद्याकृत्यविधानं। अर्द्धोदययोगनिरूपणादिकं। सोमवत्यमावस्याव्रतविधानं। प्लूलव्रतविधानं। पयोव्रतविधानं। दर्शश्राद्धनिरूपनादिकं। श्राद्धकालनिरूपणं। एकोद्दिष्टाब्दिकसपिण्डीकरणादिश्राद्धनिरूपणादिकं। आधानादिविधानं। ग्रहणकालादिनिरूपणं। चूडामणियोगादिनिरूपणं। वारव्रतानि। आदित्यहृदयविधिः। सोमवारव्रतादिविधानं। नक्षत्रव्रतादिविधिः।

१८शे, सामान्यतः सङ्क्रान्तिनिरूपणं। तत्र विहितव्रतविधिकीर्त्तनं। धान्यसङ्क्रान्तिविधिः। पायससङ्क्रान्तिः। विशोकसङ्क्रान्तिव्रतविधिः। तेजःसङ्क्रान्तिव्रतविधिः। आयुःसङ्क्रान्तिव्रतविधिः। कीर्त्तिसङ्क्रान्तिव्रतविधिः। शीलसङ्क्रान्तिव्रतविधिः। स्नानव्रतविधिः। हन्ताकत्यागविधिः। शतुनाशविधिः। मौनव्रतविधिः। लक्षपूजाविधिः। लक्षनमस्कारविधिः। लक्षवर्त्तिदानविधिः। अश्वत्थप्रदक्षिणोद्यापनविधिः। अश्वत्थोपनयनविधिः। रूपावाप्तिव्रतविधिः। आन्दोलनव्रतविधिः। चैत्रादिमासनियमकथनादिकं। तत्र कान्तिव्रतविधिः। ज्ञानावाप्तिव्रतविधिः। श्रीप्राप्तिव्रतविधिः। भोगावाप्तिव्रतविधिः। एकभक्तव्रतविधिः। अगस्त्यार्घ्यदानविधिः। अगस्त्यपूजाविधिः। कार्त्तिकव्रतादिविधिः। प्रदीपव्रतविधिः। जयावाप्तिव्रतविधानं। देवीव्रतविधानं। उपवासव्रतानि। चान्द्रायणव्रतविधिः। सूर्य्यव्रतविधिः। इति। शम्। (जयसिंहकल्पद्रुमस्य विवरणं समाप्तं।)

---

## No. 1706. कालनिर्णयप्रकाशः।

Substance, country-made paper, 11 × 5 inches. Folia, 105. Lines, 12—14—15 on a page. Extent, 4,500 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

*Kálanirṇaya-prakáś'a.* On lunar days and the different religious fast, penances and optional observances and duties appertaining thereto. By Rámachandra Bhaṭṭa, son of Viṭṭhala Bhaṭṭa, and grandson of Bálakrishṇa Bhaṭṭa.

Beginning. श्रीत्र्यम्बकपदद्वन्द्वं नत्वा गणपतिं गुरून् ।
रामचन्द्रोऽतिसङ्क्षिप्तं कुरुते कालनिर्णयं ॥
तत्र कालो द्विविधः । नित्यः खण्डश्च । नित्यस्त्वीश्वररूप एव । अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः । इति वचनात् । खण्डः क्षणादिपरार्द्धान्तः । तत्र नित्यस्य न निर्णयोऽनुपयोगात् । इत्यादि ।

End. यथार्णवस्थरत्नानि मेरोस्तु कनकोपलाः ।
सङ्ख्यातुं नैव शक्यन्ते भागीरथ्यास्तथा गुणाः ॥ इति ।

Colophon. इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपनामकभट्टबालकृष्णात्मजभट्टविठ्ठलसूनु-भट्टरामचन्द्रकृतकालनिर्णयप्रकाशः समाप्तिमगमत् । शुभमस्तु ।

विषयः । नित्यखण्डभेदेन द्विविधकालनिरूपणं : तत्र संवत्सरनिर्णयः । अयननिर्णयः । ऋतुनिर्णयः । द्विविधमलमासनिरूपणं । तत्र कार्य्याकार्य्यनिर्णयः । सामान्यतः सर्व्वतिथिनिरूपणं । सम्पूर्णाखण्डादितिथिव्यवस्थानिरूपणं । शुक्लप्रतिपदादि-दर्शान्ततिथिविशेषे व्यवस्थाविशेषनिर्णयः । जन्माष्टमीनिर्णयः । एकादश्युप-वासनिर्णयः । तत्र क्रियानुकल्पादिविधिकथनं । हरिशयनादिनिर्णयः । शुद्धा-विद्धादिद्वादशीनिरूपणं । नक्तव्रतादिविधिः । चातुर्म्मास्यव्रतविधिः । शिव-रात्रिव्रतनिर्णयः । एकभक्तादिव्रतनिर्णयः । उपाकर्म्मनिर्णयः । उत्सर्जननिर्णयः । नानातिथिसाध्यव्रतनिर्णयः । नवरात्रविधिनिर्णयः । कुमारीपूजाविधिः । कौ-मुदीनिर्णयः । होलिकोत्सवनिर्णयः । इष्टिविषये पर्व्वनिरूपणं । तत्र प्रकृति-निरूपणं । विकृतिनिर्णयः । श्राद्धकालनिर्णयः । मघात्रयोदशीनिर्णयः । महा-लयापरपक्षनिर्णयः । सपिण्डीकरणादिकालनिरूपणं । प्रेतश्राद्धेषु निषिद्धकाल-निर्णयः । अमाश्राद्धातिरिक्तत्रिपुरुषोद्देश्यरूपपार्व्वणेषु तिथिनिरूपनं । अमा-वस्यानिर्णयः । सङ्क्रान्तिनिर्णयः । ग्रहणकालनिर्णयः । व्रतेतिकर्त्तव्यतानिर्णयः । नक्षत्रोपवासनिर्णयः । नदीरजोदोषकालनिर्णयः । आधानाग्निष्टोमादिकाल-निर्णयः । दीक्षाकालनिर्णयः । गृहारम्भकालनिर्णयः । मूर्त्तिप्रतिष्ठाकालनि-र्णयः । वापीकूपादिप्रतिष्ठाकालनिर्णयः । प्रथमरजोदर्शने शुभाशुभकाल-निर्णयः । दुष्टरजोदर्शनशान्तिविधानं । गर्भाधानकालनिर्णयः । पुंसवनसीम-न्तोन्नयनादिकालनिरूपणं । जातकर्म्म-नामकरण-पर्य्यङ्कारोपण-दुग्धपान-निष्क्र-

मण-सूर्य्यावलोकन-भूम्युपवेशन-कर्णवेधान्नप्राशन-चौल-अक्षरग्रहण-उपनयन-समावर्त्तनकालनिरूपणं। विवाहनिरूपणं। चौरक्रियासु निषिद्धकालनिरूपणं। अभ्यङ्गकालनिर्णयः। स्नानादिकालनिरूपणं। कलियुगवर्ज्जनीयनिरूपणं। कलिधर्मकथनं। विष्णु-शिव-वारानसी-गङ्गामाहात्म्यकथनञ्च।

---

## No. 1707. निर्णयामृतं।

Substance, country-made paper, 12½ × 5 inches. Folia, 158. Lines, 10 on a page. Extent, 5,004 s'lokas. Character, Nágara. Date, ? Sm. 1680. Place of deposit, Lálagolá, Zílá Mursidábád, Kálícharaṇa Upádhyáya. Appearance, fresh. Prose and verse. Correct.

*Nirṇayámṛita.* A calendar of fasts and penances according to modern Hinduism. By Súrya Sena. The work has been already noticed under No. 151, but the present MS. is correct, and it has afforded an opportunity of giving a full analysis of its contents.

Beginning. कारणमेकं जगतां वारणमास्येन वारणं विपदां।
किमपि महो महनीयं प्रत्यूहव्यूहदारणं वन्दे॥
भावयामि दृढभक्तिभावनाभावितात्त्रियुगलां सुमङ्गलां।
इष्टदां सततमिष्टदेवतां मन्त्व+कलमन्त्रमातरं॥
+पाधिकः स्फुरति यत्र कलादिभेदस्तद्ब्रह्मतत्त्वमपि यस्य न+ +वेद।
सृष्टिस्थितिप्रलयहेतुमहेतुमेकं कालस्वरूपमहमन्वहमानमामि॥
यैः कृतः स्मृतिमहा+ +पारप्राप्तिहेतुरिहसङ्ग्रहहेतुः।
तान् नमामि मनुविष्णुयमाद्यान् कालनिर्णयकृतोऽप्यहमन्यान्॥
— — — — — — — — — ।
बभूव यस्य निदर्शैः स्वरूपस्तदन्ववाये बलबाहुरूपः।
चकार नित्यञ्च समाहितानां परिश्रमं यः परमाहितानां॥
तस्मात्म+जनि+कर्मदेवस्त्यागेन यो विश्रुतकर्मदेवः।
वपुःश्रिया निर्जितकामदेवः सदा समाराधितवासुदेवः॥
तदात्मभूरुद्दरणे चितीन्द्रः चितीन्द्रभिद्+नुमहानुभावः।
शुभावदातायतकीर्त्तिराशिर्हरः सतां श्रीपतिभूर्त्तिरासीत्॥
— — — — — — — — ।

चकास्ति यस्यातुलनप्रतापः प्रतापसेनोऽवरजः प्रसिद्धः ।
मत्त्याभिरामस्य सदाग्रजस्य यो लक्ष्मणाकारमुपैति भद्रं ॥
— — — — — — — — — ।
श्रीदेवसेनस्तनयोऽपि योगी नारायणस्याजनि कामरूपः ।
लब्धप्रसादेन भवेश्वरस्य + + रतिस्तुष्टिमुपैति यत्र ॥
देवसेनकुमारस्य कुमारस्य च नान्तरं ।
आर्य्यानन्दकृतो नित्यं विभ्रतः भक्तिमुत्तमां ॥
श्रीसूर्य्यसेनः पुरमेकचक्रं वराङ्गमध्यास्य जगत्यजस्रं ।
यमेककान्तं जितनाककान्तं गुर्व्वीयमुर्व्वीविध + + स्ते ॥
विद्वत्सु सत्स्वपि महत्सु समाश्रितेषु श्रीसिद्धलक्ष्मणसुतः सुतरामुमुष्य ।
श्रीसूर्य्यसेननृपतेः + + + जसोऽभूत् अन्नादुनाथमतिमानतिमानपात्रं ॥
एनं कदापि सुमतिः सुमनाः स्वनाम्ना श्रौतादिकर्मसु च कालविनिर्णयाय ।
+ + आदिशत् वचसा निशा + + + + + + + चितमः शतमन्युकल्पः ॥
अगाधग्रन्थपाथोधिमथालोच्य + + मया ।
समुद्धृतं नृपादेशात् तेनेदं निर्णयामृतं ॥ इति ।

**End.** विप्राय गां दत्वा पञ्चगव्यं प्राश्य शूद्रः सूतकी आवश्यकं विवाहादिमङ्गलं कुर्य्यात् । इति मङ्गलं ।

**Colophon.** इति श्रीसूर्य्यसेनमहामहीन्द्रविरचिते निर्णयामृते अशौचप्रकरणं समाप्तं ।
श्रीमत्पण्डित + + लक्ष्मणसुतः श्रीसिद्धलक्ष्मीपद-
द्वन्द्वाराधनसुप्रसिद्धमहिमा यः सिद्धसारस्वतः ।
आदेशाद् + + सूर्य्यमहसः श्रीसूर्य्यसेनप्रभो-
र्वैधे कर्म्मणि कालनिर्णयमसावल्लादुनाथः सुधीः ॥
इति निर्णयामृतनिबन्धः सम्पूर्णः । श्रीरस्तु । संवत् १६८० ।

**विषयः ।** ग्रन्थावतारविवरणकथनं । अनुक्रमणिकाकथनं । विधिविचारः । तिथ्यादिस्वरूपकथनं । एकभक्तादिव्रतनिरूपणं । तत्र सन्ध्यायामाहारमैथुननिद्रास्वाध्यायवर्ज्जनावश्यकतानिरूपणं । नक्तव्रतनिरूपणं । उपवासे तिथिनिरूपणं । अयाचितव्रततिथ्यादिनिरूपणं । युग्मतिथिनिरूपणादिकं । तदपवादकथनञ्च । निर्णयलक्षणकीर्त्तनं । प्रतिपन्नामनिर्व्वचनं । चैत्रप्रतिपदि अनङ्गपूजाविधिकथनं । तत्र चूतमञ्जरीप्राशनमन्त्रकथनं । भाद्रप्रतिपदि मौनव्रतविधिकथनं । कार्त्तिकप्रतिपदि दीपोत्सवविधानं । तत्र गोवर्द्धनगिरिपूजनादिविधिकथनं । तत्र मार्गपालिकाबन्धनविधानकीर्त्तनञ्च । सिद्धयोगादिनिरूपणं । तत्र कार्य्याकार्य्यनिरूपणञ्च ।

विषयः। प्रबोधिनीनवमीविधानं। मार्गशीर्षनवम्यां नन्दिनीपूजाविधानं। सर्व्वासु नवमीषु सरस्वतीपूजाविधानकथनं। सिद्धविरुद्धादिनिरूपणञ्च।

दशमीनिरूपणं। चैत्रदशम्यां यमपूजाविधानं। ज्यैष्ठे दशहरापूजाविधानं। आश्विने विजयादशमीविधिकथनं। सिद्धविरुद्धादिकथनञ्च।

एकादशीनिरूपणं। एकादशीव्रतविधानकीर्त्तनं। चैत्रैकादश्यां रुक्मिणीपूजाविधानं। तत्र वास्तुपूजाविधानं। विष्णोर्दोलयात्राविधानञ्च। शयनैकादशीविधिः। पार्श्वपरिवर्त्तनविधिः। प्रबोधनविधिः। मार्गशीर्षादिषु धरणीव्रतादिविधानकथनं। सिद्धविरुद्धादिनिरूपणञ्च।

द्वादशीनिरूपणं। श्रवणद्वादशीविधानं। शक्रध्वजोत्थापनादिकीर्त्तनं। तिलद्वादशीविधानं। ब्रह्मपूजाविधानं। सिद्धविरुद्धादिनिरूपणञ्च।

त्रयोदशीनिरूपणं। मदनत्रयोदशीविधिकथनं। गजच्छायाविधानकीर्त्तनं। त्रयोदश्यां प्रदोषे शङ्करपूजाविधानं। सिद्धादिकथनञ्च।

चतुर्द्दशीनिरूपणं। शिवचतुर्द्दशीविधानकथनं। तत्र कामनिर्व्वापणविधानकथनं। क्रीड़नविधिः। ज्यैष्ठचतुर्द्दश्यां हेमधेनुदानविधिकथनं। अनन्तव्रतविधानं। प्रेतचतुर्द्दशीविधिः। सिद्धविरुद्धादिनिरूपणञ्च।

पूर्णिमानिरूपणं। तत्र वैशाखादिषु मासेषु पूर्णिमायां कृत्यविधानकीर्त्तनं। उपाकर्म्मविधिकथनं। चैत्रपूर्णिमायामिन्द्रपूजाविधानं। वैशाखपौर्णमास्यां कृष्णाजिनदानविधिः। ज्यैष्ठपूर्णिमायां तिलदानविधिः। आषाढ़पूर्णिमायां अन्नदानादिविधिः। श्रावणपूर्णिमायां जलक्रीड़ादिविधिः। भाद्रपौर्णमास्यां सावित्रीव्रतविधिकीर्त्तनं। कार्त्तिकपौर्णमास्यां क्षीरसागरदानविधिः। मार्गशीर्षपूर्णिमायां चन्द्रपूजाविधिः। पौषपूर्णिमायामलक्ष्मीनाशनविधिकथनं। फाल्गुन्यां होलिकाविधानं। महाचैत्र्यादिनिरूपणं। शुद्धविरुद्धादिकथनञ्च।

अमावस्यानिरूपणं। माघमासे अमावस्यायां ब्रह्मपूजाविधिः। अर्द्धोदययोगविधानादिकथनं। अनध्यायनिरूपणं। अमस्त्यार्घविधिः। अमावस्याव्रतादिकथनं। विवाहनिरूपणं। द्विरागमनकालादिनिरूपणञ्च। इति तिथिनिरूपणं।

श्राद्धप्रकरणे,—श्राद्धस्वरूपकथनं। श्राद्धकालनिरूपणं। अष्टकानिरूपणादिकं। मृताहादिनिरूपणं। श्राद्धकरणयोग्यदेशकथनं। एकोद्दिष्टपार्व्वणादिविधिकथनं। स्त्रीणां पृथक्श्राद्धविधिकथनं। आमश्राद्धादिविधिः। जीवत्पितृकश्राद्धविधिः। नित्यश्राद्धविधिः। महालयादिश्राद्धविधिः। काम्यश्राद्धविधिः। नवश्राद्धविधिः। मासिकसपिण्डीकरणादिविधिः। सङ्कल्पश्राद्धविधिः। सङ्क्रान्तिनिरूपणं। मलमासनिरूपणादिकं। ग्रहणनिरूपणञ्च।

द्रव्यप्रकरणे,—श्राद्धीयद्रव्यनिरूपणं। निषिद्धद्रव्याणि। द्रव्यशुद्धिकथनं। भूशुद्धिकथनं। पात्रशुद्धिकथनं। धान्यादिशुद्धिकथनं। रत्नशुद्धिकथनं। वस्त्रशुद्धिः, अशुद्धेरपवादकीर्त्तनञ्च।

अशौचप्रकरणे,—गर्भस्रावाद्यशौचनिरूपणं। जननाशौचकथनं। दाहादिसंस्कारे अधिकारक्रमादिनिरूपणं। नारायणबलिनिरूपणं। अन्वारोहणविधिः। सहमरणविधिः। वीजक्षेत्रविवेककथनं। अनेकपुत्रक्रियाक्रमकथनं। रजस्वलाद्यशौचकथनं। पुनःसंस्कारकालनिरूपणं। दिनरात्रिविभागतो दशहरादिनिरूपणं। सद्यःशौचादिकथनं। अनुलोमविजातीयाशौचनिरूपणं। मातामहाचार्य्यादीनां मरणादावशौचनिरूपणं। देशान्तरमृताशौचविधिः। अस्थिचर्म्मादेः संस्कारविधानं। प्रोषितस्य जीवनस्थितिवार्त्तायां अनाकर्णने विधानकथनं। अनुगमनाशौचकथनं। तत्र प्रायश्चित्तकथनञ्च। अशौचसन्निपाते विधिकथनं। अशौचे वर्ज्जनीयनिरूपणञ्च। इति शम्।

---

## No. 1708. व्यवस्थासारसङ्ग्रहः।

Substance, country-made yellow paper, 10 × 3 inches. Folia, 7. Lines 7 on a page. Extent, 2,268 s'lokas. Character, Bengali. Date, ? Place of deposit, Lálgolá, Zilá Murshidábád. Kálíbrahma Bhaṭṭácháryya. Appearance, fresh. Prose and verse. Correct.

*Vyávasthá-sárasangraha.* Succinct rules regarding certain Smṛiti rites. By Rámagovinda Chakravartí. This is a second and correct codex of the work noticed under No. 745. Contents: Lunar days, lunar months, conjunction of two or three tithis in a day. Duties appertaining to householders in each of the lunar days, or tithis. Fasts. Manvantarás. Yugas. Ambuváchí or the days when the earth is in season. Conjunction of months, or the moment of transit of the sun from one sign of the zodiac to another. The festival of Kártika-pújá. Supernatural occurrences and the means of expiating their evil effects. Marriage. Cognates. Characteristics of marriage. Varieties of marriage. The giver of the bride. Bride. Persons entitled to offer Piṇḍas. 28 kinds of Piṇḍas. Hermaphrodites not entitled to inherit. Concremation of Satís. Separate cremation of Satís. Rules regarding the funerals of persons dying in foreign countries. Duties for the last day of mourning. Cremation of effigies.

Rite of Vrishotsarga—not to be performed if, owing to any accident, the S'ráddha be deferred from the proper day to another. S'ráddha with 16 offerings. Persons authorized to perform the first annual S'ráddha called Sapindakarana. Other annual S'ráddhas. Females unfit to perform casual or Párvana S'ráddhas. Párvana defined, when it should be observed. S'ráddhas at places of pilgrimage. Navánna, or the feast of new rice. Time for S'ráddhas of persons whose death is unknown. S'ráddha with meat, when forbidden. No ceremonial rites to be performed during impurity resulting from the death of parents. Ashtaká-s'ráddha. S'ráddha on the day of the new moon. Expiation for cattle killed by neglect. Equivalent of cattle when cattle cannot be given in expiation for an offence. Accusation of killing cattle. Expiation for leprosy. Rules regarding mourning. Impurity of the person, how produced. The intervention of two or more mournings. Mourning on account of infants. Abstinence during mourning. Mourning for particular causes of death. Mourning for adopted persons. Impurity resulting from menstruation. Days when the S'ástras should not be read.

Beginning. गुरोः पादयुगं नत्वा रामगोविन्दशर्म्मणा ।
क्रियते बालबोधाय व्यवस्थासारसङ्ग्रहः ॥
तत्रादौ तिथिव्यवस्था । तिथिस्तु चन्द्रकलाक्रियोपलक्षितः कालः । तदेव चान्द्रमसं दिनं । तत्त्रिंशता चान्द्रो मासः । स च द्विविधः । मुख्यो गौणश्च ।

End. गतेऽन्तरे त्वहोरात्रं शक्रपाते तथोदये ।
इति वचनादध्ययने गुरुशिष्ययोरन्तरागमने अहोरात्रमनध्यायः ।

Colophon. इति श्रीरामगोविन्दचक्रवर्त्तिकृतः व्यवस्थासारसङ्ग्रहः समाप्तः ।

विषयः । तिथिव्यवस्थानिरूपणं । तत्र तिथिलक्षणं । मासादिलक्षणतद्भेदकथनं । युग्मादितिथिव्यवस्थाकथनं । प्रतिपदादितिथिव्यवस्थाकथनं । तत्र तत्र विहितकृत्यविधानकीर्त्तनञ्च । उपवासविधिकथनं । मन्वन्तरानिरूपणं । युगाद्याकथनं । अम्बुवाची । सङ्क्रान्तिनिरूपणं । कार्त्तिकपूजाव्यवस्था । अद्भुतनिरूपणं । अद्भुतशान्तिकथनं । विवाहव्यवस्थाकथनं । तत्र सापिण्ड्यादिनिरूपणं । विवाहलक्षणं । अष्टविधविवाहलक्षणं । कन्यादातृनिरूपणादिकं । कन्यालक्षणादिकथनं । पिण्डदानाधिकारिणः । तत्र अष्टत्रिंशत्प्रकारकीर्त्तनं । क्लीवादीनामंशानर्हत्वकथनं । सहमरणविधिकथनं । अनुमरणव्यवस्थादिकथनं । सहमरणादिप्रयोगः । देशान्तरमृतस्य प्रेतत्वाद्यवधारणकथनं । अशौचान्तदिन-

छत्यनिरूपणं । पर्णनरदाहविधिः । वृषोत्सर्गादिविधिः । विघ्नादिना अशौचान्तद्वितीयदिने आद्यश्राद्धाकरणे एकादश्यां तत्करणे वृषोत्सर्गो न कार्य्य इति कथनं । षोडशश्राद्धविधानं । सपिण्डीकरणाधिकारिणः । उत्तरक्रियाधिकारिणः । पार्व्वणादिषु स्त्रीणामनधिकारकथनं । पार्व्वणविधिकथनं । मलमासनिरूपणादिकं । पार्व्वणश्राद्धादिकालनिरूपणं । तीर्थश्राद्धकालादिनिरूपणं । नवान्नकथनं । मृताहाविदितश्राद्धकालः । आमश्राद्धविधिकथनं । श्राद्धनिषिद्धकथनं । महागुरुनिपाते काम्यकर्म्मवर्ज्जनकथनं । अष्टकाश्राद्धविधिः । दर्शश्राद्धविधिः । अपालनकृतगोवधप्रायश्चित्तं । गोमूल्यादिनिरूपणं । गोवधापवादः । कुष्ठरोगप्रायश्चित्तादिकथनं । अशौचव्यवस्थाकथनं । अङ्गास्पृश्यत्वादिनिरूपणं । अशौचसङ्करादिव्यवस्था । बालाद्यशौचनिरूपणं । अशौचे वर्ज्जनीयकथनं । मृत्युविशेषाशौचविधिः । दत्तकाशौचनिरूपणं । रजस्वलाशौचविधिः । अशौचाभावकथनं । अनध्यायनिरूपणञ्च ।

---

## No. 1709. मन्त्रचन्द्रिका ।

Substance, country-made paper, 11 × 6 inches. Folia, 42. Lines, 12 on a page. Extent, 1,134 s'lokas. Character, Nágara. Date, Sm. 1861. Place of deposit, Teghariyá, Post Lálgolá, Zilá Murshidábád Devadatta Trivedí. Appearance, old. Verse and prose. Correct.

*Mantra-chandriká.* A digest of the rules regarding Tántric rites. By Kás'ínátha Bhaṭṭa, son of Jayaráma Bhaṭṭa, grandson of S'ivaráma Bhaṭṭa. This is different from No. 911.

Beginning. नत्वा कात्यायनीं देवीं हरं विघ्नहरं तथा ।
काशीनाथेन क्रियते सुरम्या मन्त्रचन्द्रिका ॥
अथ तुर्य्याष्टाक्षरमन्त्रः । परोजसे सावदों । ब्रह्मा ऋषिः । गायत्रीच्छन्दः । परमहंसो देवता । फट् वीजं । परः शक्तिः । चं कीलकं । मोक्षार्थे विः । परः हृद् रजसे शिरः सावदों शिखा । इत्यादि ।

End. विश्वेश्वरं विशालाक्षं ढुण्ढिराजञ्च माधवं ।
दण्डपाणिं कालराजं स्मरन् सिद्धिमवाप्नुयात् ॥ इति दिक् ।

Colophon. इति श्रीभट्टोपनामकशिवरामभट्टाङ्गजजयरामभट्टाभिधशिवभक्तस्य सूनुमन्त्रशास्त्रप्रवीणदक्षिणाचारमतप्रवर्त्तककाशीनाथभट्टविरचिता मन्त्रचन्द्रिका समाप्ता ।
संवत् १८६१ ॥

विषयः। तुर्य्याश्चाचरमन्त्रनिरूपणं। तत्र ऋष्यादिनिरूपणञ्च। एवं परत्र। श्रीविद्यानिरूपणं। मनुविद्या। कौवेरी। सौरी। ऐन्द्री। शाङ्करी। वैष्णवी। अगस्त्यविद्या। दुर्व्वासोविद्या। कादिविद्या। महाषोड़शी। परा षोड़शी। त्रिपुरसुन्दरी। महात्रिपुरसुन्दरी। श्रीचक्रपूजनानुष्ठानकीर्त्तनञ्च। देव्यै ब्राह्मणादिजातीनामासवदानादिनिषेधकथनं। शूद्रस्यैव आसवदानपानयोरधिकार इति निरूपणञ्च। पुरश्चरणविधिः। त्वरितामन्त्रनिरूपणादिकं। गौरीमन्त्रनिरूपणं। नित्यक्लिन्नादिकथनं। अश्वारूढामन्त्रादिकथनं। अन्नपूर्णामन्त्रादिनिरूपणं। विन्ध्यवासिनीमन्त्रादिकथनं। सप्तशतीपाठादिविधिः। स्वयंवरापार्व्वतीमन्त्रनिरूपणादिकं। कामाचीमन्त्रादिनिरूपणं। रेणुकामन्त्रकथनं। इन्द्राणीमन्त्रनिरूपणं। एकवीरामहामन्त्रनिरूपणादिकं। प्रासादमन्त्रनिरूपणं। तत्र रुद्रमन्त्रनिरूपणञ्च। उमामाहेश्वरमन्त्रनिरूपणादिकं। मार्ज्जाररुद्रमन्त्रनिरूपणं। दक्षिणामूर्त्तिमन्त्रकथनं। प्रत्यङ्गिरामन्त्रकथनं। षड़चरादिशैवमन्त्रादिकथनं। संहारदक्षिणामूर्त्तिमन्त्रनिरूपणादिकं। क्रमिकीटपतङ्गनाशनहनूमन्मन्त्रनिरूपणं। उच्छिष्टगणपतिमन्त्रनिरूपणं। शरभमन्त्रनिरूपणं। सिद्धभैरवमन्त्रकथनं। वीरभद्रमन्त्रकथनं। अमुब्रह्मण्यमन्त्रनिरूपणादिकं। नवग्रहमन्त्रसंख्यानादिकथनं। नवग्रहमन्त्रादिविधानं। मृत्युमन्त्रादिनिरूपणं। ज्वरनाशनमन्त्रकथनं। गर्भयन्त्रादिविधानं। गन्धर्व्वराजमन्त्रादिकथनं। दीक्षाकालादिनिरूपणं। तत्र नक्षत्रचक्रराशिचक्रादिनिरूपणं। सिद्धचक्रहरचक्रादिकथनञ्च। यन्त्रशोधनप्रकारादिकीर्त्तनं। सामान्यतः पुरश्चरणविधिकथनं। जपमालानिरूपणादिकं। स्थानासनादिनिरूपणं। पुरश्चरणदिनकृत्यनिरूपणं। मन्त्रसिद्धेरन्यविधोपायनिरूपणं। पुरश्चरणमध्ये अशौचपाते व्यवस्थादिनिरूपणञ्च।

---

## No. 1710. रसप्रदीपः।

Substance, country-made paper, 10 × 4 inches. Folia, 28. Lines, 5 on a page. Extent, 185 s'lokas. Character, Nágara. Date, ? Place of deposit, Lálgolá, Zilá Murshidábád, Paṇḍit Kálícharaṇa Upádhyáya. Appearance, old. Verse. Correct.

*Rasapradípa.* A collection of short descriptive poems on different subjects. By S'añkara Bhaṭṭa, son of Trimalla Bhaṭṭa, Vaidya.

Beginning. श्रीगणेशाय नमः ।

गलदमलमदालीपिच्छिलोद्दण्डगण्डस्थल+++मिलिन्दस्थानसानन्दचेताः ।

तुहिनगिरितनूजासम्मदोद्दामसिन्धुः प्रणतमनुजबन्धुः पातु वो वक्रतुण्डः ॥

अपि च। आकृष्टे भुजगाधिपे विसधिया तस्मिन् पुनः फुत्कृते

भीतो+++तः च्युतो निपतितो रेणूत्करैरङ्कितः ।

कः प्रोञ्छन् निजशुण्डया विहसितो मातापितृभ्यां मिथो

ह्रीणः शैशवलीलया गणपतिः पायात् समस्तं जगत् ॥

त्रिमल्लभट्टवैद्यस्य तनूजः शङ्करः कृती ।

द्विवान् ग्रन्थान् समालोक्य तनोति रसदीपकं ॥ तत्रादौ प्रभातवर्णना ।

End. गाढाङ्घ्रिन्यासलोलेऽखिलधरणितले जातकम्पे सुमेरा-

वन्योन्यासक्तभास्वद्विधुवलयबलत्तालमुत्ताललीलं ।

प्रेङ्खोलाम्भोधिभीमध्वनिमुरजरवाडम्बरं भूरिभासः

शम्भोरम्भोजजन्मप्रमुखसुरनतं ताण्डवं वः पुनातु ॥

Colophon. इति श्रीत्रिमल्लभट्टवैद्यसुतशङ्करभट्टविरचिते रसप्रदीपे पतिव्रतादिवर्णनं नाम पञ्चमः परिच्छेदः समाप्तः । समाप्तश्चायं ग्रन्थः । शुभमस्तु ।

विषयः। प्रथमपरिच्छेदे,—प्रभातवर्णनं। प्राभातिकपवनवर्णनं। रात्रिदिनसन्धिवर्णनं। अरुणोदयवर्णनं। सूर्य्यविम्बवर्णनं। मध्याह्नवर्णनं। सन्ध्यावर्णनं। निशावर्णनं। अन्धकारवर्णनं। तारावर्णनं। पूर्णेन्दुवर्णनं। नवेन्दुवर्णनं। ज्योत्स्नावर्णनं। सतारकेन्दुवर्णनं।

२ये,—वनवर्णनं। वसन्तवर्णनं। ग्रीष्मवर्णनं। वर्षावर्णनं। मेघवर्णनं। शरद्वर्णनं। हेमन्तवर्णनं। शिशिरवर्णनं। ऋतुसन्धिवर्णनं। कीर्त्तिवर्णनं। प्रतापवर्णनं। खड्गवर्णनं। दानवर्णनं।

३, ४, ५ मे,—अन्योक्तिवर्णनं। प्रास्ताविकानि। ईर्ष्यावर्णनं। नीतिवर्णनं। पतिव्रतावर्णनं। कुलटावर्णनं। वयःसन्धिवर्णनं। नवोढावर्णनं। प्रियप्रस्थानवर्णनं। अभिसारिकावर्णनं। विरहवर्णनं। उत्कण्ठावर्णनं। दृष्टिवर्णनं। विलोकनहावर्णनं। जृम्भावर्णनं। आलिङ्गनवर्णनं। निधुवनवर्णनं। विपरीतनिधुवनवर्णनं। रोमावलीवर्णनं। वेणीवर्णनं। सिन्दूरविन्दुवर्णनं। केशगुम्फितमल्लीवर्णनं। लोचनवर्णनं। दन्तवर्णनं। जङ्घावर्णनं। नूपुरवर्णनं। ताटङ्कवर्णनं। काञ्चीवर्णनं। त्रिवलीवर्णनं। मुक्ताहारवर्णनं। वदनवर्णनं। अङ्गुलीवर्णनं। शिवताण्डववर्णनञ्च। इति शम्।

## No. 1711. विद्वन्मनोहरा ।

Substance, country-made paper, 11½ × 4½ inches. Folia, 40. Lines, 8 on a page. Extent, 1,240 s'lokas. Character, Nágara. Date, Sm. 1841. Place of deposit, Lálgolá, Zilá Murshidábád. Paṇḍit Kálícharaṇa Upádhyáya. Appearance, fresh. Prose. Correct.

*Vidvanmanohará.* A commentary on the poem called *Vidagdha-mukha-maṇḍana.* By Táráchandra. The poem is by Dharmadása, and describes the feeling of separation from a lover.

Beginning. श्रीगोकुलेशपदपद्ममधुव्रतेन ताराभिधेन कविना शिवराजधान्यां ।
विद्वत्कुलोपकृतये क्रियते स्फुटार्था टीका विदग्धमुखमण्डलसञ्ज्ञकस्य ॥
विमत्सराणां विदुषां ++ टीका कृता मया ।
मुदं वितनुतां नित्यमेषा विद्वन्मनोहरा ॥
जैनकृतेऽस्मिन् काव्ये सम्यग् ज्ञातुं यदा मनो विज्ञाः ।
विद्वन्मनोहराख्यां ++ द्रष्टुं यत्नं कुरुत ॥
इह ग्रन्थकर्त्ता निर्व्विघ्नं परिसमाप्त्यर्थं कायिक-वाचिक-मानसिक-पापहारित्व-रूपं स्वेष्टदेवताप्रसङ्गात्मकं मङ्गलमाचरति,—सिद्धौषधानीति ।

End. यामिनीपक्षे पूर्णचन्द्रेण युक्ता रात्रिः, पुनः निर्म्मलाम्बरा निर्म्मलं निरभ्रं गगनं यस्याः सा मनोहरा ॥

Colophon. इति श्रीताराचन्द्रकृतायां विद्वन्मनोहरायां टीकायां पूर्णश्चतुर्थोऽयं परिच्छेदः । संवत् १८ ४१ ।

विषयः । धर्म्मदासकृतविदग्धमुखमण्डलस्य व्याख्यानं ।

---

## No. 1712. रसिकरञ्जिनी ।

Substance, country-made paper, 11 × 5 inches. Folia, 41. Lines, 7 on a page. Extent, 1,312 s'lokas. Character, Nágara. Date, Sm. 1841. Place of deposit, Lálgolá, Zilá Murshidábád. Paṇḍit Kálícharaṇa Upádhyáya. Appearance, fresh. Prose. Correct.

*Rasika-rañjiní* alias *Rasamañjarí-ṭíká.* A commentary on Bhánu Datta's Rasamañjarí on *ars erotica.* By Gopála Bhaṭṭa, son of Hari-vañs'a Bhaṭṭa.

Beginning. सानन्दानन्दवल्ली स्फुर+दु+मा मल्लवर्गे सरोषाः
कंसे स+तरि स्वप्रियसखसरसीजन्मभास्वत्स्वरूपाः ।
रज्यन्तः स्त्रीसभेषु +दतुलमहिमश्रीभराराङ्गभूमौ
कल्याणं कल्पयन्तां हरिहलधरयोरेकलक्ष्याः कटाक्षाः ॥
श्रीमद्गोपालभट्टेन द्रविडक्ष्मासुपर्व्वणा ।
क्रियते रसमञ्जर्य्याः टीका रसिकरञ्जिनी ॥
प्रारिप्सितग्रन्थपरिसमाप्तये स्वेष्टदेवते ++ वस्तुनिर्द्देशेन दर्शयन् भानुकरनामा कविर्मङ्गलमाचरति । स्वात्मीयमिति ।

End. किम्भूता, वाग्देव्याः सरस्वत्याः श्रुती कर्णौ तत्र यत् पारिजातकुसुमं कल्पतरुपुष्पं तस्य स्पर्द्धां करोतीति तत्तुल्येत्यर्थः ।
श्रीमद्द्राविड++दम्बुधिविधुः श्री++सिंहोद्भव-
+++हरिवंश उत्तमगुणग्रामैकभूस्तत्सुतः ।
तत्पुत्रस्य कृतिस्त्वियं वितनुतां गोपालनाम्नो मुदं
गोपीनाथपदारविन्दमकरन्दानन्दचेतोऽलिनः ॥
मत्सरपरिहृतमनसां सुधियां पुरतः परिस्फुरत्त्वेषा ।
रसिकललाटतटस्था रम्या रसमञ्जरी टीका ॥

Colophon. इति श्रीहरिवंशभट्टचरणशरणगोपालभट्टकृता रसमञ्जरीटीका रसिकरञ्जिनी समाप्ता ।

विषयः । भानुकृतरसमञ्जर्य्या व्याख्यानं ।

---

## No. 1713. मन्त्रमहोदधिनौका ।

Substance, country-made paper, 11 × 4½ inches. Folia, 91. Lines, 12 on a page. Extent, 246 s'lokas. Character, Nágara. Date, Sm. 1848. Place of deposit, Lálgolá, Zilá Murshidábád. Paṇḍit Kálícharaṇa Upadhyáya. Appearance, fresh. Prose. Correct.

*Mantra-mahodadhi-nauká.* A commentary on the *Mantra-mahodadhi.* By Mahidhara. The text is by the author himself, and it treats of Tántric rites and mystic formulæ. See No. 1256.

Beginning. नत्वा लक्ष्मीपतिं देवं स्वीये मन्त्रमहोदधौ ।
नावं विरचये रम्यां तरणाय गुणैर्युतां ॥

अत्र तावन्मन्त्रमहोदधिनामकं तन्त्रं चिकीर्षुराचार्य्यः शिष्टाचारपालनार्थं निर्व्विघ्नं ग्रन्थसमाप्तये च इष्टदेवनमनपूर्व्वकं ग्रन्थकरणं प्रतिजानीते। प्रणम्येति। लक्ष्म्या युतो न्वहरिः लक्ष्मीन्वहरिः मध्यपदलोपी समासः। गुरुं न्वसिंहाश्रमं।

End. ग्रन्थसमाप्तिस्थानं काशीस्थान् देवांश्च स्मरति। विश्वेश्वर इति। ग्रन्थनिष्पत्तिकालमाह। विक्रमार्कादिति। वाणवेदन्वपैर्मिते पञ्चचत्वारिंशदुत्तरषोड़शशततमे विक्रमन्वपाब्दे सति शिवस्य रामेश्वरस्य अग्रे मन्त्रमहोदधिः समाप्तिमगमत्।

Colophon. इति श्रीमन्महीधरविरचितायां मन्त्रमहोदधिनौकायां षट्कर्म्मादिनिरूपणं नाम पञ्चविंशस्तरङ्गः। संवत् १८४८।

विषयः। निजकृतमन्त्रमहोदधेर्व्याख्यानं।

---

## No. 1714. मन्त्रमहोदधिपदार्थादर्शटीका।

Substance, country-made paper, 11 × 4½ inches. Folia, 90. Lines, 16—17 on a page. Extent, 4,614 s'lokas. Character, Nágara. Date, Sm. 1848. Place of deposit, Lálgolá, Zilá Murshidábád. Paṇḍit Kálícharaṇa Upádhyáya. Appearance, fresh. Prose. Correct.

*Padárthádarsha-ṭíká.* Another commentary on the *Mantra-mahodadhi.* By Kás'inátha Bhaṭṭa, son of Jayaráma Bhaṭṭa, grandson of S'iváráma Bhaṭṭa.

Beginning. करैर्दधानः परशुं कुरङ्गं वराख्यमुद्रामुपदेशमुद्रां।
वटस्य मूले विबुधोपसेव्यः सदाशिवायास्तु सदाशिवो वः॥
मन्त्रमहोदधौ तन्त्रे गुरूणामुपदेशतः।
पदार्थादर्शटीकेयं काशीनाथेन तन्यते॥
तथेश्वरः सर्व्वा अपि श्रुतीः भवपाशबद्धानां जन्तूनां स्वर्गाय मुक्तये च समुपदिशति स्म। अन्येषां स्मृतिशास्त्रादीनां तन्मूलकत्वेन प्रामाण्यमिति सुप्रसिद्धतरं। अस्यास्त्वागमस्मृतेः कथं तन्मूलकत्वमिति चेदुच्यते। सर्व्वासु श्रुतिषु काण्डत्रयं। इत्यादि।

End. विक्रमार्कादिति। वाणवेदन्वपैर्मितवर्षे पञ्चचत्वारिंशदुत्तरषोड़शशततमे विक्रमन्वपाब्दे सति शिवस्य रामेश्वरस्य अग्रे मन्त्रमहोदधिः समाप्तिमगमत्।
यदत्र किञ्चिन्मम सम्प्रमादतोऽन्यथोदितं स्यात् पतितं यदि क्वचित्।
तत् सर्व्वमार्य्यैः परिशोधनीयं नेष्या विधेया मयि सन्नतात्मनि॥

राजराजेश्वरो गङ्गा माधवो मणिकर्णिका ।
अन्नपूर्णा च विश्वेशो ददतां मेऽनिशं शिवं ॥
श्रीशिवानन्दनाथाख्यकाशीनाथेन धीमता ।
कृता टीका गुरुप्रीत्यै भजन्तु सदुपासकाः ॥

Colophon. इति श्रीमङ्कट्टोपनामकशिवरामभट्टात्मजजयरामभट्टाभिधशिवभक्तसूनुमन्त्रशास्त्र-प्रवीणकाशीनाथविरचितायां मन्त्रमहोदधिपदार्थादर्शटीकायां षट्कर्मादि-निरूपणं नाम पञ्चविंशतितमः प्रकाशः ।
अनेन भगवच्छ्रीमद्दक्षिणामूर्तिशङ्करः ।
गुर्व्वात्मा प्रीयतां नित्यं तत्त्वज्ञानं प्रदास्यतां ॥ संवत् १८४८ ॥

विषयः । महीधरकृतमन्त्रमहोदधेर्व्याख्यानं ।

---

## No. 1715. श्रुतबोधटीका, सुबोधिनी ।

Substance, country-made paper, 11 × 5 inches. Folia, 13. Lines, 6 on a page. Extent, 279 s'lokas. Character, Nágara. Date, ? Place of deposit, Lálgolá, Zilá Murshidábád, Paṇḍit Kálícharaṇa Upádhyáya. Appearance, fresh. Prose. Correct.

*Subodhiní* alias *S'rutabodha-ṭíká*. A commentary on Kálidása's *S'rutabodha*, an epitome of popular Sanskrit metres. By Manohara S'armá.

Beginning. वन्दे विश्वेश्वरं देवं वाचस्पतिमुखान् गुरून् ।
मातरं पितरं नत्वा निर्व्विघ्नेप्सितसिद्धये ॥
नत्वा भवानीचरणारविन्दं मनोहरेण क्रियते विचार्य्य ।
माणिक्यमल्लक्षितिपालतुष्ट्यै सुबोधिनी या श्रुतबोधटीका ॥
इह कविर्मङ्गलाचरणरूपं वस्तुनिर्द्देशं कटाक्षयन् श्रोतृप्रभृतिप्रतिपत्तिद्वारा स्वप्रयोजनं चिकीर्षितं प्रतिजानीते । छन्दसामिति ।

End. मुनयश्च मुनयश्च मुनयश्च तैः सप्त सप्त सप्त इत्यर्थः ।

Colophon. इति समस्तन्पतिशिरोमणिनिमि++मनोहरशर्म्मकृता श्रुतबोधटीका समाप्ता ।

विषयः । कालिदासकृतश्रुतबोधाभिधानच्छन्दोग्रन्थस्य व्याख्यानं ।

---

## No. 1716. सौभाग्यवर्द्धिनी ।

Substance, country-made paper, 11 × 5 inches. Folia, 55. Lines, 8 on a page. Extent, 1,989 s'lokas. Character, Nágara. Date, Sm. 1844. Place of deposit, Lálgolá, Zilá Murshidábád, Paṇḍita Kálícharaṇa Upádhyáya. Appearance, fresh. Prose. Correct.

*Saubhágya-varddhiní.* A commentary on S'añkara Áchárya's *Ánandalahari,* a hymn to S'iva. By Kaivalyás'rama Yati.

Beginning. ++मानतिमिरावलिसेव्यमानं निस्यन्दमानतिमिरोद्धंगसान्ध्यरागं ।
विघ्नान्धकारतरणिं तरुणार्कशोणं वन्दे+नागनरयोरवियोगयोगं ॥
परमकारुणिकः शङ्करावतारः शङ्कराचार्य्यः शिवशक्त्योरभेदं ज्ञापयितुं सकलप्रपञ्चसाक्षिणा अच्छाविनाभूतचिच्छक्तेः स्तुतिद्वारा मातृकादिमन्त्रानुद्धरति ।
शिव इति ॥

End. वैखरीसमुज्जृम्भिततन्मयमातृका भासत इत्यर्थः ।
एषा सौन्दर्य्यलहर्य्याष्टीका सौभाग्यवर्द्धिनी नाम्ना ।
कैवल्याश्रमरचिता विलसतु परदेवताप्रमोदकरी ॥

Colophon. इति कैवल्याश्रमयतिविरचिता आनन्दलहर्य्याष्टीका सौभाग्यवर्द्धिनी समाप्ता ।

विषयः । शङ्कराचार्य्यकृतानन्दलहर्य्या व्याख्यानं ।

---

## No. 1717. व्याख्यासुधा ।

Substance, country-made yellow paper, $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 8. Lines, 11 on a page. Extent, 247 s'lokas. Character, Nágara. Date, ? Place of deposit, Lálgolá, Zilá Murshidábád, Paṇḍit Kálícharaṇa Upádhyáya. Appearance, new. Prose. Correct.

*Vyákhyá-sudhá.* A commentary on the drama entitled *Rádhá-vinoda,* of Rámachandra Kavi. By Trilokanátha Chúḍámaṇi. Text noticed under No. 74. (Vol. I, p. 44.)

Beginning. गिरीशगृहबालिका नरशिरोलसन्मालिका ।
पुनातु सुखशालिका सकलभक्त++लिका ॥
+तेन्द्ररिपुजालिका निखिलसत्त्वसम्पालिका ।
लसत्तिलकभालिना भुवनसम्पदा पालिका ॥

श्रीमत्त्रिलोकनाथेन वैद्यनाथाङ्गजन्मना ।

राधाविनोदकाव्यस्य व्याख्यासुधा वितन्यते ॥

मालीति । माली श्रीकृष्णः नः अस्मान् अवतु रचतु । माला अत्र काचित् । इत्यादि ।

End. पुनः किम्भूतं राधिकाहृदयं । शोकं ददाति—शोकदं । आरादतिशयेन ।

Colophon. इति श्रीकविकुलशिरोऽलङ्कारचूडामणिना त्रिलोकनाथेन विरचिता व्याख्यासुधाटीका समाप्ता ।

विषयः । रामचन्द्रकविकृतराधाविनोदाभिधानकाव्यस्य व्याख्यानं ।

---

## No. 1718. राधाविनोदव्याख्या ।

Substance, country-made paper, 9½ × 4½ inches. Folia, 12. Lines, 10 on a page. Extent, 270 s'lokas. Character, Nágara. Date, Sm. 1828. Place of deposit, Lálgolá, Zilá Murshidábád, Kálícharaṇa Upádhyáya. Appearance, old. Prose. Correct.

*Rádhá-vinoda-vyákhyá.* Another commentary on the work referred to in the last preceding notice. By Náráyaṇa, son of Raṅganátha.

Beginning. पितृवचनमवश्यमेव पाल्यं जगति जनानिति शासितुं वनान्तं ।

गतमतिकरुणरसार्द्रचित्तं रघुपतिमेकमुपास्महे सदारं ॥

रङ्गनाथाङ्गजभुवा नारायणमनीषिणा ।

राधाविनोदकाव्यस्य व्याख्या विख्यापयिष्यते ॥

राधाविनोदाख्यं काव्यं चिकीर्षुः निबध्नन् प्रारिप्सितं, समाप्तिकामो रामचन्द्रकविः परमेश्वरनमस्काररूपं मङ्गलमाचरति । मालीति ।

End. तस्य यः शोकः तदप्राप्तिनिबन्धनं दुःखं तद् द्यति खण्डयतीति तत्तादृशं ॥

शुकदेवसमाख्यस्य पण्डितश्रीशिरोमणेः ।

तनयस्य निदेशेन भट्टो नारायणो बुधः ॥

राधाविनोदकाव्यस्य व्याख्यानं स्वयमव्यधात् ।

परोपकाररसिकाः शोधयन्तु तदादरात् ॥ संवत् १८२८ । आश्विने मासि ॥

विषयः । रामचन्द्रकृतराधाविनोदाभिधानकाव्यस्य व्याख्यानं ।

---

## No. 1719. भाषारत्नं ।

Substance, palm-leaf, 9 × 1½ inches. Folia, 13. Lines, 5 on a page. Extent, 336 s'lokas. Character, Bengali. Date, ? Place of deposit, Lálgolá, Zilá Murshidábád, Paṇḍit Kálíbrahma Bhaṭṭáchárya. Appearance, old. Prose and verse. Correct.

*Bhásháratna.* Explanations of the categories of the Sáñkhya, the Vais'eshika, and the Nyáya systems of Philosophy. By Kes'ava S'armá.

Beginning. श्रीकृष्णं सच्चिदानन्दं प्रणम्येशं जगद्गुरुं ।
श्रीमत्केशवशर्म्माहं भाषारत्नं वदाम्यदः ॥
वैशेषिके कणादसूत्रं । द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां साधर्म्म्यवैधर्म्म्याभ्यां, तत्त्वज्ञानं निःश्रेयसहेतुः ।
एषां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां सामान्यविशेषधर्म्माभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः मुक्तेः कारणमित्यर्थः ।

End. तदभाववति तत्प्रकारकनिश्चयत्वं भ्रमत्वं । यथा शुक्तौ इदं रजतमिति । तर्कः प्रसङ्गः स च सिद्धव्याप्तिकयोः । व्याप्याङ्गीकारे व्यापकासञ्जनरूपः ।

Colophon. इति भाषारत्नं समाप्तं ।

विषयः । वैशेषिक-साङ्ख्य-गौतमसूत्रोक्तानां पदार्थानां क्रमेण लक्षणादिकथनं । तेषामवान्तरभेदनिरूपणञ्च ।

---

## No. 1720. विज्ञाननवकं ।

Substance, country-made yellow paper, 8 × 2 inches. Folium, 1. Lines 10. Extent, 28 s'lokas. Character, Nágara. Date, ? Place of deposit, Lálgolá, Zilá Murshidábád, Paṇḍit Kálíbrahma Bhaṭṭáchárya. Appearance, new. Verse. Correct.

*Vijñána-navaka.* The nine essentials of true knowledge—a short poem on the fundamental doctrines of the Vedánta system. By S'añkara A'chárya.

Beginning. तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादेः पदे तुच्छबुद्ध्या ।
परित्यज्य सर्व्वं यदाप्नोति तत्त्वं निदिध्यास्य विद्वान् परं ब्रह्म नित्यं ॥
तदेवाहमस्मि ॥ १ ॥

End. स्वरूपानुसन्धानरूपस्तुतिं यः पठेदादराद् भक्तिभावो मनुष्यः ।
शृणोतीह नित्यं ++युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥

Colophon. इति श्रीशङ्कराचार्य्यकृतं विज्ञाननवकं समाप्तम् ।

विषयः । विवेकोपायकीर्त्तनं ।

---

## No. 1721. साधनदीपिका ।

Substance, country-made paper, 11 × 5 inches. Folia, 127. Lines, 9 on a page. Extent, 2,850 s'lokas. Character, Nágara. Date, ? Place of deposit, Nasípura, Zilá Murshidábád, Bábu Jagannáthaprasáda Gupta. Appearance, very old. Prose and verse. Correct.

*Sádhana-dípiká.* A treatise on the essentials of faith in Kṛishṇa, and the duties appertaining to Vaishṇavas. By Náráyaṇa Bhaṭṭa.

Beginning. श्रीगणेशाय नमः । श्रीकृष्णं परमानन्दं सच्चिदानन्दरूपिणं ।
वन्दे गुरुं कृपासिन्धुं वैष्णवाचारसिद्धये ॥
सदाचाराविरोधेन मन्त्रशास्त्रानुसारतः ।
साधनस्य हि भावस्य दीपिकेयं प्रतन्यते ॥
शङ्करं शङ्करं नत्वा सर्व्वशास्त्रार्थवेदिनं ।
सेविनं सर्व्वधर्म्माणां कान्यकुब्जकुलोद्भवं ॥
वक्ष्ये प्रकाश एतस्मिन् गुरुशिष्यादिलक्षणं ।
दीक्षां विना भगवतो भक्तिर्न स्यात् कदाचन ॥
भक्तिस्तु पुरुषार्थत्वं शास्त्रविद्भिर्निरूपितं ।
सा च लभ्या गुरोरेव नान्यथा दृश्यते क्वचित् ॥
कृपा यस्य भवेत् पुंसः कृष्णस्यामिततेजसः ।
तस्यैवाचार्य्यसङ्गः स्यात् साध्यसाधनभेदकृत् ॥
तत्र भगवद्भक्तौ गुरूपसत्तिः कारणमन्वयव्यतिरेकाभ्यां । तत्रान्वयः श्रुत्या । इत्यादि ।

End. चक्रशङ्खगदापद्मैः प्रद्युम्नः परिकीर्त्तितः ।
चक्रकौमोदकीशङ्खपद्मैः स्यादनिरुद्धकः ॥
चक्राब्जशङ्खगदया लक्ष्यते पुरुषोत्तमः ।
पद्मकौमोदकीशङ्खचक्रैर्विद्याद्धोक्षजं ॥

Colophon. इति नारायणभट्टविरचितायां साधनदीपिकायां समुच्चयो नाम सप्तमः प्रकाशः ॥

विषयः। प्रथमप्रकाशे,—भगवद्भक्तेः परमपुरुषार्थत्वव्यवस्थापनं। गुरूपसदनमेव तत्प्राप्त्युपाय इति निरूपणं। दीक्षाया आवश्यकताकथनं। गुरुलक्षणं। अवलिप्तादिगुरुपरित्याग-विधिकीर्त्तनं। शिष्यलक्षणादिकथनं। वैष्णवैरन्यदेवार्चनादिनिषेधकथनं। तत्-करणे प्रत्यवायकथनञ्च। विष्णुमाहात्म्यकीर्त्तनं। मन्त्रोद्धारप्रकारकथनं। ऋणधना-दिचक्रसंस्थानादिकथनं। दीक्षायां मासनक्षत्रतिथ्यादिशुद्धिनिरूपणं। वैष्णवानां विहिताविहितक्रियाकथनं। दीक्षास्वरूपकथनं। दीक्षाप्रकारकीर्त्तनं। तत्र कुण्ड-मण्डपादिविधिकथनं। दीक्षाप्रयोगकीर्त्तनं। वर्णमयीदीक्षाविधानं। कलावती-दीक्षाविधानं। वेधमयीदीक्षाकथनं। गुरुसेवनविधिकथनं। मन्त्रदानमाहात्म्य-कथनञ्च।

२ये, प्रकाशे,—गृहीतदीक्षस्य सदाचारनियमादिविधानं। प्रार्थनाविधिः। प्रातः-कृत्यदन्तधावनस्नानतर्पणभोजनादिविधिकथनं। देवयात्राविवाहादौ महोत्सवे स्पर्श-दोषाभावनिरूपणं। ऊर्द्ध्वपुण्ड्रलक्षणं। तद्धारणादिप्रकारकथनं। तदधारणे निन्दा-कथनञ्च। तिलकव्यवस्थाकथनं। शङ्खचक्रादिधारणनित्यताकथनं। तप्तचक्रा-दिधारणावश्यकताकथनञ्च। पाषण्डशास्त्रस्य उत्पत्तिकथनं। तत्तन्निरूपणञ्च। तथा सात्त्विक-राजस-तामस-पुराणसंहितादिविभागकथनं। तुलसीमाल्यधारणस्य नित्य-त्वनिरूपणं। अधारणे निन्दाकथनं। गुरुत्यागदोषकथनं। अवैष्णवोपदिष्टमन्त्रस्य निष्फलत्वकथनं। श्रीकृष्णार्चनप्रकारकीर्त्तनं। तत्र प्रबोधनविधिकथनं। अर्घ्य-द्रव्याणि। शालग्रामशिलार्चने आवाहनादिनिषेधकीर्त्तनं।

३ये, प्रकाशे,—शालग्रामस्वरूपनिरूपणं। शालग्रामक्रयविक्रयादिनिषेधः। तत्पूजाया-मधिकारिनिरूपणं। स्त्रीसच्छूद्रयोरपि तत्र अधिकारकथनञ्च। ब्राह्मण-वैष्णवादि-लक्षणकथनं। शुद्धिकथनं। श्रीमूर्त्तिसेवाप्रकारकीर्त्तनं। पञ्चामृतस्नानविधिः। पञ्चामृतपरिमाणनिरूपणं। उद्वर्त्तनविधानं। गन्धादिनिरूपणं। नैवेद्यनिरूपणं। तत्र पात्रादिनिरूपणं। भक्ष्याभक्ष्यनिरूपणं। द्वात्रिंशदपराधनिरूपणं। तुलसीग्रहण-विधिः। तुलसीपूजाया नित्यत्वकथनं। विहिताविहितपुष्पनिरूपणं। दमनकदान-विधिः। श्रीमद्भागवतमाहात्म्यकीर्त्तनं। भागवतासङ्गहे निन्दाकथनं। भगवत्कथा-माहात्म्यकथनं। भगवत्प्रसादमाहात्म्यं। अनिवेदितभक्षण निन्दाकथनं। अवैष्णवा-न्नस्य निन्दितत्वकथनं। भगवन्निवेदितेन देवतान्तरपूजाविधानकथनं। महाप्रसादेन श्राद्धकर्त्तव्यताविधिः। श्राद्धे अनिवेदितदाने दोषकथनं। चतुःषष्ट्युपचारेण भगवत्-पूजनविधिः। पञ्चकालनियमादिकथनं। वाह्याभ्यन्तरभेदाद् द्विविधवैष्णवलक्षण-कथनं। प्रपत्तिविधिकीर्त्तनं। शरणागतिलक्षणं। वैष्णवमाहात्म्यकीर्त्तनं।

४र्थे प्रकाशे,—पद्मपूजाविधानकथनं। एकादशीव्रतनित्यतादिकथनं। उपवास-

विषयः। विधिः। तद्भक्तौ अनुकल्पादिविधानं। श्राद्धदिनेऽपि तत्कर्त्तव्यत्वनिरूपणं। शुद्धापूर्णादिषु व्यवस्थाकथनं। द्वादशीकृत्यविधानकथनं। उन्मीलनी-वञ्जुल्यादिमहाद्वादशीनिरूपणं। महाद्वादशीनिरूपणं। हरिवासरे जागरणनित्यताकथनं। मार्गशीर्षादिद्वादशमासकृत्यनिरूपणं। वसन्तपञ्चमीकृत्यनिरूपणं। शिवरात्रिव्रतविधिकथनं। दोलोत्सवविधिकीर्त्तनं। नृसिंहचतुर्द्दशीविधिकथनं। आषाढ़शुक्लद्वादश्यां तप्तमुद्राधारणविधिकथनं। शयनमहोत्सवविधिः। पवित्रारोपणविधिः। जन्माष्टमीव्रतविधानकथनं। श्रवणद्वादशीविधिकथनञ्च।

५, ६, ७ मे प्रकाशे,—कार्त्तिके व्रतादिविधिकीर्त्तनं। कार्त्तिकस्नानविधिकथनं। भगवत्प्रबोधोत्सवविधानकीर्त्तनं। राधाकुण्डस्नानविधिः। दामोदराष्टकस्तोत्रपाठमाहात्म्यकथनं। कार्त्तिकदिनविशेषे कृत्यविशेषनिरूपणं। गोवर्द्धनपूजाविधिकथनं। द्यूतक्रीड़ाविधिः। भ्रातृद्वितीयाकृत्यविधानं। श्रीकृष्णमूर्त्तिनिर्म्माणविधिकीर्त्तनं। तत्र शिलाग्रहणादिविधिः। तत्र प्रमाणविभागादिनिरूपणं। प्रतिष्ठाविधिकीर्त्तनं। प्रतिष्ठाप्रयोगकथनं। मुद्रागणनिरूपणं। पुरश्चरणविधिकथनं। तत्र भोज्याभोज्यनिरूपणं। आसनादिनिरूपणं। मालासंस्कारविधिः। जपप्रकारकथनं। सिद्धमन्त्रलक्षणं। विष्णुपूजनमकृत्वा भोजनाद्यनुष्ठाने दोषकथनं। महानिशानिरूपणादिकं। अतिथिसत्कारविधिः। अशौचविधिकथनं। गुरुपूजनविधिः। भगवद्भक्तमाहात्म्यकथनं। भावोत्पादकादिविधिकीर्त्तनं। भगवत्पादोदकादिमाहात्म्यकथनं। अन्यप्रकारेण द्वात्रिंशदपराधनिरूपणं। नाममाहात्म्यकथनं। नारायणादिमूर्त्तीणां लक्षणकीर्त्तनञ्च। इति शम्।

---

## No. 1722. सारसङ्ग्रहः।

Substance, country-made paper, 11 × 5 inches. Folia, 181. Lines, 7 on a page. Extent, 2,538 s'lokas. Character, Nágara. Date, ? Place of deposit, Nasípura, Zilá Murshidábád, Bábu Jagannáthaprasáda Gupta. Appearance. old. Prose and verse. Generally correct.

*Sára-sañgraha.* On the mysteries of the Bhaktí system and on transcendental theories regarding faith, dwelling particularly on love as an element of devotion. By Jíva Gos'vámí. The author devotes a portion of his work to the justification of the amours of Rádhá and Krishṇa. He was one of the principal followers of Chaitanya, and the author of several works on the Bhaktí system.

Beginning. श्रीचैतन्यमुखोद्गीर्णा हरेकृष्णेति वर्णकाः ।
मज्जयन्तो जगत्प्रेम्णि विजयन्तां तदाह्वयाः ॥
आददानस्तृणं दन्तैरिदं याचे पुनः पुनः ।
श्रीमद्रूपपदाम्भोजधूलिः स्यां जन्मजन्मनि ॥
श्रीकृष्णचरणं नौमि शरणं मम सन्ततं ।
हरणं सर्व्वदुःखानां स्मरणं यस्य त+पि ॥
श्रीमुकुन्दपदद्वन्द्वं कन्दमानन्दसन्ततेः ।
तनोतु मयि कारुण्यं स्वमाचैकगतौ सक्ततु ॥
स्वमनोदृढिमैकार्थलाभायाखाद्यते मया ।
श्रीरूपकृतग्रन्थानां कोऽपि कोऽपि नवः स्फुटः ॥
जयतां मथुराभूमौ श्रीलरूपसनातनौ ।
यौ विलेखयतस्तत्त्वज्ञापिकां पुस्तिकामिमां ॥
श्रीलरूपकवीन्द्रस्य पादपद्ममहर्निशं ।
स्फुरतां मानसे सम्यक् मम मन्दस्य दुर्म्मतेः ॥ इत्यादि ।

End. श्रीमद्राधाचरणचरितानन्दपीयूषधारां
वारं वारं रसिकसदसि प्रेममत्तः प्रवर्षन् ।
स्वेशाकुण्डे पुनरपि कदा श्रीमुकुन्दाख्य आरा-
न्नेवानन्दं प्रभुरनुपमं हा मदीयं विधाता ॥

Colophon. इति श्रीजीवगोस्वामिकृतसारसङ्ग्रहः समाप्तः ।

विषयः । महाभावस्वरूपप्रकाशनं । भावलक्षणं । रागानुरागपूर्व्वरागस्वरूपकथनं । तत्र वैलक्षण्यकथनं । विरोधखण्डनं । समर्थाया रतेः श्रेष्ठत्वकथनं । गोपस्त्रीणां श्रीकृष्णपरमशक्तित्वकथनं । महाभावं विना श्रीकृष्णमाधुर्य्यातिशय्यानुभवो न जायते इति निरूपणं । निसर्गस्वरूपप्रकाशनं । तत्र निसर्गलक्षणादिकथनं । समञ्जसारतिस्वरूपनिरूपणं । समर्थास्वरूपनिरूपणं । कामानुगास्वरूपकथनं । व्रजगोलोकयोः वैलक्षण्यकथनं । तत्र स्पष्टागूढादिलीलानिरूपणं । परकीयानिरूपणं । तत्र नित्यसिद्धागन्तुकभेदेन द्विविधभावलक्षणं । अत्र वैमत्यखण्डनञ्च । परकीयाणां, तथा कात्यायनीव्रतपरकन्यकानां रतिवैलक्षण्यनिरूपणं । श्रीकृष्णलीलामत्स्यादिलीलयोर्वैलक्षण्यकथनं । श्रीकृष्णनारायणयोस्तुरीयतया एकत्वेऽपि श्रीकृष्णे द्वादशरसानामालम्बन इति निरूपणं । साधकरूपतटस्थरूपयोर्वैलक्षण्यकथनं । धामावकर-रत्यवकर-लीलावकर-साधनावकराणां लक्षणं वैलक्षण्यकथनञ्च । गोकुलाप्रकटप्रकाशात् प्रकटलीलादिविशेषनिरसनं । नन्दनन्दनस्य मथुरादिगमनवादनिरसनं । अप्र-

कटलीलागतस्वकीयात्ववादरूपविमतदुःशैलारोहणसोपानपञ्चकनिरसनं। तत्र यागमायाकार्य्यस्य नश्वरत्वहेयत्ववादनिरसनं। वस्त्रहरणलीलायां राधिकादीनामनूढात्ववादनिरसनं। नन्दनन्दनस्य यथा वसुदेवनन्दनः प्रकाशः तथा राधिकादीनां सत्यभामादयः प्रकाशरूपा इति निरूपणं। प्रकटलीलागतस्वकीयात्ववादनिरसनञ्च। रागमार्गस्य शुद्धतासंस्थापनं। साधनचतुष्टयनिरूपणं। साधकरूपसिद्धरूपयोः सेवनयोर्वैलक्षण्यकथनं। त्रिविधधामावकरनिरूपणं। चतुर्व्विधलीलावकरनिरूपणं। चतुर्व्विधसाधनावकरनिरूपणं। द्विविधालम्बनावकरनिरूपणं। द्विविधाश्रयावकरनिरूपणं। द्विविधकालावकरनिरूपणं। एकविधयोगमायावकरनिरूपणञ्च। लीलायां विराद्धवादखण्डनं। समर्थोत्कर्षप्रदर्शनं। तत्र श्रीकृष्णस्य सर्व्वोत्कर्षनिरूपणञ्च। लीलाया नित्यत्वव्यवस्थापनञ्च।

———

## CLASSIFICATION.

I.—VEDA S'ÁSTRA.
- *a.* Sañhitá (hymns).
- *b.* Bráhmaṇa (ceremonials).
- *c.* A'raṇyaka (do. appropriate for forest life).
- *d.* Upanishad (theology).
- *e.* Vaidika (Sútras, rituals, phonetics, &c.).

II.—AITIHÁSIKA S'A'STRA.
- *a.* Itihása (history).
- *b.* Puráṇa (ancient legends).

III.—KÁVYA S'ÁSTRA.
- *a.* Kávya (poems).
- *b.* Náṭaka (drama).
- *c.* Champú (poetico-prose compositions).
- *d.* Kosha (miscellaneous poetical collections).
- *e.* Upákshyáṇa (tales and romances).

IV.—ABHIDHÁNA S'ÁSTRA (lexicography).

V.—VYÁKARAṆA S'ÁSTRA (grammar).

VI.—CHHANDAH S'ÁSTRA (versification).

VII.—ALAÑKA'RA S'ÁSTRA (rhetoric).

VIII.—JYOTISHA S'A'STRA (astronomy and astrology).

IX.—SMṚITI S'ÁSTRA (law, civil and canonical).

X.—SAṆGÍTA S'ÁSTRA (music).

XI.—SILPA S'ÁSTRA (arts).

XII.—KA'MA S'ÁSTRA (erotics).

XIII.—DARSÁNA S'ÁSTRA (philosophy).
- *a.* Sáñkhya (hylotheistic).
- *b.* Nyáya (dialectic).
- *c.* Vais'eshika (physical).
- *d.* Mimáñsá (ritualistic).
- *e.* Vedánta (monotheistic).
- *f.* Yoga (theocratic).
- *g.* Aparadársanika (minor systems of philosophy).

XIV.—Bhakti S'ástra (faith).
XV.—Tantra S'ástra (mysticism).
XVI.—Vaidyaka S'ástra (medicine).
XVII.—Jaina S'ástra (Jaina religion).
XVIII.—Bauddha S'ástra (Buddhist religion).
XIX.—Anirdishṭa (miscellaneous).

---

# CLASSIFIED INDEX.

II.—Aithiha's'ika S'as'tra.

2.—*a. Itihása.*



2.—*b. Puráṇa.*

III.—Kávya S'ástra.

3.—*a. Kávya.*

IX.—Smṛiti S'a'stra.

X.—SAṆGÍTA S'A'STRA.

XI.—SILPA S'A'STRA.

XII.—KA'MA S'A'STRA.



XIII.—DARSA'NA S'A'STRA.

13.—*a. Sáñkhya.*

13.—*b. Nyáya.*

13.—c. *Vais'eshika.*



13.—d. *Mimáñsá.*

| | No. | Page |
|---|---|---|
| S'ṛíkṛishṇa-stavamálá, ... ... ... | 1614, | 175 |
| Stavamálá, ... ... ... | 1529, | 117 |
| Tattva-sandarbha, ... ... ... | 1670, | 245 |
| Vihári S'atasayyá, ... ... ... | 1398, | 23 |
| Vilakshaṇa-chaturdas'aka, ... ... | 1622, | 199 |

## XV.—Tantra S'ástra.

| | | |
|---|---|---|
| Abhisheka-paddhati, ... | 1536, | 121 |
| A'gama-kaumudí, ... ... ... | 1549, | 129 |
| Bháva-chintámaní, ... ... ... | 1520, | 112 |
| Bhútaḍámara Tantra, ... ... ... | 1598, | 165 |
| Krama-dípiká, ... ... | 1551, 1645, | 132, 215 |
| Lalitá-rahasya, ... ... ... | 1674, | 249 |
| Mantra-bhágavata, ... ... ... | 1511, | 104 |
| Mantra-chandriká, ... ... ... | 1709, | 291 |
| Mantra-chintámaṇi, ... ... ... | 1619, | 195 |
| Mantra-mahodadhi-nauká, ... ... | 1713, | 295 |
| Mantra-mahoddhi-padárthádars'a-ṭíká, ... | 1714, | 296 |
| Nírájana-prakás'a, ... ... ... | 1603, | 169 |
| Syámá-kalpa-latiká, ... ... ... | 1613, | 175 |
| Sádhana-dípiká, ... ... ... | 1721, | 301 |
| Tárá-bhaktí-taranginí, ... ... ... | 1607, | 171 |
| Tárá-vilásodaya, ... ... ... | 1602, | 16[illegible] |
| Tripurá-paddhati, ... ... ... | 1617, | 182 |
| Vidyá-kalpa Sútra, ... ... ... | 1467, | 69 |
| Vṛihanníla Tantra, ... ... ... | 1655, | 229 |

## XVI.—Vaidyaka S'ástra.

| | | |
|---|---|---|
| As'va-chikitsita, ... ... ... | 1648, | 221 |
| As'va-vaidyaka, ... ... ... | 1647, | 217 |
| Jvara-chikitsá, ... ... ... | 1418, | 37 |
| Nánáushadha-vidhi, ... ... ... | 1635, | 208 |
| Rasa-kaumudí, ... ... ... | 1616, | 178 |
| Rasendra-chintámaṇi, ... ... ... | 1422, | 39 |
| Sálahotra, ... ... ... | 1646, | 217 |



Facsimile of the last page of a MS. of the Ávasyaka Sútra, seven hundred and forty-two years old: Samvat 1189 = A. D. 1132.

T. Black & Co., Cal